ज्ञापनाय । ससंबन्धिकमसंबन्धिकं चेति द्वैविध्यमप्यत्र ज्ञाप्यते । एवं नानाप्रकारं सर्वं वस्तु **अंगुल्या** स्वतर्जनीप्रसारणेन **निर्दिशद्भिः** शिशून् प्रति दर्शयद्भिः, **तच्छब्दान्** तत्तद्वस्तुवाचकानि प्रातिपदिकानि तदुपरि प्रयोक्तव्याः प्रथमाद्वितीयादिविभक्तीश्च **ब्रुवद्भिः** उच्चारयद्भिः, श्रावयद्भिरिति यावत् । नेमे शुकवत् शब्दार्थव्युत्पत्तिं विना शब्दप्रयोक्तारः, तथा चेत्, क्वचित् विपर्यासः स्यादिति तज्ज्ञानं तेषां दर्शयति **तदुचिते गोचरे** इति । एवं स्वयं तं शब्दमर्थान्तरे प्रयुञ्जानैरपि शिशोः परं अर्थान्तरे शिक्षा क्रियते चेत्—नियतसंबन्धासिद्धिः स्यात् । तथा नेति ज्ञापयितुं च तदुक्तिः । **पूर्ववृद्धैः**रिति तच्छब्दमुख्यार्थता यस्योचिता तस्मिन्नर्थे पूर्वमेव लब्धज्ञानैरित्यर्थः । **पित्राद्यै**रित्यादिपदेन शिक्षकजनन्यादिग्रहणम् । तैः **मुहुः** पुनःपुनः **शिक्ष्यमाणाः** उत्पाद्यमानज्ञानाः । यद्वा पूर्ववृद्धैः पित्राद्यैस्तदुचिते **गोचरे मुहुः शिक्ष्यमाणाः** प्राप्यमाणशिक्षा इत्यन्वयः । अत्र तदुचिते गोचरे तच्छब्दान् ब्रुवद्भिः इत्यन्वयः पूर्वव्याख्ययोरिष्टः । अर्थं दर्शयद्भिः शब्दांश्च ब्रुवद्भिरित्यतावतैव तल्लाभात् अन्यथाऽन्वय इह दर्शितः । **मुहुः उदितम्**इत्यन्वयं कृत्वा नियमेन जातं ज्ञानमित्यर्थ उक्तो व्याख्ययोः । **शिशवः** एकैकोऽपि शिशुः **स्वात्मनां** स्वस्य स्वस्य । तत्तच्छब्दमात्रश्रवणतः तत्तदर्थज्ञानं **उदितं प्रेक्ष्य**=जायमानतयाऽनुभूय । एकैकोपि शिशुर्वक्तुमसमर्थोऽपि स्वयमेवं चिन्तयति—एतच्छब्दस्यैव श्रवणे एतदर्थज्ञानं जायते, शब्दान्तरश्रवणे तु अर्थान्तरज्ञानम्, न त्वेतदर्थज्ञानम् । कदाचिदंगुल्या, कदाचित् दण्डेन, अन्यदा नेत्रेंगितादिना च निर्देशः क्रियते । अतः शब्दस्यांगुल्यादेश्च न नियतः संबन्धः । अर्थे मम चक्षुःप्रसरणार्थमेव तत्करणम् । अतः तच्छब्दतदर्थयोरेव नियतः संबन्धः । न च पुरुषभेदेन शिक्षाभेदः । न हि घटशब्दस्य पटे शिक्षां प्राप्तवन्तोऽपि तेऽस्मान् परमेवं शिक्षयन्ति ; तथाऽर्थाव्यवस्थाया अदर्शनात् । तैरपि घटशब्देन घटं गृहीत्वैव व्यवहारात् । [एवमनियमो नास्तीति ज्ञापनार्थमेव, तदुचिते गोचरे पूर्ववृद्धैरित्युक्तम्] एवं तत्तच्छब्दतत्तदर्थमात्रे साहचर्यसंपादनं तैः क्रियमाणं तत्तन्मात्रे संबन्धसद्भावादेव । कोऽसौ संबन्धः स्यात् । न तावत् अग्निधूमयोरिव जन्यजनकभावः । न वा हस्तिहस्तिपकादिस्थल इव पाल्यपालकभावादि । न च संकेतकरणम् । पूर्वपूर्वैरप्येवमेव व्यवहारात् । संकेतकरणं चेत्—ततः पूर्वं तद्व्यवहारस्य दुर्निरूपत्वं स्यात् । अत औत्पत्तिकः=स्वाभाविक एव संबन्धः । स चान्यादर्शनात् बोध्यबोधकभाव इत्युच्यते । सैव शक्तिरित्युक्तं भवति ।

---

7. சில வயதுக்கு மேலே பாஷையைப் பயில்வது நிற்க. முதன் முதல் சிசுவாயிருக்கும் போதே உறவினர் செய்யும் சிக்ஷையினின்று சிசு கார்யமன்றி ஸித்தமான வஸ்துவையே சொல்லின்பொருளாகத் தெளிகிறது காண்க என்கிறார் மேல்ச்லோகத்தினால்—குழந்தைகள், முன்னமே சொல்லும் பொருளும் அறிந்திருக்கும் தகப்பன் முதலானவர்களால் குடம் குடை முதலான வஸ்துக்களையும் தாய் அம்மான் முதலான உறவினர்களையும் தங்கள் விரலை நீட்டிக் குழந்தைகளுக்குக் காட்டியும் அப்பொருள்களுக்கான சொற்களையும் அவற்றோடிணையும் விபக்தி(வேற்றுமை)களையும் குழந்தைகள்

अथ जन्माद्यधिकरणम्—

---

**तद्विभक्तीरपिचेति** किमर्थमुक्तम्। न च शिशून् प्रति विभक्त्यर्थशिक्षणं क्रियते अम्बातात-घटपटादिशब्दार्थशिक्षणस्यैव यथाभाष्यं दर्शनादिति चेत्—अत्र प्राभाकरेणैवं शंकितम्—वयमन्विताभिधान-वादिनः। अन्विते शक्तिरेव शब्दानामिष्टा। शिशुशिक्षास्थले तत्तदर्थमात्रस्य प्रदर्शनात् साहचर्यभूयस्तया तत्स्मरणमात्रम्; न ततः शक्तिग्रहः—इति। तत्रोत्तरम्—शिशुशिक्षायां क्रमेण वा प्रथमत एव वा विभक्ति-शिक्षाया अपि दर्शनात् नान्विताभिधानभंगः। श्वा श्वेति शुनि शिक्षिते, धावति धावतीति धावने च शिक्षिते, अथ श्वा धावतीति विभक्तिशिक्षापि क्रियते। यद्वा अन्नादनकाले श्वानं निर्दिश्य, श्वा अन्नमत्तीति बहुकृत्वः प्रयोगे अन्वित एव सिद्धेऽर्थे शक्तिं शिशुर्गृह्णाति। इत्थञ्च यदि त्वया प्रथमतः कार्य एव व्युत्पत्त्या सर्वं वाक्यं कार्यपरमेवेति सिद्धपरत्वमुपेक्ष्यते, तर्हि सिद्धे व्युत्पत्तेरेव प्रप्रथमत्वात् सर्वं वाक्यं सिद्धपरमेवेति कार्यपरत्वमेव त्यक्तव्यं स्यादिति अत्र द्वितीयश्लोके आपादनमभिमतम्। किञ्च त्वया लोके प्रथमतः क्रियारूपकार्य एव व्युत्पत्तिः, वेदे क्रियाजन्यस्यापूर्वस्यैव कार्यत्वमिति उभयोर्मध्ये कतरो लिङर्थ इति विमृश्य वेदस्यैव मुख्यत्वात् अपूर्व एव लिङादिविधिलकाराणां शक्तिरिति क्रियाकार्यरूपार्थ-त्यागः कृतः। तद्वदेवोपनिषदि, 'यन्न दुःखेन संभिन्नम्' इत्यादिपूर्वकाण्डवाक्ये च सिद्धमात्रप्रतीत्या अपूर्वरूपकार्यपरलिङाद्यभावेऽपि बोधः कुतो नेष्यते। तत् सिद्धं सिद्धेऽपि व्युत्पत्त्या यथायथं सर्वं वाक्यं प्रमाणमिति सिद्धवस्तुजिज्ञासाऽपि भवितुमर्हतीति ॥ ७ ॥

अथानन्तराधिकरणे विषयवाक्यादिगतपदविशेषतात्पर्यमात्रं वक्तुमाह **अथ जन्माद्यधिकरणमिति**।

8. 'नात्राधिकरणोत्थिति. पूर्वपक्ष.सिद्धान्तप्रकारा निरूप्यन्ते। तेषां श्लोकस्थपदैः सूचनमात्रम्। लक्षणतः प्रतिपत्तव्यत्वात् ब्रह्मणः लक्षणवाक्यमेव प्रथमं विचार्यम्। तस्य लक्षणबोधकत्वायोगात् ब्रह्म-प्रतिपत्तिदौःस्थ्यात् न ब्रह्म जिज्ञास्यमित्याक्षेपोऽत्राधिकरणे परिह्रियते। तत्र वाक्ये **इमानीति** पदं दृश्यमानप्राणिमात्रग्रहणेन भूतान्तरव्यावर्तनार्थं चेत्, सर्वकारणत्वं ब्रह्मणो न सिद्ध्येदिति सर्वग्रहणा-विरोधेन तत्पदतात्पर्यं वर्णनीयम्। तत्राद्वैती मन्यते—जिज्ञासाधिकरणे जगन्मिथ्यात्वमुक्तमित्यस्म-त्सिद्धान्तात् **इमानीति** पदम् एवं मिथ्यात्वेन गृह्यमाणानीत्यर्थकम्। एषां मिथ्याभूतानां यतस्सत्यादुत्पत्तिः

---

கவனிக்கும் படி கூறியும் அந்தந்தச் சொல்லின் முக்கியமான பொருளிலே சிக்ஷிக்கப்பட்டனவாய் அடிக்கடிக் காட்டிக் கூறுவதாலே தங்களுக்கு அந்தந்தச் சொற்களை மட்டும் கேட்கும் போது அந்தந்தப்பொருளே அறியப்படுவது கண்டு நாளடைவில் இச்சொல்லுக்கு இது பொருளென்று தெளிகின்றன. இப்படி சொல்லுக்கும் பொருளுக்கு முள்ள ஸம்பந்தமே சக்தி யென்னப்படும். ஆகையால் ஸித்தவஸ்துவிலேயே வ்யுத்பத்தி முதன்முதல் வருகிற தென்க. ஆனவின்பு உபநிஷத்து ஸித்தமான ப்ரஹ்மத்தையே ப்ரதானமாகத் தெரிவிக்கக் கூடுமாகையால் அதுவிஷயமான விசாரம் தொடங்கத் தடையில்லை. (7)

**भूतानीति पदेन वस्त्ववगतौ सत्यामिमानीति यत्**
**गायन्त्यामखिलेश्वरोऽगणि जगज्जन्मादिभिर्लक्षणैः ।**
**तैनादर्शि विचित्रतैव जगतः सृज्यस्य ; तेनापि त-**
**त्स्रष्टुर्ब्रह्मण उज्ज्वला गुणगणाः जिज्ञास्यताहेतवः ॥ ८ ॥**

---

तद् ब्रह्मेति श्रुतिसूत्रयोरर्थः । एवं मिथ्यावस्तुकल्पनाधिष्ठानत्वोक्त्या जगत एव सर्वस्याभावे, सर्वज्ञत्व-सर्वेश्वरत्वादेः ब्रह्मणि सत्यत्वायोगात् निर्गुणत्वमपि ब्रह्मणः सिद्धमिति । तस्य प्रतिविवक्षेह श्लोके

अत्र श्रुतौ जन्म.जीवन.विनाशानां स्पष्टमुक्ततया मिथ्यापदार्थानां कल्पनामात्रतया जन्मादेर्दुर्वचत्वात्, पूर्वाधिकरणस्य जगन्मिथ्यात्वपरत्वमित्यर्थज्ञापकस्य पदस्य कस्यापि सूत्रादावभावाच्च यथानुभवं जगतः सत्यत्वात् **इमानी**ति पदं प्रत्यक्षादिप्रमाणावगम्यमानचिदचिन्मयजगन्निष्ठ.नाना.वैचित्र्यप्रदर्शकम् । **ईदृशविचित्रकार्यनि**-रूपितनिमित्तोपादानतारूपविचित्रहेतुत्वाश्रयत्वात् ब्रह्म तदुचितानन्तकल्याणगुणाकर एव । **इदमेव** 'कारणत्वाक्षिप्तसर्वज्ञत्वादिगुणाः पूर्वप्रतिपन्नाकाराः' **इति** भाष्येऽभिसंहितम् । सूत्रकारः सत्यत्वज्ञानत्वादि-रूपलक्षणेऽपि सुवचे तद्विहाय जगत्कारणत्वमादौ श्रुतिवत् स्वयमप्युपस्थापयतीति यत्, तत्रेदमेव कारणम्, यत्—अस्य मुख्यलक्षणत्वाभावो मृषावादिमतो न ग्राह्यः । अस्यैव गुणगणज्ञापनमुखेन निरतिशय-बृहत्त्वरूपब्रह्मत्वोपपादकत्वञ्च । पूर्णशारीरकविचार्यसर्वकल्याणगुणगर्भत्वं जगत्कारणवाक्यस्यैव । 'प्रयन्त्यभि-संविशन्ति, इति मोक्षरूपतुरीयलयपर्यन्तबोधनादिति । **इदं** सर्वमभिप्रैत्ययं श्लोकः । श्लोकार्थस्तु—

यतो वा इमानि भूतानि जायन्ते इत्यादिरूपायां अखिलेश्वरप्रतिपादनौपयिकतया **भूतानी**ति पदेन सर्वकार्यवस्त्ववगतौ सत्याम् तादृशेश्वरावगतेर्जातत्वात् अनपेक्षिततया व्यर्थवद्भासमानं **इमानी**ति पदं यत् **गायन्त्यां**=प्रयुञ्जानायाम्—**इमानी**ति यादृशपदप्रयोगवत्यामिति यावत् । भृगुवल्ल्यां श्रुतावित्यर्थसिद्धम्, जगज्जन्म.स्थिति.लयरूपैस्त्रिभिर्लक्षणैर्युक्ततया अखिलेश्वरो**ऽगणि**—लक्षित आसीत्, **तेन** इमानीति पदेन । यच्छब्दप्रतिसंबन्धी तच्छब्दः । लक्षणैरखिलेश्वरलक्षके भृगुवल्लीवाक्ये यत् इमानीति पदं गीतम् तेन पदेनेति **तेने**त्यन्तपदजातनिष्कृष्टार्थः । एवमध्याहारं विना स्वरसनिर्वाहे सति, इतिशब्दाध्याहारेण, ईश्वरोऽगणीति यत् तेनेति व्याख्यानमनादेयम् । **तेन** इदम्पदेन ईश्वरसृज्यस्य जगतश्चिदचिदात्मकस्य समष्टिव्यष्ट्यादिरूप-

---

8. *தைத்திரீயத்தில்* **भूतानि** *என்னும் சொல்லால் கார்யமான வஸ்துக்கள் அறியப்பட்டிருக்க.* **इमानि** *என்ற எந்தச் சொல்லைக் கொண்டுள்ள* **यतो वा इमानि भूतानि** *என்ற ப்ருகுவல்லியில் உலகத்தின் பிறப்பு, இருப்பு, இறப்பு என்ற லக்ஷணங்களைக் கொண்டு ஸர்வேச்வரன் அறிவிக்கப் பட்டிருக்கிறானோ, அந்த* **इमानि** *என்ற சொல்லால் படைக்கப்படும் உலகிலுள்ள பலவி சித்ரத் தன்மையே அறிவிக்கப்பெற்றதாகும். அதனல் அதைப் படைக்கும் ப்ரஹ்மத் திற்குள்ள சிறந்த குணங்கள் இங்கே ப்ரஹ்மவிசாரம் செய்வதற்குக் காரணமானவை காண்பிக்கப் பட்டனவாம்,* **इमानि** *என்ற சொல் எதற்கு*

अस्येत्युद्दिश्य सौत्रं पदमथ तत् अचिन्त्यादि भाष्यं विवव्रे,
तत्तन्मानप्रसिद्धं जगदभिदधती तद्विचित्रत्वमाह ।

विचित्रत्वमेवादर्शि । न तु इमानीति पदस्य परिदृश्यमानानीत्यर्थ इव, दृश्यत्वान्मिथ्येति अनुमेयमिथ्यात्वानीत्यप्यर्थः । प्रत्यक्षादिसर्वप्रमाणविरोधात् । वैचित्र्यप्रदर्शनस्य फलं किमिति चेदाह तेनेति । तेन च वैचित्र्यप्रदर्शनेन जगत्स्रष्टुः ब्रह्मणः उज्ज्वलाः निरतिशयकल्याणभूताः सर्वज्ञत्व. सर्वशक्तित्वादिगुणगणाः ब्रह्मनिष्ठां जिज्ञासतां=विचारयतां प्रति हेतुभूताः अदर्शिषतेति पूर्वोक्तक्रियापदस्य वचनविपरिणामेनानुषंगः । प्रतिनियतानेकगुणविशिष्टोपासनात्मकपरविद्यागणे यथेच्छं किञ्चिदवलम्बनेन परिपूर्णब्रह्मप्राप्तिरूपस्य फलस्य वक्ष्यमाणतया तदर्थे गुणगणविशिष्टतया हि ब्रह्म विचार्यमिति भावः । तथाच सर्वेश्वरलक्षणस्य सर्ववस्तुग्रहणेनैव कार्यतया इमानीति संनिकृष्टमात्रग्राहकपदप्रयोगो न युक्त इति च न मन्तव्यम् । तस्याऽऽवश्यकवैचित्र्यैकज्ञापकत्वादिति ।

श्लोकार्थोऽयं नाधिकरणपूर्वपक्षसिद्धान्तरूपः । अत्र भूतानीति पदे स्वरसतः, जीवन्तीति पदबलाच्च व्यष्टिचेतनवाचित्वप्रतीतावपि समष्ट्युपलक्षकत्वस्य वक्तव्यतया भूतपदं सर्वकार्यवस्तुपरम् । जीवन्तीत्यस्य च सन्तीत्येवार्थ इति—भूतपदस्य यथार्थपरतयाऽपि प्रयोगदर्शनात् वस्तूनि सत्यान्येव, न मिथ्यारूपाणीति चांशद्वयज्ञापकं वस्तुपदम् । अखिलेश्वर इति कार्यकारणोभयेश्वरत्वमुक्तम् । एकवचनेन लक्षणैरिति बहुवचनेन च जन्मादीनां त्रयाणां समाहारस्य लक्षणत्वे दलकृत्याभावात् लक्षणत्रयमिति स्वीकारेऽपि न लक्ष्यानेकत्वम् ; अविरोधेनैकत्रैव सर्वसमावेशसंभवात् विशेषणभूतानामपि लक्षणानां लक्ष्यभेदकत्वायोगादिति ज्ञापितम् । जन्मादिभिरित्यनेन ब्रह्मणोऽपि विशिष्टवेषेण कार्यत्वात् जन्मादिकं तन्निष्ठमेव । यदि 'अचिदादिनिष्ठमेव जन्मादिकम् ; तस्य लक्षणत्वं तु उपलक्षणतया' इति स्वीक्रियते, तदापि न पूर्वप्रतिपन्नाकाराभावः ; कारणत्वाक्षिप्तगुणगणानामेव सदेवेत्यादिवाक्येषु प्रतिपन्नत्वात् । उपलक्ष्याकारश्चाखिलेश्वरत्वं निरतिशयबृहत्त्वमित्यधिकरणार्थसूचनमपीति दिक् ॥ ८ ॥

९. श्रुतौ इमानीति पदेनैवं वैचित्र्यं बोधितमस्तीत्येतत् सौत्रेदम्पदव्याख्यानभूतभाष्यादवगतमित्याह अस्येति । न हि बहुवचनेन वैचित्र्यं ज्ञाप्यते ; किंतु दृश्यमानार्थकेदम्पदेन । सूत्रेऽपि तत् इदम्पद-

சிலவற்றை விட்டு எதிரிலுள்ளவற்றை மட்டும் கொள்ள வேண்டுமாகில் அச் சொல் வேண்டியதாகும், ஸர்வேச்வரலக்ஷணம் சொல்லுமிடத்திலே ஸர்வத்தையும் கொள்ளவேண்டியிருக்க இது கூடுமோ என்னில்—உலகில் சேதநாசேதநங்கள் விசித்ரவிசித்ரமாக இருக்கின்றன என்று காட்டுவதற்காக அச்சொல் என்க. அதனல் அவ்வளவையும் படைக்கும் அவனுடைய ஆச்சர்யமான குணங்கள் குறிக்கப்பெறும், அக்குணங்களை நன்கறிவதற்காகவே யன்றோ ப்ரஹ்ம விசாரம் செய்வது. (8)

**श्रौती सौत्रीदमुक्तिस्त्विति हृदि निदधत् ; तत्र चाचेतनांशे**
**वैचित्रीमाह पूर्वं पदमथ** नियतेत्यादिकं चेतनांशे ॥ ९ ॥

मस्ति, **अस्येति** प्रयुक्तत्वादिति भावः । अत्र श्लोके **सौत्रं पद**मिति द्वितीयान्तम् । तद्वाचकं **तदिति** पदमपि तथा । **भाष्य**मिति प्रथमान्तम् । **हृदिनिदध**दित्येतत् भाष्यविशेषणम् । अभिप्रयदिति तदर्थः । अभिप्रायाकारसमर्पकं **तत्त**दित्यारभ्य **इती**त्यन्तम् । तथाच **निदध**दित्यन्तमेकं वाक्यम् । **तत्रचेत्यादि** वाक्यान्तरम् । तदयमन्वयार्थः—**श्रौती** यतो वा इमानीति श्रुतिगता **इदमुक्तिः इमानी**ति इदंशब्दः, तथा **सौत्री** एतद्द्वितीयसूत्रस्था **इदमुक्तिः=अस्ये**ति इदम्शब्दः **तत्तन्मानप्रसिद्धं** प्रत्यक्षानुमानागम-विज्ञातं **जगत्** चेतनाचेतनप्रपञ्चम् **अभिदधती** ; प्रमाणसिद्धसर्वप्रपञ्चबोधिका सतीति यावत् । **तस्य** जगतो **विचित्रत्वं** विलक्षणनानाप्रकारत्वम् **आह** वक्ति **इति हृदिन्निदधत्** इत्येतदभिप्रायकं सत् **भाष्यं** श्रीभाष्य-ग्रन्थः **अस्येति** सौत्रं पदम् **उद्दिश्य**=प्रतीकरूपेणोद्धृत्य **तत्** व्याख्येयं पदम् [**कर्म**] **अथ** तदनन्तरम् **अचिन्त्येत्यादि** अचिन्त्यपदं विवरणवाक्यस्याऽऽदौ यत्र तादृशं सत् **विवव्रे**=व्यवृणुत—विवृतवत् । भाष्यं **अस्ये**ति प्रतीकधारणपूर्वकम् **अचिन्त्ये**त्यादिना विवरणमकरोदिति यावत् । **अचिन्त्यादिभाष्य**मित्यनेन तदुपरितनवाक्यमात्रग्रहणे सौत्रपदनिर्देशस्य ततः प्रागेव सत्त्वात् तेन तदुद्देशाकरणात् **उद्दिश्ये**त्यस्य नान्वयः स्यात् । अतो **भाष्य**पदेन द्वितीयसूत्रव्याख्याभूतकृत्स्नप्रथमभागग्रहणम् । तस्याचिन्त्यादिकत्वं कथमिति चेत्, **आदि**पदं व्याख्यानभाष्यारम्भपरमिति । तत्र चेति । व्याख्यानभाष्ये अचिन्त्येति समस्तपदमचेतनांशवैचित्र्यप्रदर्शकम् । **अथ** तदनन्तरं **नियतदेशकाले**त्यादिपदं चेतनांशवैचित्र्यमा**हे**त्यर्थः । अनेन भूतानीतिपदं चेतनाचेतनोभयपरमिति च ज्ञापितम् ॥

ननु **तत्तन्मानप्रसिद्ध**मिति किमुच्यते । जगतोऽनेकमानसिद्धत्वोक्त्या वैचित्र्यं कथं सिध्येत् । एक एव ह्यग्निः प्रत्यक्षेणानुमानेनाऽऽप्तवाक्येन च गृह्यते । तावता तत्र वैचित्र्यं कथमिति चेत्— **जग**त्पदेनानेकवस्तुसमुदायस्यैवोक्त्या तेनैव पदेन तद्विचित्रत्वस्यापि बोधः । **अस्येति** इदम्पदस्य संनिकृष्ट-प्रत्यक्षप्रमाणसिद्धमात्रग्राहित्वात् सर्वजगद्ग्रहणं न भवतीति शंकावारणाय **तत्तन्मानप्रसिद्ध**मिति । तेनानुमानागमसिद्धजगदंशानामपि ग्रहणादधिकवैचित्र्यलाभः । नात्रैकस्य सर्वमानसिद्धत्वमुच्यते । किंतु जगतोंशभेदेन । **रत्नसारिण्यां** तु **तत्त**दिति **मानप्रसिद्ध**पदविशेषणं कृत्वा ते ते मानप्रसिद्धा आकारा यस्य जगत इति बहुव्रीहिरुक्तः । तेनैकैकवस्तुन्यपि प्रत्यक्षसिद्धाकाराः तदन्येऽनुमानसिद्धाः तदधिकाश्चागमगम्या उक्ता भवन्तीति वैचित्र्यसुभिक्षमिति भावः । ननु लक्षणवाक्ये तद्ब्रह्मेत्यत्र

9 ஸ்ரீபாஷ்யத்தில் இவ் வ்திகரணஸூத்ரத்தில் உள்ள **अस्य** என்ற சொல்லை எடுத்து அதற்கு விவரணம் செய்வதாகும் **अचिन्त्यविविध** இத்யாதி பாஷ்யம். அப்படி விரித்துரைத்தது—ச்ருதியிலுள்ள **इमानि** என்கிற **इदं**பதமும், ஸூத்ரத்தில் **अस्य** என்றுள்ள **इदं**பதமும், ப்ரத்யக்ஷத்தில் கான்

अथ शास्त्रयोनित्वाधिकरणम्—

कार्यत्वात् घटवत् सकर्तृ विमतं (सकर्तृकमिदं?) क्षित्यादि ; कार्यं च तत्
सर्वं सावयवत्वतः, स भगवान् आधारसिद्धान्ततः ।

---

समानाधिकरणवाक्यत्वात् समानाधिकरणवाक्यानाञ्चाखण्डार्थपरताया अद्वैतीष्टत्वात् कथं लक्षणोक्ति-रत्रेति चेत्—उपरि समानाधिकरणवाक्यार्थविचारस्य करिष्यमाणतया तत एतन्निरासो गृह्यताम् । एभिरेवाऽऽचार्यैः **प्रमेयमाला**ऽऽख्ये ग्रन्थे सामानाधिकरण्यविवेचनं विस्तरेण कृतमस्तीति ध्येयम् । अत एतावदेवात्रोक्तम् । **श्रुतप्रकाशिका**याञ्च स ग्रन्थोऽन्ववादि ॥ ९ ॥

10. तृतीयाधिकरणे किञ्चित् वक्ष्यत इत्याहाथेति । तृतीये शास्त्रयोनित्वाधिकरणे तार्किकैः—अनुमानेनैवेश्वरस्य सिद्धत्वात् नौपनिषदलक्षणवाक्यत एव स प्रतिपत्तव्य इति तज्जिज्ञासाया असंभवशंका कृता । अनुमानञ्च क्षित्यङ्कुरादिकं सकर्तृकम्=तदुपादानोपकरणसंप्रदानप्रयोजनाभिज्ञकर्तृकम्, चेतनाधिष्ठितोपादानोपकरणादिजन्यञ्च कार्यत्वात् घटादिवदिति । कार्यत्वरूपहेतोः साधकानि चानुमानानि भूभूधरादिकं कार्यं सावयवत्वात्, महत्त्वे सति क्रियावत्त्वात्, महत्त्वे सति मूर्तत्वात् घटवदिति । कार्यत्वञ्च उत्पत्तिमत्त्वं कृतिसाध्यत्वं वा । **प्रकरणपञ्चिकादि**ग्रन्थे कार्यत्वमुत्पत्तिमत्त्वमित्युक्तम् । **न्याय-रत्नाकरे** कृतिसाध्यत्वमिति । भाष्ये तनुभुवनादिकमिति तनुमपि पक्षीकृत्य सावयवत्वादिना कार्यत्व-साधनात् तन्वाः उत्पत्तिमत्त्वस्य निर्विवादतया साधनीयत्वाभावात् कृतिसाध्यत्वरूपं तदिष्टमिति प्रतीयते । तथा 'कार्यत्वप्रतिनियतं शक्यक्रियत्वम्' इति भाषितत्वात् तन्वङ्कुरादौ उत्पत्तिमत्यपि शक्य-क्रियत्वाभावे शक्यक्रियत्वस्योत्पत्तिमत्त्वव्यापकत्वाभावात् कृतिसाध्यत्वरूपमिष्टम् । अत्र यथार्हं ग्राह्यम् । इमं तार्किकपक्षं पूर्वार्धेन संगृह्णाति । **सकर्तृ विमत**मिति पाठे सकर्तृ इति शब्दनिष्पत्तिः समासान्त-विधेरनित्यत्वेन समर्थनीया । अन्यथा "नद्यृतश्च" इति कप्प्रत्ययस्याऽऽवश्यकत्वात् । **विमतं** विवादास्पदम् । सकर्तृकत्वेन निश्चितसपक्षवारणायेदम् । **सकर्तृकमिद**मिति पाठे तु न क्लेशः । इदम्पदं विमतस्थाने । **इदं** विवादास्पदं **क्षित्यादि** अवनि-जलधि-महीधरादिकं सकर्तृकं कार्यत्वात् घटवदिति प्रथमानुमानम् । अत्र हेतुभूतस्य कार्यत्वस्य स्वरूपासिद्धिपरिहाराय साधनार्थं द्वितीयानुमानम् । चकारः पूर्वसाध्य-समुच्चये । साध्यवाचकपदोपरिस्थितेः । **सर्वं तत्** क्षित्यादिकं कार्यत्ववत् सावयवत्वात् घटवदिति । अत्र

---

பது மட்டுமன்றி ப்ரத்யக்ஷ அனுமான. சப்தப்ரமாணங்களால் அறிவிக்கப் பட்டதால் நம் புத்தியில் கிட்டியுள்ள உலகிலுள்ள பலவகை விசித்ரத் தன்மையே குறிக்கப்படுமென்கிற கருத்திலுலென்க. அதில் அசிந்த்ய இத்யாதியும், நியத இத்யாதியுமான இரு ஸமஸ்தபதங்கள் இருக்கின்றன, முதற்பதம் அசேதந வுலகின் விசித்ர வகையையும் இரண்டாம் பதம் சேதனரின் பலவகையையும் விளக்கும். (9)

**इत्येतन्न घटेत ; विश्वजनने यत् कर्तृकालैक्ययोः**
**कार्यत्व(त्वं)व्यभिचारिभेदगणना(नात्) हेतोर्विरोधोऽथवा ॥ १० ॥**

प्रथमानुमानेन सिद्धः कर्ता जीव एवास्त्विति सिद्धसाधनदोषो न ; यतः **सः** कर्ता **भगवानेव** ; नित्य-ज्ञानचिकीर्षाप्रयत्नवान् ईश्वर एवेत्यर्थः । भगवच्छब्दार्थगतं षाड्गुण्यं तु न तार्किकेष्टम् । कथं न जीव इत्यत्र हेतुमाह **आधारसिद्धान्तत** इति । **न्यायदर्शने** सिद्धान्तपदार्थं चतुर्धा विभज्य चतुर्थोऽधिकरणसिद्धान्तः उक्तः । यत्सिद्धावेव प्रकृतसिद्धिः, सोऽनुषङ्गसिद्धोऽर्थः अधिकरणसिद्धान्त इति । प्रकृते क्षित्यादौ सकर्तृकत्वं जीवस्वीकारमात्रेण न सिध्यति ; तस्येदृशमहाकार्यकर्तृत्वायोगात् । अत ईश्वरं विना एतत्साध्यानिर्वाहात् अधिकरणसिद्धन्तात् स ईश्वर एवेति । एवं पक्षभूतक्षित्यादिमहाकार्य-स्वरूपपर्यालोचनया योग्यताबलात् साध्यरूपधर्मत्वमीश्वरस्य निश्चीयत इति पक्षधर्मताबलादीश्वरसिद्धि-रित्यप्युच्येत । तदेवात्राधारसिद्धान्तत इति शब्दान्तरेणोक्तम् । **न्यायपरिशुद्धौ** अयमधिकरणसिद्धान्तो नेष्टः, सर्वतीर्थकरसंमतः सर्वतन्त्रसिद्धान्तः, एकतन्त्रमात्रसिद्धः प्रतितन्त्रसिद्धान्तः, कतिपयतन्त्रमात्र-सिद्धः अभ्युपगमसिद्धान्तः इत्येतेषु त्रिषु कुत्राप्यधिकरणसिद्धान्तोऽन्तर्भवत्येव । अनुषंगसिद्धोऽर्थः सर्वसंमतो वा एकतन्त्रसंमतो वा कतिपयतन्त्रसंमतो वा स्यादेवेति । तावता अधिकरणसिद्धान्तस्य नासिद्धान्तत्वमिति न प्रकृतप्रमेयहानिः । **आधारसिद्धान्तत** इत्यस्य अनुमाने आश्रयभूतो यः पक्षः तत्र सिद्धो योऽन्तः=निर्णयः, तस्मात्—पक्षधर्मत्वार्हविषयनिश्चयादित्येवार्थो वा । इमां तार्किकशंकां शमयति **इत्येत**दित्यादिना । अत्र **भाष्यम्**, 'महीमहार्णवादीनां कार्यत्वेऽप्येकदैव एकेनैव निर्मिता इत्यत्र प्रमाणाभावात्" इत्यादि । तदर्थमाह **विश्वजनन** इत्यादिना । **यत्** यस्मात् कारणादेवम्, तस्मात् **एतत्**=तदुक्तं न घटेतेत्यन्वयः । तुरीयपादे **कार्यत्वं व्यभिचारिभेदगणनात्** इत्येकः पाठः ; **कार्य-त्वव्यभिचारिभेदगणना**(ष्) इति पाठान्तरम् ।

द्वितीयपाठे—**कर्तृकालैक्ययोः** कर्त्रैक्ये कालैक्ये च विशेषणे इष्टे कार्यत्वभेदगणना व्यभिचारिभेद-गणना च यतो भवतीत्यर्थः । अयं भावः—ऐक्यविवक्षणाभावे जीवान् आदाय सिद्धसाधनम्, एकदा

---

*10 பூமி கடல் மலை முளை முதலானவை யெல்லாம் நித்யமாகாமல் கார்ய மாயிருப்பதால் படைக்கிறவனொருவனுலானவை என்ன வேண்டும்; குடம் குடைமுதலானவை போல, இவை கார்யமானவை என்பதை எப்படியறிவ தெனில். எல்லாம் பல அவயவங்கள்=அம்சங்கள் சேர்ந்து உருவாயிரு ப்பதாலென்க. படைக்கிறவன் அவன் பகவானேயாக வேண்டும், ஜீவனாக மாட்டானென்பது அதிகரண ஸித்தாந்தத்தால் விளங்கும். அதிகரண ஸித்தாந்தமென்று ஒருவகை ஸித்தாந்தத்திற்குப் பெயர், அல்லது ஆதார மான இவ்வனுமானத்தில் பக்ஷமான பூமி முதலானவற்றில் ஸித்தமான சில முடிவுகள் மூலமாக என்று பொருள் கொள்க. இப்படி தார்கிகர்*

केनचिन्मही कृता, अन्यदाऽन्येन महार्णव इत्याद्युक्तिसंभवात्। एककालावच्छिन्ना कर्तृजन्यता विवक्षितेति चेत्—रथगोपुरादाविवानेकैः कर्तृभिः क्षित्यादीनां युगपज्जननसंभवात् स एव दोषः। एककालावच्छिन्नैककर्तृजन्यत्वं पक्षतावच्छेदकसामान्यधर्मावच्छिन्ने साध्यम्; तत्तद्घटव्यक्तिर्दृष्टान्त इति चेत्—कार्यत्वहेतोस्तत्रैव घटत्वादिसामान्यधर्मावच्छिन्नेऽपि सत्त्वात् घटत्वाश्रयसामान्यनिरूपितकर्तृताश्रयैकव्यक्तिकत्वस्य तत्राभावात् व्यभिचारः। एवं पक्षसपक्षवृत्ति.कार्यत्वसामान्यरूपहेतौ साधारणानैकान्तिकत्वमुक्तम्। तद्वारणाय यदि पक्षमात्रवृत्तिः कार्यत्वविशेषो हेतुत्वेन विवक्ष्यते, तर्हि पक्षमात्रवृत्तिहेतुरसाधारण इत्यन्यरूपानैकान्तिकता। ननु कोऽसौ पक्षमात्रवृत्तिर्हेतुरिति चेत्—अत्र **रत्नसारिण्यादि**व्याख्ययोः असंभावितजीवकर्तृकत्वविशिष्टकार्यत्वं पक्षमात्रवर्तिहेतुः, विपुलतरकार्यत्वं विरुद्धहेतुः, कार्यत्वसामान्यं व्यभिचारिहेतुरित्युक्तम्। "क्रमेणोत्पद्यमानसर्ववस्तुमतं कार्यत्वम्" इति भाष्यस्थले **श्रुतप्रकाशिकायाम्** त्रैकाल्यवर्तिसमस्तवस्तुनिष्ठत्वविशेषितकार्यत्वमिति कश्चित् धर्मः उक्तः। युगपदुत्पत्तिर्न विवक्षितेति ज्ञापनाय **त्रैकाल्यव**र्तीति, **क्रमेणोत्पद्यमाने**ति च। पक्षघटकयावद्व्यक्तिनिष्ठत्वविशिष्टकार्यत्वमित्यर्थः। न च—तद्व्यक्तिनिष्ठत्वविशिष्टकार्यत्वं तत्रैव स्यात्; सर्वव्यक्तिनिष्ठत्वविशिष्टत्वरूपेण कार्यत्वं कुत्र स्यादिति—शंक्यम्; पक्षान्तर्गततत्तद्व्यक्तिनिष्ठत्वविशिंष्टकार्यत्वान्यतमरूपः कार्यत्वविशेष इत्यर्थात्। अयञ्च धर्मः पक्षमात्रवृत्तिः। असंभावितजीवकर्तृकत्वरूपविशेषणं सिद्धान्तिदृष्ट्या असिद्धमपि स्यादित्यन्यदेतत्। तथाच कार्यत्वरूपहेतौ सामान्यं भवतीति वा पक्षमात्रवृत्ति वेति भेदगणना, तदनुसारेण साधारणासाधारणरूपद्विविधव्यभिचारिभेदगणना चेति। तथा साध्यकोटौ कर्त्रैक्यं हेतुकोटौ कालैक्यञ्चेति स्वीकारे इति **कर्तृकालैक्ययो**रित्यस्यार्थः; भाष्ये, "कार्यत्वं किं युगपदुत्पद्यमानसर्ववस्तुगतम् उत क्रमेणोत्पद्यमानसर्वगतम्" इति विकल्पनात् हेतौ कालैक्यमिति पक्षज्ञापनात्। तत्र सर्ववस्तुनिष्ठैककालावच्छिन्नोत्पत्तिमत्त्वरूपहेतुरसिद्ध इति अप्रसिद्धस्य **कार्यत्वभेदस्य** कार्यत्वविशेषस्य गणाना स्यात्। यदि क्रमिककार्यनिष्ठमेव कार्यत्वं हेतुः, तर्हि तेन क्रमेणानेकजीवकृतत्वस्यैव पक्षे सुवचतया धर्म्यन्तराकल्पनरूपलाघवात् पक्षतावच्छेदकावच्छिन्नकार्यतानिरूपकैककर्तृकत्वरूपसाध्याभाव एवात्र एककर्तृकत्वनिश्चयाविषयक्रमिककार्यनिष्ठकार्यत्वहेतुना साध्येतेति हेतोरस्य **विरोधः** विरुद्धत्वरूपहेत्वाभासता स्यात्। तथाच **भाष्यम्**—"क्रमेणोत्पद्यमानसर्ववस्तुगतत्वे अनेककर्तृकत्वसाधनात्

---

அனுமானத்தாலே ஈச்வரனை ஸ்தாபிக்கின்றனர். இது கூடாது. உலகப் படைப்பு ஒரே காலத்தில் ஒருவனாலேயே என்று உங்கள் நோக்கம். அது விஷயத்தில் கார்யத்வம் என்ற யுக்தி ஸாதகமாகாது. உலகில் கார்யங்களெல்லாம் ஒரே ஸமயத்தில் ஒருவரால் செய்யப்படவில்லையே. உண்மையில் உலகப்படி பார்த்தால் பலரால் பல காலங்களில் பூமி முதலானவை படைக்கப் பெற்றவை என்று விபரீதமாக அனுமானம் செய்யத் தான் உங்கள் யுக்தி காரணமாகும். (10)

**यत् कल्पनालघिमलालसमानसानां**
**कर्त्रैक्यसिद्धिरिति ; नादरणीयमेतत् ।**

---

विरुद्धता" इति । अत्रापि पाठे **भेदगणना**दिति स्वीकृत्य कार्यत्वरूपहेतौ **व्यभिचारिभेदस्य** नाना-
व्यभिचारित्वस्य गणनादित्यप्यर्थमाहुः ।

**कार्यत्वं व्यभिचारी**ति पाठे त्वयमर्थः—कर्त्रैक्यं किंरूपम् ? पक्षतावच्छेदकावच्छिन्ननिरूपित-
कर्तृताश्रयैकव्यक्तिकत्वं पक्षे साधनीयम् ; दृष्टान्ततावच्छेदकधर्मावच्छिन्नं प्रति कर्त्रैक्यं दृष्टान्ते उ-
पाद्यम् ; एककुलालादिकर्तृकघटादिकार्यसमूहो दृष्टान्त इति चेत्—तदा कार्यत्वरूपहेतोः घटत्वादि-
सामान्यधर्मावच्छिन्नेऽपि सत्त्वात् तत्रानेककुलालादिकर्तृके कर्त्रैक्याभावात् कार्यत्वं व्यभिचारि । न
यद्धर्मावच्छिन्ने कार्यत्वं तद्धर्मावच्छिन्ने तद्धर्मावच्छिन्ननिरूपितकर्तृतावदेकव्यक्तिकत्वमिति व्याप्तिः
घटत्वावच्छिन्ने च एतत्साध्याप्रसिद्ध्या कथमप्रसिद्धप्रतियोगिकाभावोक्तिः ? तदनिरूपणे च कथं व्यभि-
चारनिरूपणमिति चेत्—तर्हि अप्रसिद्ध्या व्याप्तिनिरूपणाभावे कथं सद्धेतुता ? तदभावे चासद्धे-
त्वमवर्जनीयम् । तदुपपादनं कथमिति चेत्—तद्धर्मावच्छिन्नं प्रति एककर्तृकत्वं नाम स्वावच्छिन्न-
निरूपकैककर्तृकत्वसंबन्धेन तद्धर्मविशिष्टत्वम् ; व्यधिकरणसंबन्धेन तद्धर्मवद्भेदः तद्धर्माभावो वा कार्यत्वरू-
हेतुमति घटत्वावच्छिन्ने उच्यते इति व्यभिचारित्वोपपत्तिः । तदाह **भेदगणना**दिति । यदि पक्ष-
दृष्टान्तभेदेन धर्मभेदग्रहणेन समन्वयप्रयासं विहाय सर्वकार्यनिरूपितैककालावच्छिन्नैककर्तृकत्वमे
साध्यमितीष्यते, तर्हि तस्य घटादौ कुत्राप्यभावात् कार्यत्वहेतुना तद्दृष्टान्तेन साध्याभाव एव साध्य
इति विरोध एव । तदाह हेतोर्विरोधोऽथवेति । अत्रापि **भेदगणना**दित्यन्वेति । कर्तृभेदकालभेदयोः
सर्वत्र गणनात् साध्यवद्भेदस्यैव सर्वत्र गणनादित्यर्थः । ननु साध्यमप्रसिद्धमिति चेत्—तर्हि कथं साध्यता
साध्यत्ववत् बाध्यत्वमपि सुवचम् । 'शशविषाणमस्तीति सुवचम् ; शशविषाणं नास्तीति न सुवचम्' इति
को वा ब्रूयात् ? ननु तृणकाष्ठतैलादिषु धूमेनाग्निसाधने अग्नित्वेनैवाग्नेः साध्यत्वेऽपि तत्तत्पक्षधर्मत्वार्ह-
यादृशाग्नेः तादृशत्वस्यार्थात् सिद्धिवत् क्षित्यादिपक्षवृत्तित्वार्हतासर्वज्ञसर्वशक्तत्वैककर्तृजन्यत्वस्यैवेति चेत्
असर्वज्ञ-किञ्चिदतिशयितशक्तिकानेकपुरुषनिरूपितक्रमिकजन्यताया अपि पक्षधर्मतार्हत्वात् । तस्मात्
कार्यत्वानुमानं दुष्टमिति ॥ १० ॥

11. ननु कर्तृगतैकत्वस्य न साध्यकोटिघटकता । सामान्यतः सकर्तृकत्वे साध्यमाने कर्तुरनेकत्व-
स्वीकारापेक्षया एकत्वे लाघवमिति लाघवज्ञाने सति एकत्वमपि सिध्यति । यथा अग्निमान् धूमादित्य
अग्नेः काञ्चनमयत्वे लाघवमिति लाघवज्ञाने सति काञ्चनमयाग्निमानिति साध्यलाभः इत्यत्राह यदिति
'श्रियमिच्छेत् हुताशनात्' इति आराधनप्रयासाभावात् आशामात्रमिदम् । **अतः** अग्नेः काञ्चनमयत्ववत्तुल्य-
वानुमानिकं कर्त्रैक्यमिति तार्किकः प्रतिबोधनीय इति ध्येयम् । अस्यामाशंकायां **भाष्ये** समाहितम्—
"क्षेत्रज्ञानामेवोपचितपुण्यविशेषाणां शक्तिवैचित्र्यदर्शनेन" इत्यादिना । तदर्थश्च कर्तुरनेकत्व एव लाघवम्

**तत् व्याप्तिमेव हि रुणद्धि ; सकर्तृकत्वं**
**किं कल्प्यते लघिमसंपदमीप्समानैः(प्सुभिस्तैः ?) ॥ ११ ॥**

कर्तृजीवैरेव निर्वाहात् धर्मिण एवान्यस्याकल्पनात्। भवतां तु धर्मिकल्पना तदेकत्वादिनानातद्धर्मकल्पना चेति गौरवमेवेति । अत्र प्रकारान्तरम्—कर्तारं विना उपादानादिकारकैर्निर्विवादसिद्धैरेव कार्यस्य सिद्धिस्वीकारे कर्तुरेवाकल्पनात् लाघवमिति पश्यत। तथाच कर्तृसाधकत्वाभिमतहेतोरप्रयोजकतया व्याप्तिभंग इत्यसिद्धिरेवेश्वरस्येति। श्लोकार्थस्तु—साध्यकोटौ कर्त्रैक्यस्यानिवेशेऽपि अनेकधर्मिकल्पनादेक-धर्मिकल्पनं वरमिति कल्पनायां **लघिम्नि** लाघवे **लालसम्** आशायुक्तं मानसं येषां तेषाम्। इच्छार्थकलालसाशब्दवत् इच्छाविशिष्टार्थकं विशेष्यनिघ्नं लालसपदमप्यस्ति। अत एव द्वितीयव्याख्याने तयोक्तिः। अनेन षष्ठ्यन्तेन लाघवापेक्षायामिति, लाघवज्ञाने इति उक्तं भवति। **इती**ति। इति यत्, एतत् नादरणीयम् ; यतः **तत्** भवद्वचनं कार्यत्वहेतोः सकर्तृकत्वव्याप्तिमेव रुणद्धि=वारयति। तदित्यस्य लाघवमिति नार्थः। **लघिम**पदस्यैव श्लोके सत्त्वात् तस्य च पुल्लिंगत्वात्। त्वद्वचनं कर्तुरेवाभावेऽत्यन्तलाघवमिति ज्ञानस्यावकाशं प्रदाय, '**हेतुरस्तु, साध्यं मास्तु**' इत्यप्रयोजकशंकामुद्भावयति हीत्यर्थः। तदेवाह **सकर्तृकत्व**मिति। लघिमरूपां **संपदं** महाधनमपेक्षमाणैः सकर्तृकत्वं किं कल्प्यते=किमर्थमनुमीयते। तदेव नानुमीयताम्। नास्तीत्युच्यताम्, अधिकसंपल्लाभादिति। अत्र **ईप्समानै**रिति पदनिर्वहणक्लेशमपहाय **ईप्सुभिस्तै**रिति पाठादरणं युक्तम्। नन्वेवं सर्वानुमानोच्छेदापत्तिः, सर्वत्र साध्या-कल्पने लाघवस्य सुवचत्वात् अप्रयोजकशंकासंभवात्। अथानुकूलतर्के कार्यकारणभावादिमूले सति सा शंका निष्फलेति चेत्—तर्ह्यत्रापि कर्त्रभावे कार्याभाव इत्यनुकूलतर्को भवितुमर्हति। अत एव रचनानुपपत्त्यधिकरणे चेतनाधिष्ठानमनुमानेन साधितम्। अत एव भाष्यकारैः पूर्वोक्तरीत्या प्रकारान्तरेणैवेदं दूषितमिति चेत्—तार्किकैः पटकारणभूततुरीवेमाद्यभावेऽपि खण्डपटोत्पत्तिरिष्टा। पाकजोत्पत्तिविचारे घटादीनामापरमाणु भंगेऽपि द्व्यणुकादिक्रमेण पक्वघटादिपर्यन्तोत्पत्तिर्दण्डचक्रकुलालादिकारणाभावेऽपि स्वीकृता। सर्गारम्भे परमाण्वादौ कर्म केवलादृष्टादेव ; न तत्र नोदनाद्यपेक्षेति चोक्तं **कणाद**सूत्रे। अतो यथादर्शनं कर्तुरभावेऽप्यत्र कार्योत्पत्तिरस्तु। रचनानुपपत्त्यधिकरणाभिप्रायस्तु—यदि सांख्यैर्दृष्टानुसारेण

11 'கர்த்தா உண்டா இல்லையா என்ற விவாதத்திற்கிடமான வஸ்துக்கள் எல்லாம் கர்த்தாவைக் காரணமாக வுடையனவாகும், கார்யமாயிருப்பதால்' என்னும் அனுமானத்திலே கர்த்தா ஒருவனே என்பதும் ஸித்திக்கும். எவ்வாறெனில், ப்ரத்யக்ஷத்தாலே வஸ்து ஸித்திப்பதானல், எப்படி காண்கிறோமோ அப்படியே கொள்ளவேண்டியதாகும். அனுமானத்தால் ஊஹிக்கும்போது எவ்வளவு அவசியம் இசைந்தாகவேண்டுமோ அதற்கு மேல் ஊஹிக்க முடியாது. ஆகையால் லகுபக்ஷமே அனுமானத்திற்கு விஷயமாகும். ஆக ஒருவனே கர்த்தா என்பதே போதுமாயிருக்கப் பலர் கர்த்

क्ष्मादावंशिनि कारणान्तरगणे यत्नेऽप्यदृष्टे तनौ
पक्षे दृष्टविरूपताऽस्त्वपरधा कल्प्या न कर्तर्यपि ।
सेयं न्यायपथप्रहीण(?)युगपत्सर्गक्षयौ नेक्षितौ
सर्वस्येह न कल्पनापरिकरस्तन्नानुमेयः परः ॥ १२ ॥

सुखदुःखमोहात्मककार्यं प्रति तत्सूक्ष्मरूपसत्त्वरजस्तमोविशिष्टवस्तुरूपकारणमिष्यते, तदा कर्तापि स्वीकार्यः ; न चेत्, प्रकृतिरपि न कल्प्येत्येवंरूपः। कल्पितश्च कर्ता ईश्वर एवेत्यंशं तु न तदधिकरणं स्थापयति। किञ्चैवं शंकायामेवोत्तरश्लोकप्रवृत्तिरिति न कश्चित् दोषः। वस्तुतस्तु जीवातिरिक्तकर्तृरूपत्वदिष्टसाध्याभावे हेत्वभावस्त्वया दुर्वच इति भावः। **रत्नसारिण्यां लघिमसंपद्**मित्यस्य 'अणिमा महिमा चैव' इत्युक्ताष्टसिद्ध्यन्तर्गतलघिमरूपसिद्धेरपि **संप**त्पदबलेन प्रतीत्या, 'तत्सिद्धिकामाः पाशुपताः ; तैरेवेश्वरानुमानम्-अनुमानेनेश्वरसाधनममुक्तम्' इत्यर्थोपि लभ्यत इत्युक्तम्। उपरि तन्मतदूषणप्रकारदर्शनात् तदप्यस्तु ॥ ११ ॥

12. दृष्टानुसारेण सकर्तृकत्वानुमानेऽपि जीवैरेव निर्वाहात् **न परस्य** सिद्धिरित्युक्तम्। दृष्टानुसारे जीवकर्तृकत्वमेव साधनीयं स्यादित्यतोऽपि नेश्वरसिद्धिः । तत्र दृष्टानुसारत्यागे च त्वदीयानुमानानां बहूनां भंगात् त्वदिष्टेश्वरासिद्धिरेवेत्याह त्रिभिः श्लोकैः। प्रथमे तदिष्टबहनुमानस्थलप्रदर्शनम् ; द्वितीये तत्राऽऽपाद्यमानांशकीर्तनम् ; तृतीये तद्रीत्या प्रकृतकर्तरि तदनिष्टापादनेन जीवैककर्तृकत्वनिगमनम् । **क्ष्मादा**विति । **क्ष्मा**—क्षितिः । **अंशिनि** सावयवे दृष्टविरूपताऽस्तु=सावयवान्तरेषु दृष्टप्रकार इह मा भूत् ; तद्वैधर्म्यमस्तु। क्षित्यादिकं कार्यं सावयवत्वादित्यनुमानेन कार्यत्वरूपे हेतौ सिद्धे खलु तेन सकर्तृकत्वमनुमेयम्। तदेव न ; अस्तु सावयवत्वम्, मास्तु कार्यत्वमिति प्रत्यवस्थानात्। तथाच महीमहार्णवादेर्नित्यत्वमेवास्तु। ननु सृष्टिप्रलययोरिष्टतया कथं नित्यत्वमिति चेत्—कथं तयोः सिद्धिः । श्रुत्येति चेत्—तर्हि तयैव श्रुत्या सर्वेश्वरस्याऽपि सिद्धेरनुमानवैयर्थ्यम्। सृष्टिप्रलयावस्थ-

*தர்கமென்கிற கல்பனை கொண்டால் கௌரவம் = அதாவது அதிகச் சுமை ஏற்றினதாகுமென்பர் தார்க்கிகர். இப்பேச்சை ஆதரிக்கவேண்டாம் லகு பக்ஷமே சரியென்றால் ஒரு கர்த்தாவைக்கூட கல்பிக்க வேண்டா என்ற பக்ஷம் மிகவும் லகுவாயிருப்பதால் அதையே கொள்வது தகும்; எதற்கு கர்த்தாவொருவன் வேண்டுமென்று கல்பிப்பது? மேலும் உலகிலுள்ள ஜீவர்களே கர்த்தர்களாகப் போதுமாயிருக்க அதிகப்படியாக ஒருவன் தான் எதற்கு? (11)*

*இனி மூன்று ச்லோகங்களாலே தார்க்கிகருக்குப் பல அநிஷ்டங்களை விளக்குகிறார்—*

*12 பல அவயவங்களையுடைய பூமிமுதலானவற்றிலும், உபாதாநாதிகளான அசேதனமான காரணங்களிலும், ஈச்வரனுடைய ப்ரயத்னத்திலும்,*

नुमीयेते इति चेत्, न्यायकुसुमाञ्जल्युक्ततदनुमानं भाष्येऽत्र "न च युगपदुत्पत्तिप्रलयौ" इत्यादिना निरस्तमेव। तदिदं तृतीयपादेनात्रोक्तम्, "युगपत्सर्गक्षयौ सर्वस्य नेक्षितौ" इति। **सर्वस्य** जगतः। यद्वा सर्वघटसर्वपटादेः। तन्नाशादौ दृष्टे सति तन्न्यायेन सर्वपृथिव्यादिनाश उन्नीयेतेति। **सर्वस्ये**त्यनेन अंकुरादावनित्यतया दृष्टे नित्यत्वोक्त्यसंभवेऽपि कार्यत्वादेः क्षित्यादावस्वीकारशंका न वारयितुं शक्येत्यपि ज्ञाप्यते। क्षितिसमुद्रादेः खातपूर्तादिना प्रतिदिनं दृश्यमानोपचयापचयादिकमेव संमन्तव्यम्। न सर्वात्मना पूर्णलोप इति मीमांसकमतोक्तिरिह। "न कदाचिदनीदृशं जगत्। सर्वदा भूमिजलादिकमस्ति। प्रजा अपि सदा सन्ति। वेदस्याध्ययनं सर्वदैव प्रचलति" इति तदुक्तेः। एवं कार्यत्वसाध्यकानुमानं दूषितम्। कार्यत्वासिद्धौ च सकर्तृकत्वानुमानं दूरापेतम्। अत्र सकर्तृकत्वानुमाने अप्रयोजकशंकायां तैरुक्तम्, क्षित्यादिकारणानि उपादानादीनि चेतनाधीनव्यापाराणि अचेतनत्वादिति ; तत्राह **करणान्तरगणे** इति। तत्रापि चेतनसापेक्षता मा भूदित्याशंका तुल्या। तार्किकैः क्षित्यादिकं ज्ञानचिकीर्षाप्रयत्नवत्पुरुषकार्यं कार्यत्वादित्युक्ते अनुमाने ज्ञानचिकीर्षे किमर्थे इत्याशयेनाह **यत्नेऽपी**ति। यत्नः ज्ञानचिकीर्षासमानाधिकरणः यत्नत्वात् जीवयत्नवदिति तदीयमनुमानम्। जीवयत्नस्य जन्यत्वात् जनकतया चिकीर्षायाः तस्या अपि जनकतया ज्ञानस्याऽऽवश्यकत्वेऽपि ईश्वरयत्नस्य नित्यत्वात् तत्र ते किमर्थे? अतोऽत्र हेतौ जन्यत्वमुपाधिरिति पुनश्शंका। **अत्रोदयना**दिभिरुक्तम्—यत्नवत् ज्ञानचिकीर्षयोरपि कार्यान्वयव्यतिरेकबलात् यत्नवत् साक्षात् कारणतेति ज्ञानचिकीर्षासिद्धिः। अथवा यत्नविषयत्वं यत्र, तत्र ज्ञानचिकीर्षाविषयत्वमिति व्याप्तिसत्त्वात् व्याप्यस्य व्यापकप्रयुक्तत्वात् ज्ञानचिकीर्षयोरपीश्वरे सिद्धिः। इदमेव यत्नस्य ज्ञानचिकीर्षासापेक्षत्वमिति—तदयुक्तम्; ज्ञानचिकीर्षयोर्यत्नकारणतैव ; न कार्यं प्रति साक्षात्। कुलालपितृवत् तयोरन्यथासिद्धत्वात्। यत्नस्य स्वसमानाधिकरणज्ञानादिसमानविषयकत्वमिति व्याप्तिरपि नेष्यते। अतो यत्नत्वेन न तदनुमानसंभवः। तदत्र यत्ने ज्ञानादिसापेक्षत्वस्य दृष्टस्यानिष्टेर्विरूपतैवास्तु। तथा अदृष्टेनैव सर्वसिद्धौ ईश्वरासिद्धिरित्यत्र तार्किकोक्तम्—अदृष्टं चेतनाधिष्ठितं अचेतनत्वादिति। तत्राप्यप्रयोजकशंका। तथा **तना**वपि। अत्र तनुभुवनादिकं सकर्तृकं कार्यत्वादित्यनुमाने पक्षतया निर्दिष्टाः यास्तनवो जीवानाम्, न तदर्थकं **तनुपदम्**। किंतु ईश्वरसाधने तार्किकहते, यदस्माभिरुच्यते क्षित्यादिकं कर्तृजन्यश्चेत् तनुजन्यं—तनुभृज्जन्यं स्यात्, तनुमदीश्वरकर्तृ-

---

ஜீவரின் அத்ருஷ்டத்திலும், ஈச்வரனுக்கு சரீரத்தை யிசைந்தால் அதிலும் நீங்கள் எதெதை ஸாதிக்கிறீர்களோ, அதது இல்லாவிட்டாலென்ன? உலகில் கண்ட ரீதிக்கு மாறுகிறதே யென்னில், மாறுதல் தானென்ன? மாறுகை தகாதென்னில், நீங்கள் ஸாதிக்கிற கர்த்தாவிடத்திலும் நாங்கள் வேறு ஸாதிப்பதையும் இசைக. இங்கும் கண்ட ரீதிக்கு மாறான நிலை கல்ப்பிக்க முடியாதே. மேலும் பூமி முதலானவை எல்லாம் ஸ்ருஷ்டிமுதலில் சேர்ந்து உண்டானவை, ப்ரளயத்தில் சேர்ந்து அழிகின்றன. ஒரே ஸமய

**नित्यं क्षित्यादि सांशं भवदपि घटतां ; कारणानां परेषां**
**व्यापारः कर्त्रपेक्षाविधुर इति भवत्वस्य कर्तुः प्रयत्ने ।**

---

कत्वमेव स्यादिति—तत्र ते आहुः, 'यदि तनुः स्यात्, कार्योत्पत्तिस्थले दृश्येत' इति। तत्रास्मदुक्तिः अस्तु तनुः, सा कार्यसमीपे मा भूत्, अदृश्या वा तत्रास्तु इति। तथा कार्यसमीपे अवर्तमानत्वे दृष्टवैरूप्यमिति चेत्—अस्त्विति ब्रूमः। श्लोके **पक्ष** इति पदं **क्षमादावंशिनी**त्यादौ सर्वत्रान्वेति। **अंशिनी**ति क्षमादिविशेषणम्, न तु पृथक् सप्तम्यन्तम्। क्षमादि-कारणान्तरगण-यत्न-अदृष्ट-तनुपक्षकानुमानानि विवक्षितानीति पक्षपदप्रयोगतो ज्ञायते। तानि व्याख्यानेऽस्माभिरिह दर्शितानि। तर्करूपेणापि सर्वप्रयोगः स्यात्। यदि दृष्टव्याप्तिभंगात् अत्र सर्वत्राप्रयोजकशंका न युक्ता, क्षित्यादिकर्तापि शरीरी स्यात्। शरीराद्यधिष्ठानस्यादृष्टाधीनतया तदपि तस्य स्यात्। तदर्थं कर्मवत्त्वमपि। कर्माधीनत्वे ज्ञानस्य कतिपयैकविषयकतया तस्यासर्वज्ञत्वमपि स्यात्; दृष्टव्याप्तिभंगायोगात्। तदेवं पाशुपताधिकरणे, "अधिष्ठानानुपपत्तेश्च, करणवच्चेन्न भोगादिभ्यः, अन्तवत्त्वमसर्वज्ञता वा" इति सूत्रत्रयं मनसिकृत्य यत् शास्त्रयोनित्वाधिकरणे भाषितम्, तत्संग्रह इहेति ध्येयम्॥ उत्तरार्धस्थं **सेय**मिति पदद्वयं पूर्वार्धेऽन्वितम्। **न्यायपथप्रहीणे**ति **सर्गक्षय**विशेषणम्। युगपत्सर्गक्षययोरीक्षणमपि नास्ति, अनुमेयत्वमपि न भवतीति विवक्षितत्वात् असमस्तं स्यादन्यत् किमपि पदम्, **न्यायपथच्युतौ च युग**पदित्यादिरूपम्। अतः सर्वस्य युगपज्जन्मक्षययोरसिद्ध्या हेत्वभावात् नेश्वरानुमाने परिकरोऽस्ति। सामान्यतः कर्त्रनुमानेऽपि जीववत् परो नानुमातुं शक्यत इति॥ १२॥

13. **दृष्टविरूपताऽस्तु** इति कृतमापादनमुपपादयन् तत्तत्पक्षकस्थले विशिष्याऽऽपाद्य तत्तत् प्रदर्शयति **नित्य**मिति। प्रथमे क्षित्यादिपक्षककार्यत्वसाध्यकानुमाने हेतुभूतं सांशत्वं न कार्यत्वसाधनक्षमम्, नित्यत्वमेवास्त्वित्यापादनात्। अतस्तत् **सांशं भवदपि**=सावयवत्वे सत्यपि नित्यमेव **घटतां** भवतु; कार्यत्वं तस्य माऽस्तु। द्वितीयानुमाने **परेषाम्** ईश्वरादन्येषां क्षित्यादिकारणानां व्यापारः

---

த்தில் பிறப்பும் அழிவும் **என்**பதை ஏன் இசையவேண்டும். எந்த ஜாதி வஸ்துவையும் ஒன்று போனாலும் மற்றொன்றிருப்பதா**க**வே காண்கிறோம். ஆகையால்ஸர்**வ**நாசமில்லை. அ**த**னால் ஈச்வரனைக்கல்பிக்க வழியில்லை.

13 இதனையே சிறிது விவரிப்போம்—பூமி முதலானவை கார்யமே யாகும் ஸாவயவமாயிருப்பதா**லென்கி**றீர். ஸாவயவமா**னா**லும் கார்**யமா**கா மிருந்தாலென்ன. **கா**ரணங்களின் வியாபார**ம்** கர்த்தா**மூல**மாகவே வருமென் **கி**றீர். கர்**த்**தா இராமலே வந்தா**லென்**ன, ஈச்வரனுக்கு ப்ரயத்னம் போல் ஜ்ஞானம், உலகினைப் படைக்க விருப்பம் என இரண்டுங்கூட வேண்டுமென் கிறீர். அவனுடைய ப்ரயத்னம் அநாதியெ**ன்**று நீங்கள் இசைந்**தி**ருப்பதால் ஜ்ஞானமும் **வி**ருப்பமும் எதற்கு? ஜீவனுடைய அத்ருஷ்டம் அசேதனமானை

**नापेक्ष्ये धीचिकीर्षे ; तनुभृत इह चादृष्टमीष्टे विधातुं**
**कार्यं ; देही दवीयानपि सृजतु जगत् ; वर्ष्म दृश्येतरद्वा ॥ १३ ॥**

कर्तृनिरपेक्ष इति भवतु । पूर्वश्लोकोक्तैकरूप्याय, 'कारणान्तरगणः ईश्वरनिरपेक्षव्यापार एव भवतु' इत्यर्थो प्राह्यः । यत् तृतीयानुमानम् यत्नोऽयं ज्ञानचिकीर्षासापेक्षः यत्नत्वादिति, तत्राप्यप्रयोजकशंकेत्याह **अस्येति** । सिषाधयिषितस्येश्वररूपस्य कर्तुर्यः प्रयत्नः, तद्विषये भवद्भिर्धीः चिकीर्षा च नापेक्ष्ये इत्यर्थः । युक्तिः पूर्वश्लोकव्याख्यानोक्ता । तुरीयानुमाने पक्षभूतमदृष्टं (कर्तृ) **तनुभृ**न्निष्ठं—जीवनिष्ठमेव सत् **इह** क्षित्यादौ अन्तर्गतं कार्यं **विधातुम्**—उत्पादयितुम् **ईष्टे**=समर्थं भवतु । पूर्वमेव केवलादृष्टादपि कार्योत्पत्तेर्दर्शितत्वात् । **तनुभृत** इत्युक्तिः, पूर्वम् **अस्येती**श्वरप्रस्तावात् तदननुवृत्तिव्यक्तये ; ईश्वरनिष्ठस्य सिद्धान्तिसंमतस्य संकल्परूपस्यादृष्टस्य ग्रहणे ईश्वरसिद्धेरवर्जनीयत्वापत्त्या तदग्रहणायेति । अथवा अदृष्टस्य कार्यजननाय कारणसंबन्धोऽपेक्षितः तदाश्रयजीवद्वारैवोपपादनीय इति ज्ञापनाय तदुक्तिः । स्वाश्रयतनुभृत्संयुक्तत्वादिसंबन्धेन ह्यदृष्टस्य **कार्यो**पादानादौ संनिहितत्वं वक्तव्यम् । पञ्चमानुमाने वक्तव्यमाह **देही**ति । क्षित्यादिकं न शरीरिजन्यम्, तत्कर्ता **न** शरीरी । यदि कर्ता शरीरी स्यात्, स कार्यसमीपे कारणेषु शरीरं व्यापारयन् उपलभ्येत । न च शरीरं दृश्यते । तथा पाषाणान्तवतर्जातभेकजननाय तत्रापि शरीरेण संनिहितेन भाव्यम् । तत्र शरीरप्रवेशासंभवादपि तस्य कारणत्वं **न** भवतीति पूर्वपक्ष्याशयः । **अत्र समाधिः**—देही सन्नेवेश्वरः **दवीयानपि**—कार्यदेशे देहाभावेपि, देहविशिष्टाकारेणाधिकदूरस्थोपि कार्यं सृजेत् ; मान्त्रिकादीनां दूरे वर्तमानानामेव कार्यकरत्वदर्शनात् । अत एव कठिनपाषाणान्तस्संबन्धो भेकोत्पत्तये नापेक्षितः । शरीरं न कारणमसंनिहितत्वादित्यत्र हेतोरप्रयोजकत्वमेवमुक्तम् । अथासंनिहितत्वमसिद्धमित्यप्याह **वर्ष्मे**ति । संनिहितमेव **वर्ष्म** वपुः ; अथाप्यदृश्यं सूक्ष्मत्वात् । अत एवास्य अप्रतिघातात् पाषाणप्रवेशोऽपीति । अतोऽस्य कर्तुः शरीरित्व. कर्मवश्यत्वादिप्रसंगात् नायमीश्वर इ[illegible] ॥१३॥

14. सकर्तृकत्वानुमाने दृष्टानुसारत्यागे त्वदभिमतानुमानान्तरेष्वपि दृष्टानुसारत्यागापत्तेरीश्वरासिद्धिरिति श्लोकद्वयेनोक्तम् । तत्र यदि दृष्टानुसारे निर्भरः, स सकर्तृकत्वानुमानेऽपि युक्त इति

---

யால் ஈச்வர ப்ரேரணை வேண்டுமென்கிறீர். இல்லாவிட்டாலென்ன? ஈச்வர ப்ரயத்னம் அசேதனமாயிற்றே. அதை ப்ரேரணை செய்வது யார். ஈச்வரனுக்கு தேஹத்தை யிசைந்தால் கார்யம் உண்டாகுமிடமெல்லாம் அது இருக்கவேண்டுமே என்கிறீர். மாந்த்ரிகர் வெகுதூரத்திலும் கார்யம் செய்யவில்லையா. நாம் காணவாகாவிடினும் காணவாகாத ஸூக்ஷ்மதேஹம் அங்கங்கு இருக்கவும் கூடுமே. (13)

14 இப்படியெல்லாம் வாதம் செய்வது நேர்மையல்ல ; உலகிற் காண்கிற ரீதிக்கு முரணுகுமென்னில், உலகில் குயவன், கருமான் முதலான எந்த கர்த்தாவும் உடல் முதலானவற்றோடு கூடியே கார்யங்களைச் செய்

दृष्टानुगुण्यविरहादिह कल्पनानामासामसिद्धिरिति चेत्, अपि कर्तरि स्यात् ।
जन्म क्रमेण ददृशे जगतः(ति?)क्षयो वा ; क्लृप्तिश्च दर्शनवशादनयोस्तथा स्यात्॥१४॥

अथ समन्वयाधिकरणम्—

निगमयति **दृष्टेति** । सेयमुभयतस्पाशा रज्जुः प्रतिपक्षिणाम् । श्लोकार्थस्तु—क्षित्यादिकं कार्यं सांशत्वादित्याद्यनुमानेषु अप्रयोजकशंकामुखेनास्मत्कृतानां सांशेष्वन्येषु दृष्टरीत्युपेक्षया तद्वैरूप्यात्मककार्यत्वादिकल्पनानां दृष्टानुरूप्यं नास्तीति **असिद्धिः**=अयोगश्चेत् शंक्यते, तर्हि कर्तर्यपि सर्वज्ञसर्वशक्तौ दृष्टजीवानुरूप्याभावादसिद्धिरेव स्यात् । ननु सृष्टिप्रलययोरेककालावच्छिन्नसर्वोत्पत्तिसर्वनाशोत्पत्तिरूपयोर्जीवासाध्यतया ईश्वरकर्तृकत्वमवर्जनीयमित्यत्राह **जन्मे**ति । सर्वस्य युगपदुत्पत्तिर्विनाशश्च निष्प्रमाणकौ । जगति वस्तूनां क्रमेणैव जन्मक्षययोर्दर्शनात्, क्षित्यादिकं क्रमेणैवोत्पद्यमानं क्रमेणैव च विनाशवत् कार्यत्वात् घटादिवदिति जन्मक्षययोः क्षित्यादौ क्लृप्तिः=अनुमितिः **तथा** क्रमिकत्वविषयिण्येव स्यात् । अतः सृष्टिप्रलययोरेवासिद्धिरिति ॥ अत्र **जगत** इति पदेन सर्वलोकग्रहणे तस्य जन्मनः क्षयस्य च क्रमेण दर्शनमसिद्धम् । अतः **जगती**ति पाठः स्यात् । जगति घटादीनां क्रमेणैव जन्मनाशौ दृश्येते इत्यर्थः । द्वादशश्लोके जगतः सर्गक्षयौ नेक्षितावित्युक्तम् ; अत्र घटादिजन्मादेः क्रमिकत्वदर्शनं बाधकतयोक्तम् ॥ १४ ॥

15. चतुर्थे समन्वयाधिकरणेऽपि,ब्रह्मणोऽसिद्ध्या तद्विचारो न कार्य इति प्रत्यवस्थाने, तन्निराकरणेन **ब्रह्मणः** शास्त्रप्रतिपाद्यत्वं संभवतीत्युच्यते । तत्र पूर्वपक्षी मीमांसकः । तेनोक्तम्—अनुमानेनेश्वरो दुस्साध इति तार्किकान् प्रति दूषणं कृतं सम्यक् । अतः शास्त्रयोनित्वं ब्रह्मण इति निगमनं तु न रोचते । प्रवृत्तिनिवृत्त्यन्यतरबोधकं हि शास्त्रम् । न च ब्रह्म प्रवृत्तिस्वरूपं निवृत्तिस्वरूपं वा । न च प्रवृत्त्यन्वयितया तत्सिद्धिः । ब्रह्मणि तस्या अप्यभावात् । न चोपासनरूपक्रियाविषयतया प्रवृत्त्यन्वयोऽस्तीति मन्तव्यम् ;

வதால் ஈச்வரனென்ற கர்த்தாவுக்கும் உடல், ஸத்துவரஜஸ்தமோகுணங்கள் பூர்வகர்ம என்றவற்றை யிசையாமற் போனால் முரண்பாடே யென்க. மேலும் உலகில் ஒன்று முன்னும் ஒன்று பின்னுமாகவே கார்யங்கள் உண்டாவதால் உலகும் சிறிதுசிறிதாகவே உண்டாகலாம். அப்படி உண்டு பண்ண ஜீவர்களே போதும். (14)

**இனி ஸமந்வயாதிகரணம்—**

15 மீமாம்ஸகர்களில் கௌமாரிலரென்கிற வகுப்பினரையும் ப்ரபாகரர் பணிப்பதிலே பராக்ரமம் காட்டுமவரையும் நிந்திக்க வேண்டும். சாஸ்த்ரமாக அவர்கள் இசைந்த வேதமே பரமானந்த ரூபமாய் பரமபுருஷார்த்தமாக பரமபுருஷனை ஸ்பஷ்டமாக ஓதுவதாயிருக்க, அந்த வேதத்திற்கு ஒரு தோஷம் சொல்வதோ. பரமபுருஷனில்லையென்று மறுக்கும் அறிவோ

**धिक् कौमारिलदर्शनव्यसनिनः प्राभाकरप्रक्रिया-**
**विक्रान्तानपि हन्त नाथविधुरं विश्वं जगज्जल्पतः ।**

तावता ब्रह्मासिद्धेः । अविद्यमानस्याप्युपासनसंभवेन तन्मुखेनेश्वरसत्यत्वस्थापनायोगात् । अनन्यथासिद्धोपासनविधायकस्पष्टवाक्याभावाच्च । नन्वेवमुपनिषदामप्रामाण्यापत्तिः । न । कर्मकाण्डान्तर्गतमन्त्रार्थवादवत् प्रामाण्योपपत्तेः । मन्त्रा अर्थवादाश्च हि प्रवृत्तिनिवृत्तिप्रतिपादकत्वाभावेऽपि तत्प्रतिपादितानां वाय्वादिदेवताविग्रह-तत्क्षेपिष्ठत्वादिगुणादीनामभावेन यथाश्रुतार्थकत्वाभावेऽपि कर्मप्राशस्त्यमात्रे तात्पर्यात् कथञ्चित् प्रमाणतयेष्टाः, तथैवोपनिषदोऽपि कर्मकर्तॄणां जीवानां स्वरूपं बृहत्त्वरूपब्रह्मत्वाश्रयतया प्रशंसन्तीति प्रामाण्यं निर्वाह्यम् । उक्तञ्च श्लोकवार्तिके, भाष्यकृदत्र युक्त्या ज्ञातृत्वकर्तृत्वादिविशिष्टजीवात्मास्तितामस्थापयत् । एतच्च दृढत्वं प्रयाति वेदान्तनिषेवणेनेति ।

तन्निराकुर्वन् समन्वयाधिकरणार्थं संगृह्णाति **धिगिति** । **कौमारिलं** भट्टकुमारिलप्रवर्तितं यत् **दर्शनं**—कर्माराध्यतया देवता न सन्ति, 'विग्रहो हविरादानं युगपत्कर्मसंनिधिः प्रीतिः फलप्रदानञ्च देवतानां न विद्यते' । दूरे देवतासार्वभौमरूपं ब्रह्म । कर्मजन्यमदृष्टमेव तत्तदात्मनिष्ठं सत् फलहेतुरिति यः सिद्धान्तः—तस्मिन् **व्यसनिनः** आसक्तान् पार्थसारथिमिश्रप्रभृतीन्, अन्यांश्च **प्राभाकरप्रक्रियाविक्रान्तान्** प्रभाकराख्येन गुरुणा निरूपिता या **प्रक्रिया** प्रकारः तत्र प्रदर्शितस्वविक्रमान् प्रकरणपञ्चिकादिकृच्छालिकानाथादीन् । पूर्वापेक्षयाऽतिशयमेषु मनसिकृत्य **प्रक्रियाविक्रान्ता**नित्युक्तिः । कौमारिलस्य निरूपणस्य दर्शनत्वं संभावितम् ; अनुभवानुसारित्वात् । गुरुनिरूपणं तु सर्वं गौरवग्रस्तं क्लेशप्राप्यमहृद्यञ्चेत्याशयः । देवतादिनिराकरणमपूर्वकल्पनञ्चोभयेषां समानम् । अथापि तस्यैवापूर्वस्य लिङादिलकारवाच्यतां नियोगरूपतां पुरुषप्रवृत्तिपरमोद्देश्यतारूपमहापुरुषार्थतां पुरुषार्थभूतस्वर्गादिः नियोज्यपुरुषेष्वभिमानवशात्, राज्ञा भृत्येषु भृतिप्रभृतेरिव, अपूर्वेण संभ्रियमाणताञ्च कल्पयन्तः सर्वेश्वरादप्यतिशयितं तत्र गौरवं वहन्ति ; विधिवाक्यार्थवर्णनप्रवृत्ताश्च विधिवशात् विधिमेवान्यथयन्ति ; लोकमूलव्युत्पत्तिमभ्युपयन्त एव हि गामानयेत्याचार्यादिप्रयुक्तवाक्येषु लोकावगतां क्रियाकार्यत्वरूपविध्यर्थव्युत्पत्तिमेव पश्चात् परित्यजन्ति ; ईश्वरनिरासधुरन्धराश्च प्रबन्धान् प्रबध्नन्तीत्यादिकमत्राभिप्रेतम् । उभयेषां प्रकृताधिकरणे वक्तव्यं विशेषणमाह **हन्ते**त्यादिना । **विश्वं** समस्तं जगत् **नाथविधुरं जल्पतः** सर्वेश्वरविहीनमिति असंबद्धप्रलापिन इति । **विश्व**मिति विशेषणं जगद्गुरुरित्यादाविव परिमितलोकग्रहणेन तद्देशाधिपानां प्रत्यक्षाणां स्वीकार्यत्वेऽपि सर्वलोकाधिपकिञ्चिद्व्यक्तिस्तैर्नेष्यत इति ज्ञापनाय । स्वशिष्यजैमिनिमुखेन पूर्वमीमांसामाविर्भाव्य स्वयञ्च शारीरकमीमांसया पुरुषार्थाधिकरणादौ जैमिन्याशयमाविष्कृत्य सर्वेश्वरसद्भावं स्थापितवति सत्येव भगवति बादरायणे, जैमिनिमनीश्वरवादिनमेव समर्थयितुमनस एतान् अर्वाचीनान् **धिक्** निन्दामीत्यर्थः ।

---

இல்லாமலிருக்க. ஸ்வத; ப்ரமாணமானதை எப்படி அவர்கள் மறைப்பது? உபநிஷத்துக்கள், இதைச்செய், அதைச்செய்ய வேண்டாமென்று விதி

**दूरे कारणदोषाधकबधियोर्नाथे पुमर्थे स्वतः**
**प्रामाण्यं न कथं भजन्ति विधिवन्मन्त्रार्थवादोक्तयः ॥ १५ ॥**

---

अत्राधिकरणे तत्कृतं पूर्वपक्षं प्रतिक्षिपति **दूरे** इति । अत्रैवं पूर्वपक्षः—सिद्धेऽर्थे शब्द-
व्युत्पत्तिसंभवेऽपि शास्त्रं न तत्प्रतिपादनक्षमम् । पुरुषार्थपरत्वभंगापत्तेः । पुरुषार्थपरत्वाभावश्च इ
कुरु, तन्मा कुरु इति प्रवृत्तिनिवृत्त्यन्वयाभावात् । न चोपासनविषयकप्रवृत्त्यन्वयः कथ्यत इति शंक्यम्
उपासनस्यातत्त्वविषयेऽपि संभवात् वस्तुसत्यत्वासिद्धेरिति । तत्रोत्तरं **दूर** इत्यादि । 'सर्वज्ञः सर्ववित्
'व्याप्य नारायणः स्थित' इत्यादिवाक्यात् बोधस्तावत् जायते, स बोधोऽप्रमेति कदा स्यात्;
यदि बोधकारणे दोषः स्यात्, यथा चक्षुरादिरूपे कारणे तिमिरादिदोषात् तज्जन्यं ज्ञानमप्रमा
भवति । अत्र बोधकारणञ्च वेदः । तस्यापौरुषेयतया पुरुषगतभ्रमप्रमादविप्रलिप्साकरणापाटवरूपदोष-
मूलकत्वशंकैव न भवति । अतः स्वविषयकबोधकारणे दोषाभावात् स्वं न मिथ्या । ननु कारणदोषा-
भावेऽपि 'आदित्यो यूपः' इत्यादिश्रुतिवाक्येषु यूपे आदित्याभेदस्य बाधात् यूपादित्यैक्यं मिथ्येति
संमतमिति चेत्, तद्वदत्र ब्रह्मणि बाधोऽपि न लक्ष्यते । तस्मात् नाथस्य कारणदोष-बाधकज्ञानोभयदूरत्वं
सिद्धमिति न मिथ्यात्वम् । अतो यूपादित्यैक्यवाक्य इवार्थान्तरवर्णनेन प्रामाण्यनिर्वाहप्रयासो न कार्यः ।
अत्र **दूरे** इत्यस्य विप्रकृष्टाः इत्यर्थ उक्तो **रत्नसारिण्याम्** । तदनुसारेण दूरे इत्यत्र दूरे वर्तमाना
इति पूरणं कृतं द्वितीयव्याख्याने । तथाच मन्त्रार्थवादोक्तिविशेषणत्वं **दूरे** इत्यस्य तदिष्टम् । शास्त्रप्रमेयस्य
ह्यबाधितत्वमत्र वक्तव्यम्; न तु शास्त्रस्य । अतो मन्त्रार्थवादोक्तीनां बाधकप्रत्ययदूरत्वोक्तिर्व्यर्था । न
हि वेदोक्तीनां स्वरूपे बाधितत्वं पूर्वपक्षिणोऽपीष्टम् । अतो यथाश्रुतं नाथविशेषणमेव दूरत्वम् । तत्र वेदः
कथं प्रामाण्यं न भजन्ति । विधिवाक्यस्येव दोषाद्यभावतौल्यात् प्रामाण्यमेवानुमेयम् । यत्तु प्रवृत्त्यन्वय-
विरहादपुरुषार्थत्वान्न तत् शास्त्रप्रमेयमिति, तन्न; प्रवृत्तिनिवृत्त्योरपुरुषार्थत्वात् प्रमेयत्वाभावप्रसंगात् ।
स्वर्गादिपुरुषार्थसंबन्धात् तयोः परम्परया पुरुषार्थत्वमिति चेत्—अपुरुषार्थस्यापि पुरुषार्थसंबन्धेन
पुरुषार्थत्वे तत्परतया च शास्त्रप्रामाण्ये, साक्षात्पुरुषार्थभूतब्रह्मपरत्वेन प्रामाण्यं सुतराम् । कथं ब्रह्मणः
पुरुषार्थतेति चेत्—कथं स्वर्गस्य; तद्विषयकानुभवस्य सुखरूपत्वादिति चेत्--तुल्यम् । स्वर्गो देशविशेष
इति सुखहेतुतया पुरुषार्थतेति चेत्—नाथोऽपि सुखहेतुरेव । एष ह्येवानन्दयति । रसो वै सः, आनन्दो
ब्रह्मेत्येवं निरतिशयानन्दत्वमपि श्रुतम् । ननु स्वर्गस्यानुभवकाले पुरुषार्थत्वेऽपि, 'यन्न दुःखेन
संभिन्नम्' इति वाक्यस्य, 'यजेत स्वर्गकामः' इति वाक्यशेषत्वं विना स्वातन्त्र्येण पुरुषार्थपर्यवसानं न
भवति । अतः प्रवृत्त्यन्वयस्यापेक्षिततेति इहापि तदभावे सिद्धब्रह्ममात्रपरं वाक्यं पुरुषार्थापर्यवसाना

---

வாக்யமான காமகாண்டம் போலில்லையே யெனில், எப்படியிருந்
லென்ன. மந்த்ரம் அர்த்தவாதம் என்பவையும் விதிவாக்யம் போல்
ப்ரமாணமே யாகும். (15)

तत्परमिति चेन्न; वैषम्यात् । स्वर्गलक्षणवाक्यं हि श्रोतृसंबन्धितया स्वर्गं न बोधयति । तत्र गृहे निधिरस्तीति तदवगमसमर्थेनोक्तौ श्रोतुः स्ववेश्मनि निधिरस्तीति ज्ञानात् परमानन्दो भवतीति दृष्टम् । तद्वत् दुःखिनां सर्वेषां जीवानां स्वानुभवपर्यन्तपुरुषार्थप्रदानायावसरं प्रतीक्षमाण एवास्ति भगवानित्यर्थे उपनिषद्वाक्यात् अवगम्यमाने श्रोता परमानन्दभरितो भवतीति पुरुषार्थपरत्वमनपलप्यम् । अतः प्रवृत्ति-निवृत्तियागादिविलक्षणतया स्वत एव पुमर्थे प्रामाण्यं निराबाधम् । अथ तल्लाभाय तदर्थोपायचिन्तादि तस्य भवतीत्यन्यदेतत् । किञ्च पुरुषार्थपर्यवसानाभावे विचारे प्रवृत्तिर्न स्यादिति तज्ज्ञानस्यावश्य-कत्वेऽपि प्रामाण्यं प्रति न तदपेक्षा । न हि पुरुषार्थबोधकत्वं प्रामाण्यम् । किंतु अबाधितार्थ-ज्ञापकत्वम् । तत् भजन्त्येवोपनिषदः **विधिवत्** लिङादिघटितप्रवृत्तिपरवाक्यानीव मन्त्ररूपा अर्थ-वादरूपाश्चोक्तयोपि । मन्त्राः विष्णुप्रतिपादकाः प्रसिद्धाः । अर्थवादपदेनात्र न कर्मकाण्डगतविधिवाक्यशेष-भूतानां, 'वायुर्वै क्षेपिष्ठा' इत्यादितुल्यानां ग्रहणम् । तत्प्रामाण्यस्य पूर्वपक्षिस्वीकृतत्वात् । किंतु स्वतन्त्राणां सिद्धब्रह्मोपदेशरूपाणामुपनिषद्वाक्यानां सदेवेत्यादीनाम् । तेषां वाक्यैकवाक्यतया स्वगृहे निधिरस्तीतिवत् स्वानन्दप्रदानोत्सुकपरमपुरुषरूपेष्टबोधकत्वमस्त्येव । तावदभावेपि प्रामाण्यस्य न हानिः । अर्थस्याबाधित-त्वात् । अत्र **स्वत** इति पदस्य प्रामाण्येऽप्यन्वयेऽयमर्थः—अस्माभिः स्वतःप्रामाण्यस्य ज्ञाने स्वीकृत-त्वात् मन्त्रादिजनितज्ञानं विधिजनितज्ञानवत् स्वतः प्रमेति तत्कारणभूतोक्तीनां स्वतः प्रमाहेतु-त्वरूपं स्वतः प्रामाण्यमक्षतमिति । अतो महाराजस्य सेवककुलाननुप्रवेशेन निकर्षोक्तितुल्यः परमपुरुषार्थ-परवाक्यानां विधिवाक्यानन्वयप्रयुक्ताप्रामाण्यवाद इति ॥ अतः **समन्वयात्** सम्यगन्वयात् अस्मदनु-भाव्यानन्दरूपतया विधिवाक्यशेषतां विनैव विशिष्टार्थतया च ब्रह्मणो वाक्यजन्यप्रतीतिविषयत्वात् तत् शास्त्रप्रमाणकत्वं संभवत्येवेति ॥ १५ ॥

16. शास्त्रारम्भसमर्थनार्थेषु उपोद्घातरूपेषु चतुर्षु अधिकरणेषु भाष्यार्थवैशद्याय किञ्चित् विचार्य, अथ शास्त्रे प्रथमे आदितः पञ्चमे ईक्षत्यधिकरणे, 'उततमादेशमप्राक्ष्यः' इति सद्विद्यारूपविषयवाक्यस्थाऽऽ-देशशब्दस्य भाष्याभिहितम् आदेष्टारमित्यर्थमाक्षिपतां पक्षं क्षेप्तुकामः प्रथमं तत्पक्षमनुवदति **छान्दोग्य** इति श्लोकेन । एतत्पद्यस्यार्थः **श्रुतप्रकाशिका**यां जिज्ञासाधिकरणे श्रुतिषट्के सद्विद्याविचारस्थले वर्णितः । एवं निरस्तस्यापि पक्षस्य पुनः स्थापनायान्येषां प्रत्यवस्थानमुपपाद्य विस्तरेणोपनिषद्भाष्यकारैश्छान्दोग्य-भाष्ये निरासि । तत्रास्मदीये परिष्कारेऽप्येतदर्थो द्रष्टव्यः । गुरुकुलादधीत्य प्रतिनिवृत्तं स्तब्धं दृप्तं पुत्रं श्वेत-केतुमुद्दालको नाम पिता पृच्छति, उततमादेशमप्राक्ष्यो येनाश्रुतं श्रुतं भवतीति । येनश्रुते नाश्रुतं सर्वं श्रुतं भवति—अश्रुतमपि सर्वं यस्य श्रवणेनैव श्रुतं भवति, **तमादेशम्**—आदेष्टारं गुरुसंनिधौ उताप्राक्ष्यः= अप्राक्षीर्न वा । छान्दसं धातुरूपम् । लुङि अप्रक्ष्य इति स्यात् न दीर्घः । लोके उपादानोपादेयमृद्-घटादिस्थले उपादानकारणस्य मृद एवोपादेयघटशरावादिरूपेण परिणामात् द्रव्यस्यैकतया मृज्ज्ञानमात्रेणापि घटशरावादि ज्ञातं भवति यथा, तथा यज्ज्ञाने सति इदं जगत् द्रव्यैक्यवशात् ज्ञातमेव भवति तत् उपा-

**(1-1-5) छान्दोग्ये केचिदाहुर्दिशतिरुततमादेशमप्राक्ष्य इत्य-**
**त्राङ्पूर्वस्तूपदेशं प्रकटयति सतो न प्रशास्ति घञन्तः ।**

---

दानं वस्तु त्वया पृष्टं न वा, न पृष्टमित्येव ज्ञायते इति वाक्यार्थः । ननु तज्ज्ञानात् तदुपादेयसर्ववस्तु-ज्ञानेऽपि कर्तृरूपनिमित्तकारणस्य ततो ज्ञातत्वाभावात् कथं सर्वज्ञानमित्याशंका मा भूदिति **आदेशमित्युक्तम्** कर्तृभूतनिमित्तकारणमपि तदेवोपादानकारणम् । अतोऽन्याभावात् न दोषः इति समाधिः । आदेश-शब्दस्य आदेष्टा नियन्ता इत्यर्थकत्व एवैवं समाधिसिद्धिरिति अस्मदीयभाष्ये आदेष्टारमित्यर्थः स्वीकृत । शांकरभाष्ये तु **आदेशम्** उपदेश्यमिति व्याख्यातम् । तेन, 'किमर्थं प्रष्टव्यम् अहमेव जानामीति न दर्पः कार्यः, अस्योपदेश्यत्वात् । अनन्यप्रोक्ते गतिरत्र नास्ति हि' इति बोधितं भवतीति तदाशयः । उताप्राक्ष्य इत्यनेनैव तत्र सर्वं ध्वन्यते । निमित्तकारणत्वमेव वक्तव्यम् । तदेव, 'तदैक्षत बहु स्याम्' इति निमित्तोपादानोभयग्रहणेन विवरणमपि करिष्यमाणं घटते । अत आदेष्टा कश्चिदस्माकमस्तीति, ज्ञातव्यम-स्माकमन्यदप्यस्तीति चाविज्ञाय किमिति स्वतन्त्र इव सर्वज्ञ इव च स्तब्धोसीति शिक्षणमप्यार्थिकमित्यस्म-द्भाष्याशयः । अत्र कतरस्यार्थस्य ग्रहणं युक्तमिति विमर्शे आदेशशब्दस्वारस्यं कुत्रेति विचारेऽवतीर्य परे स्वपक्षमेवमुपपादयन्तीत्याहानेन श्लोकेन । अयमर्थः—**केचित्** आदेशशब्दस्योपदेश्यरूपार्थवाचिनः एवमाहुः— छान्दोग्योपनिषदि, 'उततमादेशमप्राक्ष्यः' इत्यत्र वाक्ये आदेशशब्दप्रकृतितया स्थितः आङुपसर्गपूर्वकः **दिशतिः** दिशिधातुः **सतः** सदेवेति वक्ष्यमाणस्य कारणवस्तुनः तद्विषयकं **उपदेशम्** अज्ञातार्थज्ञापनरूपमर्थं **प्रकटयति** स्पष्टमाह । न तु **प्रशास्ति** शासनमाज्ञारूपमर्थम् । कुत इत्यत्राह **घञन्त** इति । घञन्त-त्वादिति हेतुगर्भविशेषणम् । न ह्ययमच्प्रत्ययः, दिशि धातोरिगुपधत्वेन 'इगुपधात्कः' इति तदपवादतया कप्रत्ययविधानात् तदयोगात् । न च कप्रत्ययः, 'क्ङिति च' इति गुणप्रतिषेधात् देश इति रूप-स्यासिद्धेः । अतो घञन्तत्वात् न शासनवाचितेति । नन्वस्तु घञन्तत्वम्; तावता शासनवाचित्वभंगः कथमित्यप्रयोजकशंकायामुपपादयति **नो** इति । शासनार्थवादिना घञन्तस्य शास्यम् नियन्तव्यमिति किमर्थः स्वीक्रियते, उत शासितेति । आद्यस्य शब्दार्थत्वसंभवेऽप्यनन्वयः । न हि ब्रह्म नियन्तव्यम्— आज्ञाप्यं भवति । भक्तपराधीनतया तदपि स्यादिति चेत्, तन्न स्वाभाविकम्, औपाधिकमत्र न प्रसक्तम् ।

---

16 ஈக்ஷத்யதிகரணம். கேசித் = அத்வைதிகள், **आहु:**–சொல்லுகிறார்கள்—**छान्दोग्ये**–சாந்தோக்யோபநிஷத்திலே ஸத்வித்யையில், **उततमादेश-प्राक्ष्यः** என்றவிடத்தில் **आदेश** பதத்தில் **आङ्पूर्वः**–ஆங் என்ற உபஸர்கத்துடன் கூடிய **दिशतिः** **दिश**தாதுவானது—**घञन्तः = घञ्** என்ற ப்ரத்யயத்தை முடிவில் கொண்டிருப்பதாய், (கொண்டிருப்பதால்) **सतः**–ஸத் என்னும் ப்ரஹ்ம விஷயமான **उपदेशम्**—உபதேசமென்கிற பொருளை **प्रकटयति**—தெரிவிக்கிறது. **प्रशास्ति न** = ஆஜ்ஞை–நியமனம் என்னும் பொருளையில்லை. **आदेश** என்கிற சொல்லுக்கு உபதேசம் நியமனம் என்கிற இரண்டு பொருள் உண்டானாலும் அதில் घञ्

नो कर्तर्यस्ति; कर्मण्यगणि घञिह सत् कर्तृ शास्तौ; न कर्म
स्यात्; स्यात् कर्मोपदेशे; तदिदमुदितमादेशवाचोपदेश्यम् ॥ १६ ॥
अत्र ब्रूमः प्रशास्ति वदति दिशिरसावाङ्मुखो नोपदेशं
शास्तौ सोऽतिप्रसिद्धो न हि पर इह चापेक्षितार्थप्रसंगः ।

---

तावता विवक्षितं निमित्तकारणत्वं न सिध्यति । अतः शासितृरूपार्थे स्वीकर्तव्ये न शब्दस्तत्र साधुः, यतः घञप्रत्ययः कर्तृरूपार्थे नो अस्ति-न भवति; यतः कर्मरूपार्थ एवागणि व्यधायि; "अकर्तरि च कारके संज्ञायाम्" इति कर्तृभिन्नकारके इत्युक्तेः । संज्ञायामित्येतत्तु वैयाकरणैरेवोपेक्षितम् । अतः संज्ञायामकर्तरि, असंज्ञायां तु कर्तर्यपीति न शंक्यम् । इह च प्रकरणे आदेशशब्दविशेष्यं सत् शास्तौ शासने कर्तृकारकमेव, न कर्म स्यात्=नान्यत् कारकं भवितुमर्हति । कर्मेत्युपलक्षणम् । करणत्वाधिकरणत्वादिकमपि नार्थः । कर्तृः प्रधानस्य अप्रधानकारकान्तरत्वारोपे च निकर्षः कृतः स्यात् । उपदेशे दिशतेरुपदेशरूपार्थस्वीकारे सत् उपदेशं प्रति कर्म स्यात् । एवं च घञः साधुता । तत् तस्मात् कारणात् इदं सत् आदेशवाचा आदेशपदेन उपदेश्यत्वेनैवोक्तमिति । दिशतिः शासनोपदेशसाधारणः । घञ् कर्तृभिन्नार्थ एव । अतः प्रकृतिप्रत्ययावुभावप्यस्मदनुकूलाविति पूर्वपक्ष्याशयः॥ नायमधिकरणप्रधानपूर्वपक्षः। एवमुपर्यपि ॥ १६ ॥

17. एतन्निराकरणपूर्वकं स्वपक्षं स्थापयति अत्रेति श्लोकेन । अत्र अस्मिन् आक्षेपे ब्रूमः परिहारमित्थम्—प्रकृतिप्रत्यययोर्मध्ये असौ प्रथमश्रुतः आङ्मुखः आङुपसर्गपूर्वकः दिशिधातुः शक्त्या प्रशासनमेव वक्ति. न तूपदेशरूपार्थम् । शासनं हि आज्ञापकार्थे कार्ये नियमनम् । उपदेशस्तु कार्याकार्योभयसाधारणार्थज्ञापकशब्दप्रयोगः । 'प्रथमः नियोक्तृप्रयोजनवचनः, द्वितीयो नियोज्यप्रयोजनवचनः' इति न्यासकारः । न्यासः काशिकाव्याख्या पञ्चिका । आज्ञापयितृसमवेतफलार्थव्यापारवाची आदेशशब्दः, आज्ञाप्यसमवेतफलार्थहितवाचकशब्द उपदेश इति वैलक्षण्यमुक्तं भवति ।

---

என்கிற ப்ரத்யயமிருப்பதால் உபதேசமே பொருளாம், घञ् அந்த ப்ரத்யயமானது, கர்த்தரி நோ =கர்த்தா என்ற பொருளிலில்லே. கர்மணி = செய்யப்படுபொருளில் अगणि (வியாகரணத்தில்) கொள்ளப்பெற்றது. इह सत्—இங்குள்ள ஸத் என்பது ப்ரஹ்மமாகையாலே शास्तौ—ஆஜ்ஞையிலே, कर्तृ கர்த்தாவாகத்தானாகும், न कर्म स्यात्—கர்ம = செய்யப்படுபொருளாகாது. उपदेशे-உபதேசமென்ற பொருளில் அது कर्म स्यात्-செய்யப்படுபொருளாகலாம். तत् ஆகையால் आदेशवाचा—ஆதேசமென்ற சொல்லால் इदं இந்த ஸத்து उपदेश्यम् உபதேசிக்கப்படவேண்டியதாக उदितम्—சொல்லப்பெற்றது என்றவாறு.

17. இதற்கு ஸமாதானம்—अत्र இவ்வாதத்திலே ब्रूमः மறுமாற்றம் சொல்லுகிறோம்—आङ्पूर्वः ஆ என்ற உபஸர்கத்தோடு சேர்ந்த असौ இங்

**युक्तोऽसाधारणोक्त्या ; घञगणि करणेऽप्यत्र वैवक्षिकत्वं**
**शाब्दोक्तं कारकाणां ननु करणतया कर्तरि स्यात् विवक्षा ॥ १७ ॥**

ननु 'अथातोहङ्कारादेशः' इत्यादावादेशपदमुपदेशेऽपि प्रयुक्तमित्ति चेत्—अथापि शासनरूपार्थ एव तस्यात्यन्तप्रसिद्धिः, न **परे** अन्यस्मिन् उपदेशे **इति** तस्यामुख्यत्वमेव । अतः प्रकृतिप्रत्यययोर्मध्ये प्रकृतेरुपक्रमस्थत्वात् असञ्जातविरोधन्यायेन जघन्यः प्रत्यय एवोपक्रमानुगुणं नेय इति भावः । किञ्च उपदेश्यरूपार्थस्य अप्राक्ष्य इत्यनेनैव लब्धत्वात् निमित्तकारणत्वरूपार्थस्यापेक्षितत्वाच्चापेक्षितार्थप्रस्ताव एवेह युक्तः । अपेक्षितस्य गुरुणा वक्तव्यत्वेनाभिमतस्य निमित्तकारणत्वरूपार्थस्य **प्रसंगः** प्रस्तावः, अपेक्षितार्थे **प्रसंगः** प्रकर्षेण सक्तिर्वा असाधारणोक्तया च युक्तः इत्यन्वयादेकं वाक्यमिदम्। **इह चेति** चकारस्यात्र घटना । उपदेश्यरूपार्थग्रहणे अनपेक्षितोक्तिः, तथा तस्योपदेश्यत्वस्योपासनफलादिसाधारणतया असाधारणोक्त्यभावश्च, आदेष्टारमित्यर्थे तु अपेक्षितकथनवत् भगवदसाधारणोक्तिरिति विशेषोऽपि । उपादानत्वोक्तावपि तस्य प्रसिद्धजगदुपादानत्वस्य प्रकृतावपि सत्त्वशंकया तावता नासाधारण्यसिद्धिः । निमित्तत्वविशेषणे तु प्रकृतिगतोपादानत्वव्यावृत्तिरपीति भावः । नेदानीमध्याहारः । अत्र **इह** चापेक्षितार्थप्रसंगोऽस्तीति वाक्यं पृथक्कृत्य, युक्त इत्यत्र आदेशशब्द इत्यध्याहृत्य आदेशशब्दः असाधारणस्य प्रशासितृत्वस्योक्त्या प्रशासने युक्त इति **रत्नसारिणी,** प्रशासनरूपार्थः इत्यध्याहृत्य सः असाधारणधर्मोक्त्या युक्त इति **तत्त्वसारास्वादिनी** । ननु अकर्तरीति निषेधात् घञः कर्ताऽर्थो न भवतीयुक्तम् ; अतः शासनस्य सति कथमन्वय इति चेत्—**अत्र** शब्दशास्त्रे घञ् करणेऽप्यगणि=अनुमतः। अत **आदेशः** शासनकरणमित्यर्थोऽस्तु । तर्हि शास्तेत्यपेक्षितार्थो न लभ्यत इति चेत्—**कारकाणां वैवक्षिकत्वं शाब्दोक्तं ननु** । **ननु** इति भोः इत्यर्थे, खल्वित्यर्थे वा । 'विवक्षातः कारकाणि भवन्ति' इति हि शाब्दाः । एकं कारकमन्यकारकतयाऽपि विवक्षितुं शक्यते, स्थाली पचति काष्ठानि पचन्ति इति अकर्तरि कर्तृत्वविवक्षादर्शनात् । तद्वदत्र कर्तुरेव करणत्वविवक्षया घञ्प्रयोगः । ननु

---

குள்ள **दिशिः = दिशधातु**வான**து शास्ति** - *நியமனத்தைதான்* **वदति**-*சொல்லும்,* **न उपदेशम्**. *உபதேசமென்ற பொருளைச் சொல்லாது, ஏனெனில்* **असौ = आदेश** *என்பது* **शास्तौ** *ஆக்ஞையென்ற பொருளில்* **अतिप्रसिद्धः** *மிகவும் ப்ரஸித்த மாகும்.* **परे** *உபதேசமென்ற பொருளில்* **न हि**-*ப்ரசித்தமல்லவே.* **च**. *மேலும்* **इह**. *ஆக்ஞையில்* **अपेक्षित**-*வேண்டியதான* **अर्थप्रसंगः** *பொருள் கொள்வதானது* **असाधारणोक्त्या युक्तः**-*சிறப்பானதைச் சொல்லுகிறதென்கிற விசேஷத்துடனும் சேர்ந்திருக்கிறது. உபதேசிக்கப்படுகை என்கிற பொருள் ப்ரஹ்மத்திற்கு மட்டுமாகாது. ஸாதாரணம். கர்ம, பக்தி அதன் பலன் என்றவைகளுக்குமா கும் ஆஜ்ஞாபிக்கின்றதென்ற பொருள் ப்ரஹ்மத்திற்கேயுள்ளது. ப்ரஹ்

तर्हि आज्ञां प्रति करणमित्येव बोधः स्यात्, तावता कथं कर्तृरूपनिमित्तकारणसिद्धिरिति चेत्— आज्ञा कस्येति जिज्ञासायामन्यस्यानुकूल्या तदर्थेनाऽऽदेशपदेनाऽऽज्ञाकरणकारकबोधे कर्तारं विना तदसिद्ध्या कर्तुरेव करणत्वविवक्षेति विमृश्यत इति । ननु सर्वकारकप्रयोक्तरि कर्तरि तत्प्रयोज्यकरणत्वारोपो निकर्षावह इति चेन्न ; तथासति क्रियाकर्तरि क्रियाधिकरणत्वव्यवहारस्याप्ययुक्तत्वापातात् । कर्तुरेः करणत्वोक्त्या करणान्तरनिरपेक्षत्वरूपविशेषलाभाच्च। समरे सेनाकार्यमपि राजैव करोतीत्युक्तौ राज्ञोऽतिशय एव। कर्त्रपेक्षया करणेऽपि कस्यचिदतिशयस्य सत्त्वात् तद्विवक्षायामुत्कर्षस्यैव संभवाच्च । करणत्वं हि फलायोगव्यवच्छेदवत्कारणत्वम् । यदव्यवहितोत्तरमेव कार्यम्, न तु विलम्बः; तत् साधकतमं करणम्। लोके कुलालादौ स[illegible] न घटोत्पादावश्यम्भावः । अत एव न्यायसूत्रस्थे **आप्तप्रामाण्या**दिति पदे प्रामाण्य-पदं प्रमाश्रये परमात्मनि प्रयुक्तं, "तदयोगव्यवच्छेदः प्रामाण्यं गौतमे मते" इति करणत्वपरतया व्याख्यातं **न्यायकुसुमाञ्जलौ** । तेन प्रमायाः सार्वकालिकत्वस्यापि लाभः । तद्वत् आदेशाश्रयः सर्वदेति ज्ञापनार्थ-

---

மத்தை உபாதான காரணமாகப் போல் நிமித்தகாரணமாகவும் முதலில் தொடங்குவது முக்கியமாய் வேண்டியதுமாகும். ஆகையால் அதை ப்ரஸ்தா விப்பதே தகும் **घञ्** பொருந்தாதேயெனில்—கர்த்தா என்ற பொருள் கூடா தாகில், வேண்டா. கரணம் என்கிற பொருள் கொள்ளலாம். அப்பொ ருளிலும் அது நூலில் எண்ணப்பெற்றது. கரணமாவது முக்கியமான கருவி, ப்ரஹ்மம் ஆஜ்ஞை செய்கிறதேயல்லது ஆஜ்ஞைக்குக் கருவியல்லவே யென்னில், கர்த்தாவையே கருவியாகக்கொண்டுகூறிற்றென்க. ஒருகாரகத்தை மற்றொரு காரகமாக ஏறிட்டுக் கூறலாமென்பது வையாகரணரின் மரபு. காரக விஷயமாக **वैवक्षिकत्वं** இஷ்டப்படி மாற்றி ப்ரயோகிப்பது **शाब्दोक्तं ननु** வையாகரணர் கூறியதன்றோ. ஆகையால் கர்த்தாவுக்கு இங்கே கரணமாக விவக்ஷை = சொல்ல நோக்கு. அப்படிச் சொல்வதில் என்ன விசேஷமென் னில், கர்த்தா கருவியிராமல் செய்யவியலான். பிளக்கிறவன் கோடாலியில்லை யென்று பிளக்காமலிருப்பான், கோடாலி கிடைத்தால் உடனே கார்யம் கைக் கூடுவதே. அதுபோல் கர்த்தாவே கரணமென்றால் வேறு கருவி வேண்டாத படி உடனே கார்யஸித்தியாம். ஆஜ்ஞைக்குக் கரணமென்றால், 'ஆஜ்ஞை செய்ய வேறொன்றை யெதிர்பார்ப்பதில்லை. எப்போது வேணுமானாலும் அவன் ஸங்கல்பிக்கலாம். எல்லாம் கைக்கூடும், என்று அவன் சக்தியைச் சொன்னதாம். **आदेश** என்ற சொல்லில் இரு பாகங்கள். முதல் பாகத்திற்கு ஆஜ்ஞை என்ற பொருளே முக்கியம். உபதேசமன்று. இரண்டாம் பாகத் திற்கு, கர்த்தா என்ற பொருள் தகாதாகிலும். முதற் பதத்திற்கு முதலில்

(१-१-६) षष्ठ्याऽन्यत्वमवेदि नैनमवदच्छ्लोको न चाज्ञातता
ज्ञातस्यास्य तथाऽपि नावयविता तस्यान्य आत्मा श्रुतः ।

मेव करणत्वविवक्षेति । अन्यत् अस्मत्परिष्कारादौ द्रष्टव्यम् । उपनिषद्भाष्यकारैः स्वरसतो भावार्थका आदेशशब्दात् अर्शआद्यच्प्रत्यये आदेशवानित्यर्थस्यानायासेन सिद्धिरित्यप्युक्तम् ॥ १७ ॥

18. ईक्षत्यधिकरणानन्तरे आनन्दमयाधिकरणे, 'अन्योऽन्तर आत्माऽऽनन्दमयः' इति श्रुत आनन्दमयो न जीवः ; किंतु ब्रह्मेति स्थापितं सूत्रकारेण । तत् तथैव प्रथमं व्याख्याय शांकरभाष्ये स्वातन्त्र्यमवलम्ब्य तत्खण्डनेन पुच्छब्रह्मवादः प्रवर्तितः । तमेकेन श्लोकेनानुवदति निरासार्थम् । अयमत्र तद्वादः—ब्रह्मविदाप्नोतीत्युपक्रान्तं ब्रह्म 'सत्यं ज्ञानमनन्तं ब्रह्म' इति विवृतं, 'ब्रह्म पुच्छं प्रतिष्ठा' इति वाक्ये परामृश्यते । अतः पुच्छमेव ब्रह्म । आनन्दमयस्तु कस्य पुच्छमिति जिज्ञासाशमनार्थमुपन्यस्तः । एवमस्य प्राधान्ये सति सः अन्नमयप्राणमयादिवत् कोश एव । नन्वानन्दमयस्य ब्रह्मणश्च भेदे सति किलैष उपन्यासो घटते ; तत्रैव किं मानमिति चेत्—तदाह षष्ठ्येति ।

ब्रह्म पुच्छं प्रतिष्ठेति वाक्येऽपि 'तस्य प्रियमेव शिरः' इति वाक्यात् तस्येत्यस्यानुवृत्त्या षष्ठ्याश्च भेदसंबन्धवाचित्वात् तयाऽऽनन्दमयस्य पुच्छब्रह्मणश्चान्यत्वम् **अवेदि** बुद्धम् । अथवा बोधितम् ; वेदयतेः कर्मणि लुङ् । (२) एवमानन्दमयातिरिक्तस्य ब्रह्मण उक्तत्वादेव, असन्नेवेति श्लोकः आनन्दमयपदमप्रयुज्य ब्रह्मपदं प्रयुङ्क्ते । न हि 'असन्नेव स भवति, वेदानन्दमयं न चेत्' इति वाक्यमस्ति । **तदयं श्लोकः एनमानन्दमयं नावदत्** ; किंतु ब्रह्मैव । (3) किञ्चानन्दमयो नात्र वक्तुं शक्यते ; अत्र हि ब्रह्मज्ञानाज्ञानाभ्यां सदसत्त्वे उच्येते । आनन्दमयस्य त्वज्ञातत्वमेव न भवति । प्रियमोदादिरूपो हि सः । प्रियमोदादिश्च सर्वानुभवसिद्धः । अतः **तथा** प्रियमोदादिरूपेण आनन्दमयतया ज्ञातस्या-

தோன்றிய பொருளைக்கொண்டு, அதற்கிணங்க மேற்பகத்திற்கு ஏதேனும் பொருளைக் கொள்கவென்றுமாராய்க. (17).

18 (1) ஆனந்தமயமே ப்ரஹ்மமென்பது தவறு, **तस्य पुच्छं ब्रह्म** என்ற 'ஷஷ்டீவிபக்தியால் வேறுபாடு அறிவிக்கப்பட்டுளதே. ராமனுடைய வீடு என்றவிடத்தில் ராமனும் வீடும் வேறாயிருப்பதால்தானே ஆறும் வேற்றுமை வந்துளது (2) இந்த (**घट्ट**) கட்டத்தில் ஆனந்தமயம் ப்ரதானமாயிருந்தால் ச்லோகத்தில் ஆனந்தமயத்தைக் குறித்திருக்கும். **असन्नेव** என்கிற ச்லோகம் ஆனந்தமயனைச் சொல்லாமல் ப்ரஹ்மத்தைச் சொல்லியிருப்பதால் முன் பாகத்திற்கு ப்ரஹ்மமே ப்ரதானமாகும். (3) பஞ்சகோச ப்ரகரணம் தெரியாததைத் தெரிவிக்கவாம். ச்லோகத்தால் இது தெரிகிறது. ஆனந்தமயம் ப்ரியமோதம் என்றெல்லாம் உலகிலே யாருக்குத் தெரியாது, **तथा** அப்படியே **ज्ञातस्य** அறியப்பட்ட இதற்கு, **न अज्ञातता** அறியப்படாமையில்லை. ப்ரஹ்மமே

**शोध्यत्वं च विकारवाचकवचस्तत् ब्रह्म पुच्छं भवेत्**
**न त्वानन्दमयः स चान्नमयवत् कोशो बहिः कथ्यते ॥ १८ ॥**

ज्ञातता च नेत्यर्थः ॥ (4) **अपि नावयविता तस्य** । **तस्य** ब्रह्मणो निरवयवतया सावयवत्वाभावात् आनन्दमयस्य प्रियादिभिरवयवितया नानन्दमयो ब्रह्म ॥ (5) **अन्य आत्मा श्रुतः** । आनन्दमयादन्य एवात्मा आनन्दमयकोशानन्तरं 'तस्यैष एव शारीर आत्मा' इति वाक्येनोच्यते । तस्य हि, आनन्दमयं प्रति वक्ष्यमाणः कश्चिदात्मा भवतीत्यर्थः (6) **शोध्यत्वम्** । 'अन्नमयप्राणमयमनोमय-विज्ञानमयानन्दमया मे शुध्यन्ताम्' इति श्रुतौ अनन्तरप्रश्ने अन्नमयादिवत् कोशभूतत्वादस्य शोधनीयत्वं श्रुतमिति विपरिणम्यानुषंगः । न च नित्यशुद्धस्य ब्रह्मणः शोध्यत्वं संभवति । (7) **विकारवाचकवचश्शास्ति** । **आनन्दमय** इति मयट्प्रत्ययरूपं विकारवाचिपदं श्रुतम् । न च ब्रह्मणः किञ्चिद्विकारत्वम् । 'कस्तर्हि आनन्दमय इति चेत्-अन्नमयादिवत् अन्तरात्मनो ब्रह्मणोऽन्यः जीवरूपः **बहिष्ठः** आन्तरात्मावारक एवेति॥ १८

19. अनूदितं शांकरकल्पनामूलं पुच्छब्रह्मवादं व्युदस्यति **पुमि**ति । पूर्वार्धेनानन्दमयस्यैव ब्रह्मत्वे हेतवः, उत्तरार्धेन पूर्वश्लोकोक्तवादनिरासहेतवश्च कथ्यन्ते । अतः पूर्वार्धस्य **पुच्छहेतुः परास्त** इत्यत्रान्वया-विवक्षणात् उत्तरार्ध इव हेतुविभक्त्यनादरः । (1) आनन्दमयपर्यायानन्तरम्, 'अथातोऽनुप्रश्नाः' इति प्रश्नान् प्रस्तुत्य तत्समाधानोपक्रमे, "सोकामयत, बहु स्यां प्रजायेय इति पठ्यते । तत्र **स** इति पदस्य पूर्ववाक्यश्रुतो विद्वान् अर्थो न भवतीत्युभयसंमतम् । ब्रह्मण एव जगत्कारणत्वात् कारणवाचिपदं ब्रह्मपरामर्शीति चेत्—असन्नेवेति श्लोकप्रकृतब्रह्मवाचित्वे नपुंसकलिंगता स्यात् ; न तु पुंल्लिंगता । किञ्च तच्छब्दस्य प्रकृतपरामर्शिनः प्रधानतया यत् प्रकृतं तत्परामर्शित्वमेव स्वरसम् । अत **एवोपक्रमाधिकरणे** (पूर्वमी.........) "प्रजापतिर्वरुणायाश्वमनयत् स स्वां देवतामार्च्छत्" इत्यत्र तच्छब्दस्य दातृपरत्वस्वमेव, न तु संप्रदानपरत्वमिति स्थापितम् । असन्नेवेति श्लोके च ब्रह्म न

---

அறியப்படாதது. அறிவிக்கப்படும். (4) **अपि नावयविता तस्य**. ப்ரஹ்மம் நிரவயவம்; அவயவமற்ற வஸ்து. அது அவயவியான ஆனந்தமயமாகாது. அவயவியான ஆனந்தமயம் அதுவாகாது, (5) மேலும் **तस्यैष एव** என்கிற வாக்யத்தில் ஆனந்தமயனுக்கு மேலே ஓர் ஆத்மா ஓதப்பெற்றுள்ளது. அது தான் ப்ரஹ்மம். (6) அந்நமய ப்ராணமயாதிகளைப் போலே ஆனந்தமயமும் சுத்தமாகவேண்டுமென்கிறது. ஆக ஆனந்தமயம் அசுத்தமான வஸ்து. (7) ஆனந்தமய என்ற சொல்லில் மய என்பதற்கு விகாரம் (மாறுபாடு) பொருள், ப்ரஹ்மம் விகாரமாகுமோ. ஆகையால் ஆனந்தமயம் ப்ரஹ்மமாகாது; புச்சமே ப்ரஹ்மம். ஆனந்தமயமென்பது அன்னமயாதிகளைப் போலே அதை மூடிக்கொண்டிருக்கும் கோசமாம். இப்படி புதிய சாங்கர வாதம் (18).

**पुंल्लिङ्गान्त(न्तं?)प्रधानप्रकृतपरवचो रूपणश्चाप्यनन्यैः**
**श्लोकाः पुच्छं न चाहुः स्वरसमपि च नः सूत्रमन्योऽन्तरो न ।**

---

विशेष्यतया बोधे विषयः । आनन्दमयस्य **स** इत्येतदर्थत्वे तु पुंल्लिगत्वं प्रधानपरामर्शित्वञ्च घटते। 'आत्माऽऽनन्दमयः इति प्राक् प्राधान्येन हि स निर्दिष्टः । स एव, 'तस्य प्रियमेव शिरः' इति, 'तस्यैष एव' इति च तच्छब्देन परामृष्टश्च । न चास्यां ब्रह्मवल्ल्यां ब्रह्मण एव 'ब्रह्मविदाप्नोति' इति प्रक्रमात् ब्रह्मैव, विशेषणतया प्रतीतावपि प्रधानमिति शंक्यम्, तथापि पुंल्लिगौचित्याभावात् । अत्र श्लोके **पुंल्लिगान्तप्रधाने**ति समस्ततयैव पठ्यते । श्रु.प्र.अनुवादोपि । उद्देश्यविधेययोः पदद्वयेन निर्देशस्यैवोचितत्वात् अन्यथा एकप्रसरताभंगात् पुंलिंगान्तमिति पृथक्पाठो युक्तः। पदान्तराध्याहारे गौरवात्। **प्रधानप्रकृतपरवच** इत्युद्देश्यम्। उभयविधाने वाक्यभेदः स्यादिति प्रधानप्रकृतपरत्वस्योद्देश्यकोटौ निवेशः कृत.। (२) हेत्वन्तरमाह **रूपणश्चाप्यनन्यै**रिति । अन्नमयपर्याये शरीरस्यावयविनः स्वावयवतया स्वानतिरिक्तैः शिरःपक्षपुच्छादिभिरेव निरूपणात् प्राणमयपर्यायेऽपि तद्रीतिदर्शनात् सर्वत्र तथात्वमिति आनन्दमयपर्यायेऽपि प्रियादीनामप्यानन्दमयानन्यत्वमेव वक्तव्यम् । अतः पुच्छरूपं ब्रह्माप्यनन्यभूतोऽवयव एवेति न तस्यात्र पर्याये प्राधान्यमित्यर्थः । अत्रा**नन्यै**रिति तृतीयाश्रवणात्, "स्वस्मादनतिरिक्तैः प्रियादिभिर्निदर्शितम्" इति भाष्यार्थ इहोच्यत इति **रूपणं** निरूपणमेव। अनन्येषु प्रियादिषु शिरस्त्वादिरूपणमित्यपठनात्। यद्वा(त...दिन्यां) आनन्दमयस्य स्वानन्यैः प्रियादिभिः शिरःपक्षपुच्छादिमत्त्वेन रूपणमित्यर्थः शिरआदिरहितोऽयं शिरःप्रभृतिमत्त्वेन रूप्यत इति । अतो नावयवस्य प्रधानतेति भावः। (३) **श्लोका** इति। असन्नेवेति श्लोकः आनन्दमयरूपावयविविषयकः, न पुच्छविषयकः ; न ह्यन्नमयादिपर्यायगताः श्लोकाः तत्तत्पुच्छप्रशंसापराः । अतस्तद्वत् आत्मप्रशंसार्थप्रवृत्तश्लोकत्वात् अवयविपर एवेति । (4) सूत्रस्वारस्यादप्यानन्दमयो ब्रह्मेत्याह **स्वरसमपि च नः सूत्र**मिति । पुच्छवादे हि आनन्दमयपदमानन्दमयपर्यायान्तर्गतपुच्छपरं वक्तव्यम्। किञ्च ब्रह्म पुच्छमिति वाक्य एव ब्रह्मत्वस्यावगतत्वात् सूत्रेण ज्ञाप्यं किमस्ति ? आनन्दमयपर्यायगतब्रह्मेति आनन्दमयपदस्य सौत्रस्यार्थवर्णने च ब्रह्म ब्रह्मेत्युक्तं स्यात्। तन्न घटते। विवादाभावाच्च। अथानन्दमयो न ब्रह्मेति सूत्रार्थ इति चेत्—नञध्याहारो महान् दोषः

---

*19 இந்த கட்டத்தில் ஆனந்தமயமே ப்ரதானம் – புச்சமன்று.* **सोऽकामयत** *என்கிற காரண வாக்யத்தில்* **स:** *என்று புல்லிங்கமான பதத்தாலே காரணம் சொல்லப்பெற்றது. அது புச்ச ப்ரஹ்மமாகில் புல்லிங்க பதமிராது, ப்ரதானமாகக் கீழே கூறப்பட்டதைச் சொல்லும்* **स:** *என்கிற சொல் புல்லிங்கமாயிருப்பதால் ஆனந்தமயனே ப்ரதானம்.(2) அன்னமயாதிகளை வேறன்றி அததன் அம்சங்களான தலை கை கால் முதலானவையாகக் காண்பித்தாற் போல ஆனந்தமயனை ப்ரியமோத புச்ச ப்ரஹ்மாதிகளான அவயவங்களாக*

**षष्ठ्यादिश्चांशभावात् निरवधिकतया रूपणादानुरूप्यात्**
**पर्यायत्वादनन्यात्मकवचनतया पुच्छहेतुः परास्तः ॥ १९ ॥**

---

(5) आनन्दमयस्यैव परमात्मत्वे हेत्वन्तरमाह **अन्योऽन्तरो नेति** । पूर्वमात्मान्तरस्य कथनीयत्वे यथा 'अन्योऽन्तर आत्मा' इति निर्देशः तथाऽत्रानन्दमयपर्यायानन्तरम्, 'अन्योन्तर आत्मा ब्रह्म' इत्यनिर्देसत् आनन्दमय एवात्मत्वपर्यवसानमिति ॥ अथ पूर्वश्लोकोक्तान् हेतून् परास्यति **षष्ठीति** । उत्तरार्धस्यैव पूर्वहेतुपरासकत्वं द्वितीयव्याख्यायामप्युक्तम् । **षष्ठ्यादि**रित्यस्य **पुच्छहेतु**रित्यनेनान्वयः । षष्ठ्याद्यादिरूपः सर्वः पुच्छहेतुः अंशभावादिविवेचनेन परास्त इत्येकमेवेदं वाक्यम् । अतो **वचनतये**त्यत्र वाक्यं समाप्याथ अत इति पदाध्यहारेण व्याख्यानं न कार्यम् । **षष्ठ्यादि**रिति **आदि**पदेन पूर्वश्लोकोक्ताः आनन्दमयस्य श्लोकानुक्तत्वं ज्ञातत्वं ब्रह्मणोऽत्रयवित्वायोगः, आनन्दमयातिरिक्तात्माश्रवणम् आनन्दमयस्य शोध्यत्वं, विकारवाचिमयट्प्रत्ययबोध्यत्वमिति हेतूनां ग्रहणम् इमे हेतवः षष्ठीप्रभृतयः अंशत्वादिभिः हेतुभिः परास्ताः इत्यर्थः । यथाक्रमं हेत्वन्वयायोगात् यथार्हमन्वयोऽभिमतः । 'तस्य ब्रह्म पुच्छं प्रतिष्ठा' इत्यत्र तस्येति षष्ठी पुच्छपुच्छिनोरंशांशिभावरूपभेदसंबन्धसत्त्वात् तत्परतयोपपद्यते । अतो नान्नमय-प्राणमयादिवत् आनन्दमय. ब्रह्मणोर्भेदप्रसक्तिः । अत एव श्लोके ब्रह्मपदनिर्देशः आनन्दविशिष्टरूपा-

---

அவயவி ப்ரதானம், அவயவம் அப்ரதானம், அன்னமயாதிகோச கட்டங்களில் ச்லோகங்கள் அன்னமயாதிகளைச் சொல்லுகின்றன, அங்கங்குள்ள புச்சங்களைச் சொல்லவில்லை. அதுபோல் இந்த **अन्नेव** என்கிற ச்லோகமும் புச்சத்தைப் பற்றியதல்ல. **ब्रह्म**பதமுளதே யென்னில், ஆனந்தமயனும் ப்ரஹ்மமும் ஒன்றென அறிவிப்பதற்காகவாம் அது புச்சம் ப்ரஹ்மமானால் ஸூத்ரத்தில் **आनन्दमयः** என்றவிடத்திலே **पुच्छ**மென்றிருக்க வேண்டும் அது ஆனந்தமய பக்ஷத்திலே ஸ்வரஸம். **तस्यैष एव** என்கிற வாக்யம் வேறுத்மாவைச் சொல்வதானால் **तस्माद्वा एतस्मादानन्दमयादन्योऽन्तर आत्मा ब्रह्म** என்றும் வாக்யமிருக்கும். அதில்லையே, இவை ஆனந்தமயமே ப்ரஹ்மமென்பதற்கு **साधक**ங்களாம்.

முன் ச்லோகத்தில் ஷஷ்டீ முதலாகச் சொன்ன புச்ச ப்ரஹ்மவாத ஹேதுக்கள் அம்சபாவம் முதலான ஹேதுக்களைக் கொண்டு தள்ளப்படும். இதன் விவரணமாவது—ஷஷ்டீவிபக்தியால் வேறுபாடு தெரிகிறதென்பதில்லை. மலையின் முடியென்றால் மலையைவிட முடி வேறாயிடுமா? அதன் அம்சமேயது. அதுபோல் ஆனந்தமயத்தின் அம்சம் ப்ரஹ்மம், அதனால் ஷஷ்டீ, இப்படி இரண்டுமொன்றாகையால்தான் ச்லோகம் ப்ரஹ்மத்தைச் சொல்லிற்று. பொதுவாக ஆனந்தம் அறியப்பட்டிருந்தாலும், ப்ரஹ்மா

नन्दमयपदार्थे ब्रह्मणो विशेष्यांशत्वादभेदादुपपद्यते । एवमंशभावादित्यनेन हेतुद्वयपरासादुपरि तृतीयप
आनन्दस्य सर्वज्ञातत्वादज्ञातत्वाभावात् तज्ज्ञापनं व्यर्थमिति यत्, तत् ब्रह्मणोऽपि तुल्यम् ;
जीवस्य च भवन्मते एकत्वात् अहमिति स्वयम्प्रकाशतया तस्यापि ज्ञातत्वात् । अथापि सत्य
कारेणापरिच्छिन्नतया च तदज्ञातमिति चेत्—आनन्दमयोऽपि अनवधिकातिशयानन्दत्वेनाज्ञात इति त
तज्ज्ञापनमपि स्थाने । तदानन्दस्यानवधिकत्वं प्रमाणसिद्धम् । अत एव **विकारवाचकत्वच** इति
रप्यपास्तः । आनन्दमीमांसया आनन्दप्राचुर्यस्यानवधिकत्वस्य चोक्तत्वात् मयटः प्राचुर्यार्थकतया वि
वाचित्वाभावात् । तदुक्तं सूत्रे, "विकारशब्दान्नेति चेन्न प्राचुर्यात्" इति । अतोऽत्र श्लोके तद
इति न्यूनता न ; चकारेण हेतुसाध्ययोः समुच्चयस्तु क्लिष्टः । यदपि ब्रह्मणोऽवयवित्वं न भवति नि
त्वादिति, तदपि न ; **रूपणात्** । अवयवित्ववत् अवयवत्वमपि हि तस्य न भवतीति कथं पुच्छ
वयवत्वोक्तिः । अवयवतया रूपणमात्रम्, न तु तद्वास्तवतेति चेत्, तथाऽवयवित्वेनापि रूपणं यु
उक्तश्चेदमपि सूत्र एव, "प्रियशिरस्त्वाद्यप्राप्तिरुपचयापचयौ हि भेदे" इति । यत्तु **'तस्यान्य** आ
**श्रुत** इति, तत्र विशेषतो वक्तव्यमस्ति ; तत् परस्तात् वदेम । यत्तु शोध्यत्वमनुपपन्नमिति, तत्रोच्यते उ
**प्या**दिति । न हि अन्नमय. प्राणमय. मनोमय.विज्ञानमयानामेकरूपं शोध्यत्वम् ; अन्नमयस्य श
प्राणमयादीनां स्नानेन मलनिरसनाभावात् । सत्प्रदेशवायुसेवन. प्राणायामादिना प्राणशोधनम् । चि
मनसा ग्रहणाय मनश्शोधनं निष्कामकर्मशुद्धाहारसेवनादिसंपाद्यम् । विद्याप्रतिबन्धकपापविमोचनेन वि
मयशोधनम् । तद्वत् भगवतोऽपि निग्रहसंकल्पवत्तया कलुषस्य शास्त्रोक्तोपायानुष्ठानेन कालुष्यापन
शोध्यत्वं संभवत्येव । यदवशिष्टम् **तस्यान्य आत्मा श्रुत** इति, तन्न ; आनन्दमयपर्यायानन्तरम्, '
एव शारीर आत्मा यः पूर्वस्य' इति वाक्यं यत्, तत् किलाभिमतम् । तच्च न शांकरव्याख्या
आत्मान्तरस्थापकम् । तस्य हि तन्मते एवमर्थः—पूर्वस्य तस्येति विशेषणविशेष्यभावेनान्वयः ।
तस्य विज्ञानमयस्य एष एव शारीरात्मा, य एष आनन्दमयः इति । अनेनानन्दमयस्य विज्ञानमयं
आत्मत्वं दृढीकरणाय निगमितम् । न त्वानन्दमयातिरिक्त आत्मा अनेन वाक्येनोक्त इति । अ
ष्याभिमतयोजनायामेवान्यात्मशंका स्यात् । अस्मद्भाष्ये हि प्रथम तच्छब्दघटितवाक्यश्रुतस्य तच्छ
यच्छब्दघटितवाक्यनिविष्टस्य पूर्वस्येति पदस्य चैकवाक्यतया पूर्वस्य तस्यैष एवेति शांकरव्याख्यानं न स्वर
कृत्वा, पूर्वस्य विज्ञानमयस्य य आत्मा 'तस्माद्वा एतस्मादात्मनः' इति वाक्यप्रभृत्यवगमितः, ए

---

னந்தம் அளவற்றதாக அறியப்படாமையால் அறியாமையைச்சொன்
தகும். ப்ரஹ்மம் அவயவியாகாதே என்னில், ஆகாது. ப்ரஹ்மம் புச்சமாகு
அதுபோல், அவயவமற்ற அதை அவயவியாகவும் தலை முதலாகவுள்ள தாக
ரூபணமே = கல்பனையே. ப்ரஹ்மம் சோதிக்கப்படத் தக்கதோ என்
சுத்தி யென்பது அததற்குத் தக்கவாறு வேறுபடுவதால் **आनुरूप्यात्**—
வாருகு மாகையால் ப்ரஹ்மத்திற்குக் குற்றமுள்ள நம்மிடம் சீற்றமிருப்ப

तस्य प्रकृतानन्दमयस्यात्मा इत्यर्थ उक्तः। एवमर्थवर्णने आनन्दमये आनन्दमयं प्रत्यात्मत्वप्रतीतिर्भवतीति सत्यम्। अथापि श्रुतेरेतदतिरिक्तात्मसद्भावख्यापनपरत्वे पूर्वमिवेहापि, "तस्माद्वा एतस्मादानन्दमयात् अन्योऽन्तर आत्मा ब्रह्म" इति वाक्यं श्रूयेत। तथाऽन्यानिर्देशात् अत्रानन्दमयस्यैवानन्दमयात्मकत्वं विवक्षितम्। तच्च 'पतिं विश्वस्यात्मेश्वरम्' इत्यत्रात्मेश्वरकत्वकथनवत् स्वस्य स्वयमेवात्मेति अनन्यात्मकत्वदृढीकाराय। यथा 'स्वे महिम्नि प्रतिष्ठितः' इति, तद्वत्। नन्वानन्दमयं प्रति ब्रह्मण आत्मत्वे सुवचे किमित्येवं क्लिष्टनिर्वाह इति चेत्—एतन्निरासायैव **पर्यायत्वा**दिति तदुपपादनम्। आनन्दमयपदेन आनन्दप्रचुरं निर्दिश्य प्रियमोदादिशब्दैर्धर्मभूतान् आनन्दान्, ब्रह्म पुच्छमिति धर्मिभूतमानन्दञ्च निर्दिशन्ती श्रुतिः, ब्रह्मानन्दमयपदयोः समानविशेष्यकार्थोपस्थापकत्वात् रामभरताग्रजशब्दयोरिव विशेषणांशभेदेऽपि पर्यायत्वं दर्शयति। अतोऽन्यत्वायोगात् अनन्यात्मकत्वमेव विवक्षणीयमिति। एवं शांकरेऽस्य वाक्यस्य विज्ञानमयादन्योन्तर आत्माऽऽनन्दमय इति वाक्यपर्यायत्वात् अस्मन्मते अनन्यात्मत्ववचनतया च नात्मान्तरसिद्धिः। पूर्वव्याख्ययोस्तु **पर्यायत्वा**दिति पृथक्कृत्य श्लोके आनन्दमयानिर्देशेन ब्रह्मनिर्देशादन्यात्मसिद्धिरिति शंकाशामतपरतया व्याख्यातम्, तदपि युज्यते। अस्माभिस्तु यथासंभवं पूर्वश्लोकदर्शितपूर्वपक्षक्रमेण परिहारक्रमा इत्यस्याभंगाय तस्याः प्रागेव शमिततामुपपाद्यान्तिमहेतूपपादकतया व्याख्यातम्। अनेनेदमपि शमितम्—यत्—सोऽकामयतेति पुंलिङ्गश्रवणं नानन्दमयप्राधान्यसाधकम्। श्लोके नपुंसकब्रह्मपदश्रवणेऽपि तदनन्तरे, तस्यैव एव शारीर आत्मेति वाक्ये आत्मपदेन ब्रह्मणः परामर्शात् ब्रह्मण आनन्दमयं प्रति आत्मत्वस्य तत्र कथनात् विधेयवाच्यात्मपदानुसारेण एष इति पुंलिङ्गेनापि ब्रह्मण एव निर्देशात् सोऽकामयतेति स आत्मैवोच्यत इति। एतच्छमनप्रकारश्च—आनन्दमयपदवाच्ये यो धर्म्यंशः, तस्यैव "प्रियमोदप्रमोदानन्दानामा**श्रयतया** अखण्डरूपमानन्दमयम्" इति भाष्योक्तरीत्या ब्रह्मपदेन ग्रहणात्, **पर्यायत्वात्** व्यक्तिभेदाभावात् अन्यात्मकत्वासंभवात् आत्मपदमानन्दमयपरमेवेति स इति पदेनापि स एव परामृश्यते। एष इति पदस्य वक्ष्यमाणब्रह्मेत्यर्थवर्णनस्य क्लिष्टत्वात् पुच्छब्रह्मणश्चोपसर्जनतया एष इति ग्रहणायोगात् श्लोकस्य च पुच्छत्वदवयविविषयकत्वस्य प्रक्रमसिद्धत्वादिति। तत् सिद्धम् आनन्दमयपदवाच्यमेव ब्रह्मेति। एतच्छ्लोकद्वयमानन्दमयाधिकरणे

---

அதைப் போக்கித் தெளிவு பெறுவிப்பதே சோதனமாகும். **पर्यायत्वादनन्यात्मकवचनतया.** ஆனந்தமய **பதம்**. பரிபூர்ணனந்தமுடையதாக எதைச் சொல்லுமோ, அந்த வஸ்துவே ப்ரஹ்மபதத்தாலே பெரிதென்ற ஆகாரத்தாலே சொல்லப்படுகிறது. ஆக இரண்டு சொல்லும் பர்யாயம். = ஒரேபொருள் உள்ளது. அதனுல் ப்ரஹ்ம பதமிருந்தாலும் ஆனந்தமய பதமிருந்தாலு மொன்றே. ஒரே வஸ்துவாகையால் ஆனந்த மயத்திற்கு ப்ரஹ்மம் ஆத்மா வாகாது. ஆக **तस्यैव एव** என்று அதற்கு அதே ஆத்மா என்றுல் வேறு ஆத்மா

(1-1-7) **कपिस्त्वादित्यः कं पिबति किरणैरित्यपि कपि-
र्भस्तीत्याम्नातः स कपिरमुनाऽस्तं यदिह तत् ।**

---

**श्रुतप्रकाशिकाया**मप्यनूदितमन्ते । एतदर्थोऽपि प्राक् विस्तरे तत्र क्रोडीकृतः ॥ १९ ॥

मूले समन्वयाधिकरणपर्यन्तमेव स्थलनिर्देशः कृतः। **ईक्षत्यधिकरणादिविषयकश्लोकानामर्थदर्शनत** एव स्थलं विज्ञातव्यम् । अथान्तरधिकरणविषयवाक्यस्थकप्यासशब्दार्थविचारः । अन्तरादित्याधिकरणेति व्यवहारो व्याख्ययोः कृतः ; विषयवाक्ये अन्तरादित्य इति पदसत्त्वात् । सूत्रे अन्तरित्येतावत एव स्थितेः अन्तरधिकरणमित्येव प्रायिको व्यवहारः । अत्र सप्त श्लोकाः । एतदनुसारेणैव प्रवृत्तायां **श्रुतप्रकाशिकायां** वेदार्थसंग्रहतात्**पर्यदीपिकायाश्चो**क्तम्, 'वाक्यकारेण **कप्यास**पदस्य षडर्था उक्ताः' इति । **वाक्यं** नाम **ब्रह्मनन्दि**कृतं छान्दोग्योपनिषद्व्याख्यानम् । तद्व्याख्या **द्रमिडभाष्यम्** । क्वचित् षण्णामर्थानां द्रमिडभाष्योक्तत्वेन निर्देशः वाक्योक्तस्य तत्र विशदमवगम्यमानत्वादिति ध्येयम् । अत्र व्याख्ययोर्वृत्तिकारोक्तत्वेन निर्देशे वृत्तिपदेन वाक्यमेव ग्राह्यम् । **वृत्ति**रिति प्रसिद्धं व्याख्यानं तु बोधायनीयं ब्रह्मसूत्रव्याख्यानम् । नात्र तद्विवक्षा । तत्रैतदर्थविचारसद्भावस्य प्राच्यैरनुक्तेः । एषु षट्स्वर्थेषु ग्राह्यान् त्रीनर्थान् त्रिभिः श्लोकैरादौ दर्शयति, अग्राह्यान् अन्यांस्त्रीन् उपरि त्रिभिः श्लोकैरनूद्य निरसिष्यति । कथमयं ग्राह्याग्राह्यविभागः, वाक्यग्रन्थे तददर्शनादित्याक्षेपे समाधास्यति सप्तमेन । ग्राह्यमर्थत्रयमिदम्, **वेदार्थसंग्रहे** भाष्यकारैः 'गम्भीराम्भस्संभूत.सुमृष्टनाल.रविकरविकसितपुण्डरीकदलामलायतेक्षण' इति भगवद्विशेषणप्रयोगबलेन व्यञ्जितम् । अत्र तेनैव क्रमेणार्थनिर्देशे कार्ये व्युत्क्रमेण तन्निर्देशः तत्रोत्तरोत्तरार्थे भाष्यकृतामादरातिशय इत्याशयेन । वाक्यग्रन्थे "आदित्यक्षिप्तं वा श्रीमत्त्वात्" इति एतदर्थकथनावसरे वाकारप्रयोगात् अर्थत्रयनिरासः ; पूर्वपक्षनिरसनाय सिद्धान्तारम्भे वाकारप्रयोगस्य मीमांसायां प्रसिद्धत्वात् । तत्र हेतुनिर्देशात् अस्यार्थस्यातिशयश्च ज्ञायते । शेषं सप्तमे श्लोके द्रष्टव्यम् । रविकरविकसितेत्यर्थं कप्यासपदे दर्शयति **कपि**रिति । कपिशब्दार्थः आदित्यः । तुशब्देन, "कपिः स्यात् सिंहके शाखामृगे च मधुसूदने" इति वैयाकरणदर्शितकोशस्थम्, "कपयोऽर्कैभवानराः"

---

இல்லையென்றதாம். இப்படி புச்ச ப்ரஹ்ம வாதம் நிரஸிக்கப்பட்டது (19)

20 அந்தரதிகரண விஷய வாக்யத்திலுள்ள **கப்யாஸ** பதத்திற்குப் பொருளை விளக்குகிறார் ஏழு ச்லோகங்களால். பண்டைய நூலிலேயே இதற்கு ஆறு பொருள்களைக் காட்டி மூன்று இசையப்பெற்றன. அவற்றை விட்டு ஆபாஸமான பொருள் சாங்கராதி பாஷ்யத்தில் கொண்டிருப்பது உசிதமன்றென்று தெரிவிப்பதற்காகவாம் இது. முதல் ச்லோகத்தில் ஒரு முக்யமான பொருள் கூறப்படுகிறது **கப்யாஸம்—கபி—ஆஸம்.** கபி என்ற சொல்லுக்கு சூரியன் பொருள், கம் பிபதி = ஜலத்தை உறிகிறான் தன்

प्रतीमः कप्यासं ; दिवसकरतेजोविकसितः

स पद्मः श्रीमत्त्वादगणि भगवच्चक्षुरुपमा ॥ २० ॥

नाळं(ळः ?) कपिर्भवति कं पिबतीति, तस्मिन्

यस्यास आसनम् , उशन्ति मनीषिणस्तत् ।

कप्यासम् ; उज्ज्वलमुदारमिदं सरोजं

चक्षुर्निदर्शनमुदीरितमीश्वरस्य ॥ २१ ॥

---

इति नानार्थरत्नमालास्थश्चार्थान्तरं व्यावर्त्यते । आदित्येऽस्य योगव्युत्पत्तिं दर्शयति **क**मिति । **कं** जलं किरणैः यः पिबति स कपिः । आह च कालिदासः, "शरैरुस्रैरिवोदीच्यान् उद्धरिष्यन् रसानिव" (रघु) इति । इत्यपीति **अ**पिना कोशसमुच्चयः । अनुक्तसमुच्चयस्य युक्तत्वात् । वानरादौ 'कपि चलने' इति योगः स्यात् । वानरे रूढ्यतिशयसत्त्वेऽपि वैदिकप्रयोगे वेदप्रसिद्धार्थग्रहणं युक्तमित्याशयेनाह कपिरिति । **स कपिः**= आदित्यरूपकपिः 'कपिर्वभस्ति तेजनम्' इत्याम्नातः=श्रुत्युक्तः । **आस**पदार्थमाहामुनेति । **अमुना** अस्यमानमित्यर्थः सुलभः । **अमुने**ति विप्रकृष्टवाचिपदप्रयोगः किरणद्वारैवासनमिति ज्ञापनार्थः । आदित्येनास्यमानमिति योऽर्थः तमिह श्रुतिवाक्ये **कप्यासं प्रतीमः** कप्यासपदार्थत्वेन निश्चिनुमः । उत्तमपुरुषबहुवचनेनास्मत्संप्रदायेऽस्यार्थस्य विशेषेणाऽऽदर इति ज्ञाप्यते । शब्दार्थविवरणं **दिवसकरे**त्यादिना । **सः** पुण्डरीकपदोक्तः पद्मः भगवच्चक्षुष **उपमा** उपमानत्वेन गण्यते स्म । वाक्यकारोक्तरीत्या **श्रीमत्त्वात्** , सूर्यविकास्यमानतादशायामेव कान्त्यतिशयात् । सूर्यविकास्यमित्यनेनैव नालस्थत्वं जलाशयस्थत्वञ्च सिद्ध्यति ; तदैव तेन विकास्यमानत्वात् ॥ २० ॥

21 वेदकोशप्रसिद्ध्यभावेऽपि अबाधितत्वात् अहेयत्वात् विशेषकत्वाच्च कपिशब्दस्य नालरूपोऽर्थोऽपि **वाक्यकारा**दिभिः स्वीकृत इति द्वितीयमर्थमाह **नाळ**मिति । नालं मृणालकाण्डम् कपिशब्दवाच्यम्, कं पिबतीति पूर्वोक्तयोगव्युत्पत्तेः । कपौ **आसः** ; आस उपवेशे । आसनं स्थितिर्यस्येति व्यधिकरणबहुव्रीहिः । घञि अधिकरणार्थे तु समानाधिकरणबहुव्रीहिरेव । कपिर्यस्यासः, **तत्** नालासनकत्वविशिष्टं मनीषिणः ब्रह्मनन्दि-द्रमिडाचार्य-भाष्यकारादयः कप्यासपदार्थत्वेन **उशन्ति** इच्छन्ति । **कप्यास**मित्यस्य पूर्वार्धे **उशन्ती**त्यत्रान्वयः । तेन लभ्योऽर्थः उज्ज्वलत्वं शोभातिशयः, उदारत्वं

---

கிரணங்களால் அவன். வேதத்தில் சூர்யன் விஷயமாக ப்ரயோகம் உளது. அந்த சூரியனாலே ஆஸம் மலர்விக்கப் பெற்ற புண்டரீகமென்றதாம், அது ஒளியும் அழகும் நிறைந்திருப்பதால் எம்பெருமானின் திருக்கண்ணுக்கு உவமையாகும். (20)

21 2—வது பொருள்—கபி என்றால் ஜலத்தை யுறிகின்ற வஸ்து

कुमुदकमिह प्यासं यस्यासनं यदि वोद्भवः
कविभिरुदितं कप्यासं तद् गभीरजलोदयात् ।
शिशिरमधुरं श्रीमत् दामोदराक्षिनिदर्शनं
भवति नलिनं ; लुप्ताकारस्त्वपिः पिहितादिवत् ॥ २२ ॥

दृष्टिचित्तयोस्तापशान्तिप्रीत्यतिशयदायित्वम् । ईदृशस्य कमलस्य भगवन्नेत्रोपमानत्वं श्रुत्युदीरितम् ॥ सुपृष्ठं नालमित्यनेनायमर्थो दर्शितः । सुपृष्ठत्वं नाळस्य पुष्टत्वात् । (त्रिलिंगत्वात् नाळः कपिरिति पाठो वा) ॥२१॥

22 अर्थलभ्यस्यैव जलस्थत्वस्य कप्यासपदेनोक्तिः गम्भीराम्भस्सम्भूतिरूपविशेषाभिप्रायेण प्रयोजनमालक्ष्य तृतीयमप्यर्थं स्वीकरोति कमिति । 'कम् उदकम्' इतीहोक्तं प्रागेवोक्तं मन्तव्यम् । अथवा पूर्वश्लोकद्वये कशब्देन विवक्षितमुदकमेवेत्यपि कमुदकमित्यस्यार्थः । तृतीयेऽप्येतदित्याह इहेति । उदकं प्यासः । अपिरुपसर्गः । वागुरिपक्षेणाकारलोपः । अपिधानमित्यत्र पिधानमितिवत् । आस उपवेशन इति धातुग्रहणे आसनमर्थः । असु क्षेपे इति धातुग्रहणे अप्यासः उत्क्षेपः उद्भेदः उद्भवः । यदिवेत्यस्य अयमेवार्थः श्लोके भवशब्दश्रवणात् अस भुवीति धातुमप्यभिप्रयन्ति । आर्धधातुकपरत्वाभावात् आस इति रूपं न स्यात्, भाव इत्येव स्यादिति शंकायां क्लेशेन निर्वहन्ति । असु क्षेपे इति ग्रहणे तु नानौचित्यम् । के प्यासो यस्य तत् कप्यासम् । अधिकरणार्थे घञि समानाधिकरणबहुव्रीहिः स्यात् । कविभिः कान्तदर्शिभिः कोशकारभाष्यकारादिभिः गभीरत्वविशिष्टजलोद्भवत्वरूप विशेषज्ञापनार्थतया कप्यासशब्दार्थतया स्वीकृतम् । जले शैत्यस्य माधुर्यस्य च सत्त्वादत्रापि कार्ये तल्लाभः, तत्साहित्यात् कान्त्यतिशयसिद्धिश्च । अत एव नलिनं दामोदराक्षिदृष्टान्तः । दाम्ना तदुदरबन्धे क्रियमाणे ईदृशपारतन्त्र्यलाभपरितुष्टेन कृष्णेन दुःखबाष्पाभिमतं आनन्दबाष्पमेव विसृष्टमिति तदक्षि तदा जलप्लुतं सत् जलस्थपद्मतुल्यमलक्ष्यतेति चाभिप्रायः । ननु अप्यास इति वक्तव्ये कथमकाराश्रवणम्, तत्राह लुप्तेति । वागुरिपक्षात् लुप्तः अकारो यत्र, स उपसर्ग इह । पिहितादिवत् पिहित-पिधान. वतंसादिपदेष्विवेति ॥ २२ ॥

அது தாமரைத்தண்டு. அதன்மேல் ஆஸம்—ஆஸனம் வீற்றிருப்பதாம் புண்டரீகம். தண்டுடன் கூடிய தாமரைமலருக்கு ஒளியும் அழகும் கண்ணுக்கு ப்ரீதியளிக்கையுமுண்டு. (21)

22 3வது பொருள். க-ப்யாஸம்-ஜலத்திலிருப்பது—ஜலத்தில் மேலெழும்பி நிற்பது. எங்கும் அது ஜலத்திலுண்டாவதானாலும் ஆழமாய் நிறைந்த ஜலத்திலுண்டாகியிருப்பதென்றதாம், அப்போது குளிர்ச்சியும் தேன் பெருக இனியதுமாகை குறித்ததாம் கப்யாஸம் என்ற சொல். உபஸர்கத்திலுள்ள அகரம் தொக்கி ப்யாஸமென்பதும் இலக்கணத்தில் இசைந்ததே. (22)

**कप्यासं भानुबिम्बं हरिभजनपदं हृत्सरोजञ्च यद्वत्**
**तद्वच्चोपासकाक्षिद्वयमिति तु न सत् ; तत्र यत् पुण्डरीकम् ।**
**गौणं ; तस्याक्षिणी इत्युभयपदनिराकांक्षतानादरेणा-**
**प्यध्याहारः ; समानाधिकृतपदगतित्यक्तिरूर्ध्वे तदुक्तिः ॥ २३ ॥**

---

23 वाक्यकारदर्शितान् अन्यांस्त्रीनर्थान् असंमतान् क्रमेणानूद्य तत्रासंमतिहेतुं दर्शयति **कप्यासम्**िति । "य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते हिरण्यश्मश्रुर्हिरण्यकेश आप्रणखात् सर्व एव सुवर्णः । तस्य यथा कप्यासं पुण्डरीकमेवमक्षिणी । तस्योदिति नाम" इति श्रुतिः । प्रथमतो विग्रहवर्णनम्, ततोऽक्षिवर्णनम्, ततो नामनिर्देशः । सर्वस्य हिरण्यवद्भावेऽपि अक्षिणी परं सूर्यकरविकसितरक्ताम्भोजसदृशे इत्यर्थः पूर्वमुक्तः । अत्र त्वन्यथोच्यते—नेदं वाक्यं भगवदक्षिवर्णनरूपम् । किंतूपासकस्य भगवदुपासनस्थानमुपासकस्याक्षीत्युच्यते, यथा सूर्यमण्डलं हृदयपुण्डरीकञ्चोपासनस्थानम्, तथा नेत्रमपीति तदर्थः । तथाच **कप्यासम्**—कपेरादित्यस्य आसं स्थानमिति भानुबिम्बं तन्मण्डलमुच्यते । बहुलग्रहणादधिकरणे छञू इत्याहुः । भावे घञि **आसः** स्थितिः कपेर्यत्रेति बहुव्रीहौ कप्यासमिति वा । पुण्डरीकपदं हृदयकमलपरम् । तदुभयं यद्वत् हरेरुपासनस्य स्थानम्, तथा **अक्षिणी** उपासकाक्षिद्वयञ्चेति अत्यर्थः । इमयर्थं निरस्यति **इति तु न स**दिति । हेतुमाह **तत्रे**ति । **यत्** यस्मात् **तत्र** एवमर्थस्थितौ पुण्डरीकपदं कमलपुष्पवाचि, पद्मकोशप्रतीकाशं हृदयम्' इत्युक्तरीत्या तत्सादृश्यात् गौणं=गौणीवृत्तिमत् भवेत् । किञ्च **तस्ययथे**ति वाक्ये तस्येति पदस्याक्षिणी इत्यत्रान्वयेनोभयोर्निराकांक्षता पूर्वव्याख्याने ; इदानीं तु अक्षिणी इत्यनेनोपासकपुरुषाक्षिग्रहणात्तस्येत्यस्य पूर्वोक्तपरामर्शकतया, परमपुरुषस्योपासनस्थानमिति पदमध्याहृत्य तत्रान्वयो वक्तव्यः । अक्षिणी इत्यत्र चोपासकस्येति पदमध्याहार्यम् । तथाचो**भयपदयोः तस्य अक्षिणी** इत्युभयोः पदयोर्मिथोऽन्वयेनैव या निराकांक्षता तदनादरणं दोषः ; अन्यपदद्वयाकांक्षाकल्पनमपि दोषः ; तेन सहाध्याहारोऽपि दोषः । दोषान्तरमाह **समाने**ति । कप्यासं पुण्डरीकमित्यत्र चकाराभावात् कप्यासपदस्य विशेषणत्वार्हत्वाच्च पदयोः सामानाधिकरण्यं स्वरसप्रतीतम् । तत्त्यागो दोष इत्यर्थः । समानाधि-

---

23 கப்யாஸபதத்திற்கு மூன்று பொருள்கள் கொள்ளப்பெற்றன. வேறு மூன்று பொருள்களை முறையே மூன்று ச்லோகங்களால் கூறிக் கழிக்கிறார் 'அவற்றில்' முதற் பொருள்—

கபி—ஸூர்யனின் ஆஸனமான பிம்பம்—மண்டலம் கப்யாஸம். பகவானை த்யானம் செய்ய அதோர் இடம். ஹ்ருதய புண்டரீகமும் இடம். இவ்விரண்டு போல் உபாஸகனுடைய இரு கண்களும் உபாஸனத்திற்கிடமென்று வாக்யத்திற்குப் பொருளென்பர். இது சரியல்ல. புண்டரீக பதத்திற்குத் தாமரை தான் நேரான பொருள். ஹ்ருதயமென்ற பொருள் முக்கியமாகாது. அதனால் மாணவன் விஷயமான ஸிம்ஹபதம் போலாகும். மேலும் **तस्य यथा**

करणपदेति वक्तव्यत्वात् **अधिकृत**पदमधिकरणपरम्, 'क्तोऽधिकरणे च ध्रौव्यगतिप्रत्यवसानार्थेभ्यः' इति 'मुकुन्दस्याऽऽसितमिदम्' इत्यत्रेवाधिकरणे क्तप्रत्यय इति **रत्नसारिणी**। अधिशब्दस्योपर्यर्थकत्वात् अधिकरोति–उपरितनः करोति, यदुपरिस्थितो व्याप्रियते तत् ऽधिकरणम्। भूतलोपरि घटोऽस्तीति भूतलमधिकरणम्। अस्मिन्नर्थे अयं शब्दो वर्तत इति प्रयोगात् अर्थोऽधिकरणम्। अथवा, "यदधिकृत्य प्रवर्तते तत् प्रयोजनम्" इति प्रयोगात् अधिकृत्येत्यस्य उद्दिश्येत्यर्थः। अधिकृतमुद्देश्यम्। तात्पर्यमित्यादाविव शब्दं इति अर्थस्य परत्वात् उद्देश्यत्वात् अधिकृतपदमुद्देश्यार्थकं सत् समानम् एकम्, अधिकृतम्–उद्देश्यम्–अर्थः ययोस्ते समानाधिकृतपदे इत्यपि स्यात्। यद्वा समानेऽर्थे अधिकृतयोः पदयोरित्यर्थः। यद्वा समानेऽर्थेऽधिकृता या पदगतिरिति गतिविशेषणम्। **गतिः** प्रवृत्तिः बोधनव्यपारः। अथवा इमे पदे समानाधिकृते इति या गतिः ज्ञानं स्वरसोत्पन्नमिति। तस्याः **त्यक्तिः**-त्याग इत्यर्थः। दोषान्तरमाह **ऊर्ध्व**मिति। अयमर्थः—इदं वाक्यं भानुबिम्बहृत्पुण्डरीकयोरिव अक्ष्णोरुपासनस्थानताबोधकं न भवति। पूर्वमादित्यमण्डलस्यैव स्थानत्वकथनात्, हृदयस्य तथात्वानवगतेः। श्रुत्यन्तरप्रसिद्धिरिति चेत्, सा अक्ष्णोपि तुल्या। किञ्चात्रोद्गीथे आदित्यमण्डलान्तर्वर्तिपुरुषदृष्टिः अक्ष्यन्तर्वर्तिपुरुषदृष्टिरित्युभयमेवेष्टम्। न तु हृदयकमलवर्तिपुरुषदृष्टिरपि। अतो यथा पुण्डरीकमिति नोपपद्यते अक्षिणी इति द्विवचनमपि न घटते। एकस्य दक्षिणस्यैवाक्ष्णः उपरि स्थानतायाः वक्ष्यमाणत्वात्। अत्र द्वित्वश्रवणात् उपरितनवाक्यमनुवादः; एकत्वमविवक्षितमिति चेत्–तर्हि ऊर्ध्वं तदुक्तिश्च दोषः; पुनरुक्तिरूपत्वात्। एकोपासने आदित्यविषयके स्थानद्वयविधानायोगात् उपर्येव तदुक्तिर्युक्ता। किञ्च **ऊर्ध्वं** रूपवर्णन.नामकथनानन्तरमुपासनस्थानोक्तिर्युक्ता, न तु तस्योदिति नामेति नामकथनात् प्रागित्यप्यर्थः। अतो गौणत्व.निराकांक्षताभंग.अध्याहारकल्पन. सामानाधिकरण्यत्यागोर्ध्वोक्तिसत्तारूपा बहवो दोषा इति। एवं वा, यद्यक्ष्णः स्थानत्वमत्र नोच्यते, तर्हि अक्षिपुरुषदृष्टिर्विवक्षिता कथं लभ्यत इत्यत्राह **ऊर्ध्व**मिति तदुक्तिः उपर्यस्तीत्यर्थः॥ २३॥

---

என்ற வாக்யத்திலுள்ள தஸ்ய என்பதற்கு ஹிரண்மய புருஷன் பொருள். அதற்கு அக்ஷிணீ என்பதில் அந்வயம் ஸ்வரஸமாகத் தெரிகிறது. இப்படி இரு சொற்களும் சேர்ந்து ஆகாங்க்ஷை சாந்தமாகக் கூடியதாயிருக்க, உபாஸகனுடைய கண்களை அக்ஷிணீ என்ற சொல்லால் கொண்டால் 'தஸ்ய' என்பதை யந்வயிக்க 'உபாஸனத்திற்கு' என்ற சொல்லையும், இன்னொருடைய கண்கள் என்று தெரிவதற்காக 'உபாஸகனுடைய' என்ற சொல்லையும் சேர்க்கவேண்டும். தவிர, கப்யாஸம் வேறு. புண்டரீகம் வேறு என்பதும் ஸ்வரஸமன்று. உகாரமுமில்லை. கப்யாஸமான புண்டரீகமென்க. மேலுமிங்கே சொல்வது கண் உபாஸனத்திற்கு இடமென்று தானே. அதுவும் இங்கேமேலே சொல்லப்படுகிறது. மேலும் வலக்கண் ஒன்றேதான் இங்கு உபாஸனத்திற்கு இடம். இரண்டைச் சொல்வதும் தகாதென்றெல்லாம் ஆராய்க. (23)

कश्चिज्जल्पति मर्कटस्य जघनं कप्यासम् ; अक्ष्णोरयं
दृष्टान्तः कथमिष्यते भगवतः सत्येव गत्यन्तरे ।
सामानाधिकरण्यमत्र पदयोः प्राप्तं कुतस्त्यज्यते ?
पद्मं चेत् विशिनष्टि, तत्सदृशि तच्छब्दस्तु गौणस्तव(दा?) ॥ २४ ॥

24 त्याज्यं द्वितीयमर्थमनूद्य निरस्यति **कश्चि**दिति। कपे**र्मर्कटस्य** वानरस्य **जघनं** पृष्ठं कप्यासशब्दार्थत्वेन कश्चित् जल्पति। ननु वाक्यकारोक्त एवायमप्यर्थः ; तत् कथं जल्पतीति प्रयोगः॥ नैवम्। वाक्योक्तेषु षट्स्वर्थेषु के ग्राह्याः, कतमो ग्राह्यतमः इति विवेचने प्रवृत्तिः सर्वस्य सहजा। तत्रान्यान् सर्वान् विहाय मर्कटजघनरूपमेवार्थमाद्रियते चेत्—तद्विषये **जल्पती**ति प्रयोगः भगवच्चक्षुषोऽश्लीलोपमामसहमानानां नास्थाने। तथा हि शांकरोपनिषद्भाष्येऽयमेक एवार्थ उक्तः, अथापि त्यक्तः। एतदनुसारेण यादवप्रकाशकृतं व्याख्यानमप्येतन्मात्रविषयकमभवदिति तदसहिष्णुतया भगवद्रामानुजपादानामक्ष्णोरत्युष्णबाष्पस्राव आसीदिति इतिवृत्तवेदिनः। अवताररूपाणां व्यावहारिकसत्यत्वमप्यनिच्छतां भक्तिविहीनानां सगुणब्रह्मविद्यानिष्ठान् मन्दाधिकारितया मन्यमानानां निर्गुणजीवब्रह्मैक्यवादिनामुक्तेर्जल्पता भवितुमर्हतीति चाऽऽचार्याशयः। पक्षमिमं निरस्यति **अक्ष्णो**रिति। **भगवतः** ज्ञानशक्त्यादिषाड्गुण्यसंपन्नस्य सर्वसमाराध्यस्याक्षिध्यानेऽवतीर्णानां मर्कटपृष्ठे चित्तचलनं कथंकारं युज्यते। श्रुतिर्वक्ति ; कस्तत्रानुयोक्तव्य इति चेत्—युष्मानेवानुयुञ्ज्महे, यतोऽन्यार्थवर्णनरूपे गत्यन्तरे सति, पूर्वैर्ज्ञापिते च सति तत्त्यागेनेममेवार्थमाद्रियध्वे। अतो वाक्यकारेणापि कश्चिज्जल्पतीत्यभिप्रायेणैवायमर्थ उक्त इति भावः। अन्यश्च दोषः—कप्यासतुल्ये, पुण्डरीकतुल्ये चाक्षिणी इति द्वयोरुपमानत्वे चकार आवश्यकः। अतोऽध्याहारः पूर्वोक्तः समानाधिकृतपदगतित्यक्तिरूपश्च दोष इहापीति। ननु शांकरे कपिपृष्ठस्य साक्षादक्ष्युपमानत्वं नेष्टम्। तथा सति ह्यश्लीलतेति तत्त्यागेन, कप्यासपदस्य कपिपृष्ठतुल्यमित्यर्थः पुण्डरीकविशेषणम् ; कप्यासतुल्यपुण्डरीकं यथा एवमक्षिणीत्युक्तम्। अतः साक्षादनन्वयात् नाश्लीलता, नापि सामानाधिकरण्यहानिरित्यत्राह **पद्मं चे**दिति। कप्यासपदेन पुण्डरीकं विशेष्यते चेत्—कप्यासशब्दो मुख्यया वृत्त्या

24. ஒருவன் இந்த கப்யாஸபதத்திற்குக் குரங்கின் ஆசனவாய்ப் புறம் பொருளென்று பேசுகிறான். வேறு பொருள் உரைக்கக் கூடுமாயிருக்க எம்பெருமானின் திருக்கண்களுக்கு இதை உவமையாக எப்படி விரும்புவதோ. கப்யாஸமான புண்டரீகமென்று விசேஷண விசேஷ்யமாக ஸ்வரஸமாகத் தோன்றுவதை விடுவது ஏனோ? ஆகில் குரங்கின் ஆசனவாய்ப் புறம் போன்ற தாமரைப் பூப்போன்றவை திருக்கண்களென்று உரைப்போம். கபியின் ஆஸனத்தை தாமரைக்குதானே (சாங்கரப்படி) உவமையாக்குகிறோமென்னில், அப்போது கப்யாஸபதம் முக்கியப் பொருளற்று ஆகுபெயராகும். (உவமைக்கு உவமை உரைப்பதும் வீணாகும்.) (24)

**दरविकसितं कश्चित् कप्यासमाह ; गतिस्त्वियं**
**भवतु भगवच्चक्षुर्दृष्टान्तपंकजसंगता ।**

पृष्ठमात्रवाची, सिंहो माणवक इत्यत्र सिंहशब्दवत् तत्सदृशरूपार्थे गौण इति दोषः। लोके प्रसिद्धेन अप्रसिद्धमुपमीयते। प्रसिद्धश्च पुण्डरीकम्। तस्योपमान्तरान्वेषणं च व्यर्थमिति दोषः। ननु पुण्डरीकपदं सिताम्भोजे प्रसिद्धं कोशात्, तत्सादृश्यं कथमक्ष्ण इति शंकानुदयाय रक्ताम्भोजग्रहणाय कप्यासपदेन विशेष्यते। साक्षादेवास्योपमानत्वं तु अश्लीलत्वादेव श्रुतिस्त्यजतीति चेत्—पुण्डरीकपदस्य सिताम्भोजमात्रवाचित्वे विशेषणानन्वय एव स्यात्। लक्षणा वा। एवं तर्हि कमलपत्राक्षः, राजीवलोचनः, पुण्डरीकाक्षः इत्यादौ विशेषग्रहणाय कप्यासपदमवश्यं प्रयोक्तव्यं स्यात्। योग्यताबलात् रक्तपद्मग्रहणसंभवस्तत्रेति चेत्—अत्रापि तत् तुल्यम्। तथा चेत्, लघुतया रक्तपदमेव प्रयुञ्जीत। अतो न तदर्थं कप्यासपदं प्रयुंक्ते। श्रुतिः पुण्डरीकपदेन रक्ताम्भोजमेवाभिप्रैतीति च व्यक्तमन्यत्र। अत एव पूर्वमीमांसायां नवमाध्याये(....), "मौद्गं चरुं निर्वपेत् श्रियै श्रीकामः" इति श्रीरूपफलकामेन श्रीदेव्युद्देशेन यागानुष्ठाने, "पौण्डरीकाणि बर्हीषि भवन्ति" इति बर्हिस्स्थाने पौण्डरीकस्तरणे कार्ये, तदर्थे, 'दर्भैः स्तृणीत हरितैः' इति मन्त्रे दर्भपदस्थाने पौण्डरीकपदोहे स्थिते, हरितपदस्थाने किं पदमूहनीयमिति विचारे रक्तैरित्यूहितव्यमिति भाषितं **शाबरे**। अतः श्रुतिप्रसिद्ध्या पुण्डरीकं रक्तपद्ममेवेति तदर्थं व्यर्थं कप्यासपदम्। आराध्यश्रीदेवतासंबन्धित्वं रक्ताम्भोजस्यैवेत्यौचित्यात् तत्र पुण्डरीकपदेन रक्तपदग्रहणमिति चेत्—अत्राप्यक्षिदृष्टान्तत्वौचित्यादेव तद्ग्रहणमिति तुल्यम्। औचित्यात् ग्रहणमपि अवाच्यस्य न भवितुमर्हति। न चात्यन्तरक्तमम्भोजमक्ष्ण उपमा। रक्तान्तलोचन इति प्रान्त एव रक्तत्वोक्तेः, विशालमध्यप्रदेशस्य सितत्वात् पुण्डरीकविशालाक्ष इत्युच्यत इति स्वीकारात् कपिपृष्ठसाम्यस्य नैव प्रसक्तिरिति च ध्येयम्। कपिशब्दश्च श्रुतेः कोशाच्च सूर्ये प्रसिद्ध इत्यलम् ॥ २४ ॥

25 अन्तिममर्थं तत्रानुपपत्तिश्चाह **दरे**ति। **कश्चि**दित्येव पाठः ; न **पद्म**मिति। कश्चित् **दरम्** ईषत् **विकसितं** प्राप्तविकासमितीदं कप्यासशब्दार्थत्वेनाह। पूर्वं **जल्पती**तिवत् अत्रापि वर्तमाननिर्देशः। अद्यापि केनचित् तदादरणसंभवात्। पूर्वोक्तार्थद्वयापेक्षयाऽस्यादरणीयत्वमाह **गतिरि**ति। **गतिः** प्रवृत्तिः बोधनव्यापारः। तुशब्देन पूर्वोक्तानुपपत्तीनामभावरूपं वैलक्षण्यं ज्ञाप्यते। अन्वययोग्यताऽप्यस्तीत्याह **भगव**दिति। भगवच्चक्षुषो दृष्टान्तभूतं यत् पंकजम् तत्रेषद्विकसितत्वस्य दृष्टान्ततापोषकत्वात् गतेः संगतत्वम्। एतदुपेक्षाकारणमाह **तदपी**ति। **तदपि** तथापि। प्रमेयस्याबाधितत्वेऽपि दोषानाहत्वेऽपि। **तदि**ति पदमावर्त्य चकारेण योजनीयम्। तच्च, तथार्थवचनञ्च न सत्। **अपि**शब्दमात्रेण

*25. ஒருவர் கப்யாஸ பதத்திற்கு 'சிறிது மலர்ந்த' என்றது பொருள். இது தாமரைப் பூவுக்கு அடைமொழியே யென்பர். இது சேரும் ஆனாலும் அச் சொல்லுக்கு அப் பொருளில் ப்ரயோகம் எப்படி. கப்யாஸ என்றத*

**तदपि च न सत्; तस्मिन्नर्थे यतो न तु कुत्रचित्**
**तत् अवयवशः संहत्या वा पदं व्युदपद्यत ॥ २५ ॥**
**षट्स्वर्थेषु समीरितेषु चतुराः कप्यासवाचस्त्रयो**
**गम्भीराम्भ इति प्रकृत्य भगवद्रामानुजांगीकृताः ।**
**तत्स्वीकारबहिष्कृतास्तदितरे हेयास्त्रयः; तद्विदा**
**श्लोकैः षड्भिरमीभिरित्थमुदिताः सोऽयं विभागो मया ॥ २६ ॥**

---

वा अबाधितत्वादिज्ञापनम्। तदा **तदिति** चकारमात्रान्वयि। **यतः** यस्मात् कारणात् **अस्मिन् अर्थे** दरविकसितमित्यर्थे **तत्** कप्यासमिति पदं **कुत्रचित्** निरुक्ते व्याकरणे कोशे वा। **अवयवशः** ऐकैकावयवतः=केति प्यासेति, कपीति आसेति वा दररूपार्थ.विकसितरूपार्थवाचकानेकांशरूपेण **संहत्या** वा विशिष्टवाचिवर्णसंघातरूपेण वा, न **व्युदपद्यत** व्युत्पत्तिं नालभत। पदनिष्ठा व्युत्पत्तिर्नाम शक्तिमत्ताग्रहविषयत्वम्। अवयवप्रयुक्तशक्तिः योगशक्तिः। अक्षरसमुदायप्रयुक्तशक्तिः रूढिः। यस्मात् शब्दोऽयमस्मिन्नर्थे व्युत्पत्तिमत्तया केनापि प्रमाणेन न बोधितः, तस्मात् तन्न सदिति। असु क्षेपे इति धातोः अप्यास एव **प्यासः** विकास इति युक्तम्। प्रथमाक्षरस्य ककारस्य **ई**षदित्यर्थः कथम्। कोष्णमित्यत्रेवात्र ककारप्रयोगे प्रमाणं न लक्ष्यते। प्रयासेन तथार्थकल्पनं तथाप्रयोगप्रसिद्धावेवोचितम्। अतो विवक्षितार्थावाचकत्वादेवैतदुपेक्ष्यमिति ॥ २५ ॥

26 षट्स्वर्थेषु ग्राह्याग्राह्यविभागः यतिशेखरभारतीभावपरिचिन्तनफलमिति दर्शयन् निगमयति षट्स्विति। **कप्यासवाचः** कप्यासमिति पदस्य **समीरितेषु** वाक्यकारादिकथितेषु षट्सु अर्थेष्वेतेषु त्रयोऽर्थाः **चतुराः** चतुरत्वात् दृष्टान्तपुष्टिप्रदानसमर्थत्वात् यथावत् योगव्युत्पत्तिसंपादनसमर्थत्वाच्चेति हेतुगर्भविशेषणम्। यद्वा चतुरा इति हे सदसद्विवेचनचतुरा इति स्वसूक्तिश्रोतृसहृदयविवेकिसंबोधनम्। वेदार्थसंग्रहे **गम्भीराम्भस्संभूत इति प्रकृत्य** आरभ्य, "गम्भीराम्भस्संभूतसुमृष्टनालरविकरविकसितपुण्डरीकदलामलायतेक्षण" इत्येकेन पदेन भगवद्रामानुजांगीकृताः। तत्र कप्यासशब्दार्थत्वोक्त्यभावेऽपि शब्दस्वारस्यात् संप्रदायाच्च तदवगमः। **तदितरे** ग्राह्यत्रयातिरिक्तास्तु त्रयः **तत्स्वीकारबहिष्कृताः** तन्मात्रस्वीकारबलेन त्याज्यत्वेन सूचिताः। यद्वा तत्स्वीकारात् भगवद्रामानुजकर्तृकस्वीकारात् भ्रंशिताः; स्वीकाररहिता इति यावत्। हेया भवन्ति। **तद्विदा** भाष्यकाराभिमतानभिमतिज्ञानवता **मया** प्राक्तनैरकृतत्वेऽपि

---

முழுச்சொல்லா. க-ப்யாஸ—கபி-ஆஸ-என்றாற்போலே பிரிவு உண்டா. எவ் விதத்திலும் 'சிறிது மலர்ந்த' என்ற பொருள் கிடைக்காது. ப்ரயோக மில்லை. (25)

26. முன்னோர்கள் சொன்ன பொருள்கள் ஆறு. அவற்றில் மூன்று பொருள்களைத் தாம் இசைந்திருப்பதை எம்பெருமானார் தமது வேதார்த்த ஸங்க்ரஹத்திலே **गम्भीराम्भस्संभूत सुमृष्टनाल रविकरविकसित पुण्डरीकदलामलायतेक्षण**

**(1-1-10) गायत्रीनाम सामश्रुतिशिरसि परं ज्योतिरध्यायि सिध्य–**
**चातुष्पद्यं तु भूतक्षितितनुहृदयैः, षड्विधं तत् विधाभिः ।**

भाष्यकारहृद्गतं विभावयता **सोऽयं** ग्राह्य.त्र्याज्यविषयको विभागः इत्थं षड्भिः श्लोकैः कथितः। भाष्यकारास्तु गभीरहृदयत्वात् मर्कटपृष्ठाद्यर्थस्मारणमप्यस्मिन् अवसरे न युक्तमिति विभाव्य च निषेधकण्ठोक्तिं नादद्रिरे। ग्राह्येष्वपि त्रिष्वर्थेषु अन्तरङ्गबहिरङ्गविवेकोऽपि मया तत्रतत्र सूचित एव। अत. 'सकृत्प्रयुक्तस्य शब्दस्यैकार्थपरत्वमेव साम्प्रतम्, न नानार्थत्वम्' इति न चिन्तनीयम्। अस्मदुक्तिक्रमो ग्राह्यतमग्राह्यतरग्राह्यक्रमात्। भाष्यकारसूक्तौ क्रमान्तरग्रहणं कथमिति चेत्—उत्पत्तिक्रमात्। अम्भस्संभूत्यनन्तरमादितोऽग्रपर्यन्तं सुपुष्टे नाळे स्थितिः, ततो रविकृतो विकास इति। विशेष्यात्यन्तसंनिकृष्टतया निर्दिष्टं विशेषणं तदन्तरंगम्, तदनन्तरं किञ्चिदन्तरंगम्, प्रथमं तु बहिरंगम्, राजसमीपे अमात्यादिवदिति **रत्नसारिण्युक्तमपि** ग्राह्यम्। अन्यश्च व्याख्ययोरर्थत्रयतारतम्यविवेकस्तत्रैव द्रष्टव्यः ॥ २६ ॥

27. अथ ज्योतिरधिकरणविषयवाक्यान्तर्गतस्य, 'सैषा चतुष्पदा षड्विधा गायत्री' इति वाक्यस्यास्मदभिमतमर्थं दर्शयन् परोक्तषाड्विध्यं पराकरोति **गायत्रीनामे**ति । **सामश्रुतिः** सामवेदः ताण्डिशाखारूपः। **तच्छिरसि** छान्दोग्योपनिषदि गायत्रीविद्यायाम्, 'यदतः परो दिवो ज्योतिर्दीप्यते' इति वाक्ये, 'पादोऽस्य सर्वा भूतानि त्रिपादस्यामृतं दिवि' इति पूर्वोक्ता या द्यौः परमपदरूपा, **अतो** दिवः परतो दीप्यमानत्वेनोक्तं परं ज्योतिः ब्रह्मैव, "गायत्री वा इदं सर्वं भूतम्" इत्युपक्रमे **गायत्रीनाम**=गायत्रीनामकतया **अध्यायि**=अधीतम् । अयमर्थः—दिवो ज्योतिरित्यत्रोक्तं ज्योतिः न अन्तःपुरे स्थिततया वक्ष्यमाणवैश्वानरजातीयाग्निरूपम् ; **अत** इति पूर्वोक्तद्युसंबन्धितया श्रवणात् 'परंज्योतिरुपसंपद्य' इति प्रसिद्धपरज्योतिर्ग्रहणस्यैव युक्तत्वात् । न हि 'त्रिपादस्यामृतं दिवि' इति पूर्ववाक्ये परमात्मातिरिक्तग्रहणम्, 'पादोऽस्य सर्वा भूतानि' इति सर्वभूतात्मकपादवत्त्वाभिधानादिति ज्योतिरधिकरणप्रथमसूत्रोक्ते,

---

என்றசொல்லால் கம்பீரமாகத் தெரிவித்தருளினர் 'ஆழமான நீரில் உண்டாகி பருத்த தண்டுடன் கூடி சூரியனின் ஒளியினால் மலர்ச்சியுறும் செந்தாமரையிதழ் போல் நிர்மலமாய் நீண்டகன்ற திருக்கண்கள் உடையவன் என்று அதன் பொருளாம் இப்படி அவர் மூன்றை இசைந்து மூன்றை விட்டதால் அவை முன்னோர்களுக்கே ஸம்மதமல்ல என்று ஆறு பொருள்கள் விஷயமான ஆறு பத்யங்களால் நான் இங்கே விரித்துரைத்தேனென்றபடி (26)

27. ஸாமவேதத்தின் முனையிற் சாந்தோக்யத்தில் பரஞ்சோதியானது காயத்ரீ என்ற பெயரால் பணிக்கப் பெற்றது நாலு கால்களும் ஆறுவகைகளுமுளதென்றது, காயத்ரீ என்ற சந்தஸ்ஸுக்குச் சிலவிடத்தில் நாலு பாதங்கள் உண்டு ஒவ்வொரு பாதமும் ஆறு அக்ஷரங்கள் கொண்டிருப்ப

गानत्राणादिकाभिः ; श्रुतिगतवचनव्यक्तिभेदात्तु सिद्धा
वाक्प्राणोक्तिः परार्था स्वरसनिगमनश्रुत्यधीनं तदेतत् ॥ २७ ॥

पूर्वपक्षिणा शंकितम्—तत्र पूर्ववाक्ये द्युसंबन्धितयोक्ता गायत्र्येव, 'सैषा चतुष्पदा षड्विधा गायत्री' इति तस्या एव ततः प्राक् प्रस्तुतत्वादिति । तत्रोक्तमनन्तरसूत्रे, नात्र गायत्रीछन्द उच्यते ; किंतु गायत्रीसदृशत्वेन ब्रह्म ; न केवलं पुरुषसूक्तमन्त्रप्रत्यभिज्ञाबलादेवम् ; 'गायत्री वा इदं सर्वं भूतम्' इति सर्वभूतादिपादवत्त्वोक्तेश्छन्दस्यघटमानतयाऽपि ब्रह्मैव ग्राह्यमिति । छन्दोन्तरं विहाय गायत्रीसादृश्यं कुत उच्यते इति चेत्—अन्योक्तावपीदृक् प्रश्नो भवत्येव । श्रूयमाणवाक्यस्यार्थं विचारयामः, न तु श्रुतिमनुयोक्तुं पारयामः । अस्तु वा 'गायत्र्या सोममाभरत्' इति सोमाहरणस्यान्यच्छन्दोनधीनत्व--गायत्री-साधितत्वादेरैतरेयब्राह्मणे श्रवणात्, ब्राह्मण्यस्य च गायत्रीमात्रसारत्वात्, 'गायत्री छन्दसां माता' इति मातृत्व-प्रसिद्धेः, गायत्रीशब्दावयवार्थस्य ब्रह्मणि स्पष्टं समन्वयाच्च गायत्रीछन्दसः श्रैष्ठ्यमित्यन्यदेतत् । नात्र गायत्रीशब्दस्तदन्तर्यामिपरः गानकर्तृत्वाद्यर्थकथनात् । नापि केवलयौगिकः ; स्त्रीलिंगनिर्देशात् ; चातुष्पद्यादिना सादृश्यकथनाच्च । अतो गौणः । तत्र, 'गायत्री वा इदं सर्वं भूतम्' इति प्रथमवाक्ये सर्वभूतस्य गायत्रीत्वमुक्तम् । सर्वभूतैक्यं ब्रह्मणि, सर्वं खल्विदं ब्रह्मेत्येवं प्रसिद्धम् । 'पादोऽस्य सर्वा भूतानि' इत्येतत्स्मारणाच्च सर्वभूतात्मकतया यत् पुरुषसूक्तोक्तम्, तदेव गायत्रीशब्दनिर्दिष्टमिति प्रतीयते । ब्रह्मणि विद्यमानयोः सर्वभूतगानकर्तृत्वत्राणकर्तृत्वयोर्गायत्र्यां प्रदर्शनाच्च । कथं गायत्र्याः तद्गानादिकर्तृतेत्यत्र गायत्र्याः वाग्विशेषत्वात् वाचश्च सर्वभूतवाचकत्वात् वाग्व्यवहारेणैव सर्वभूतानां रक्ष्यमाणत्वदर्शनात् शेषवाग्रूपगायत्र्यां तदुक्तिरित्युपपादनञ्च तत्र कृतमस्ति, वाग्वै गायत्रीत्यादिना । अथ 'या वै सा गायत्री ; इयं वाव सा येयं पृथिवी' इति पृथिव्यभेद उक्तः, तेन भूताभेदवत् एवदभेदस्योक्ततया पृथिवी द्वितीयः पादः प्रतीयते । ततः, 'या वै सा पृथिवी इयं वाव सा यदिदमस्मिन् पुरुषे शरीरम्' इति पृथिवीपादकगायत्रीब्रह्मणः शरीराख्यः पाद उक्तः । अन्ते, 'यद्वै तत् पुरुषे शरीरम् इदं वाव तत् यदिदमस्मिन्नन्तःपुरुषे हृदयम्" इति हृदयात्मकः पादः । पूर्वपूर्वपादात्मके उत्तरोत्तरपादात्मकत्वस्य तृतीयचतुर्थवाक्ययोर्यथोक्तिः, तथा द्वितीयवाक्येऽपि, 'यदिदं सर्वं भूतम् इदं वाव तत् येयं पृथिवी' इति वाक्यप्रयोगो युक्तः । अथापि तथाऽनुक्तिः 'अस्यां हीदं सर्वं भूतं प्रतिष्ठितम्' इति सर्वभूतप्रतिष्ठात्वस्य पृथिव्यां वक्ष्यमाणस्य सर्व-

---

*தால் ஆறுவிதமெனப்படும் அது. அதுபோல் பரஞ்சோதியும் நான்கு பாதம் உடையது அவையாவன-ப்ராணிகள், பூமி, உடல், ஹ்ருதயமென்பவை. ஆறு வகைகளாவன-காயத்ரீ யென்பது வாக்கானபடியாலே எல்லாவற்றையும் சொல்லும், எல்லா ப்ராணிகளையும் காக்குமென்று இரு வகைகளாம். பூமி யென்றபாதம், ஸர்வபூதங்களுக்கும் = ஆதாரமாயும் அவற்றால் கடக்கப் படாமலுமிருப்பதால் இருவகைகள். சரீரமும் ஹ்ருதயமும் ஸர்வ ப்ராணன் களுக்கும் ஆதாரமாயும் ப்ராணன்கள் கடக்கவாகாதபடியுமிருப்பதால் மேலும்*

भूते दुर्वचतया, 'या वै सा गायत्री' इत्येवोक्तमिति चिन्तनीयम्। किञ्चिदुक्तिवैषम्येऽपि यावै इत्यादिरेक[रूपा]
वाक्यशैली एवं चतुष्पात्त्वं ब्रह्मणोऽवगमयति। षड्विधत्वं कथमित्यत्र तु भूतपृथिवीशरीरहृदयवाक्प्राणैरिति
**शांकरोपनिषद्भाष्ये** उक्तम्। अन्यादर्शनात्; वाग् वै गायत्रीति, प्राणाः प्रतिष्ठिताः इति चोभयो
प्रस्तावात्। तन्न; **वाक्प्राणोक्तिर्हि परार्था,** गायत्र्याः गानत्राणकर्तृत्वोपपादनार्था वागुक्तिः। प्राणोक्तिः
प्राणप्रतिष्ठात्वादिधर्मकथनार्था। किञ्च पादतयोक्तानां चतुर्णामेव पुनः षाड्विध्ये ग्रहणमपि न युक्तम्। अतो
भूतगानकर्तृत्व.त्राणकर्तृत्व. भूतप्रतिष्ठात्व.तदनतिवर्त्यत्व. प्राणप्रतिष्ठात्व.तदनतिवर्त्यत्वरूप.धर्मषट्कस्यात्रा-
गम्यमानतया तैरेव षाड्विध्यम्। तथाच श्लोके **सिध्यच्चातुष्पद्य**मित्येकं पदं बहुव्रीहिवृत्तम्। **तद्विधाभि**-
रित्यत्र **तदि**ति पृथक्पदम्। **तत्** ज्योतिः भूतपृथिवीशरीरहृदयैश्चतुर्भिः सिध्यच्चतुष्पात्त्वकं गानत्राणकर्तृत्व.भूत-
प्रतिष्ठात्व.तदनतिवर्तन. प्राणप्रतिष्ठात्व.तदनतिवर्तनरूपाभिर्विधाभिश्च षड्विधं भवति, न तु वाक्प्राणयोर्मेलनेन
षड्विधम्। वाक्प्राणोक्तिस्तु परार्था—भूतादिपादचतुष्टयवचनभंग्याः एतद्वचनभंग्याश्चैकरूपत्वाभावात्
तद्भेदेनयोः पादत्वायोगात्। या च निगमनश्रुतिः, "सैषा चतुष्पदा षड्विधा गायत्री" इति, तत्रापि
स्वारस्यात् पादचतुष्टयं तद्भिन्नं विधाषट्कञ्चावगम्यते। **सैषे**त्यारम्भात् विधानां पादानाञ्च पूर्वोक्तत्वम-
वगम्यते। अतः पादानामेव विधास्वप्यन्तर्भावः शांकरोक्तः, गायत्री वा इत्यादीनां सर्वभूतपृथिवीशरीरहृदय-
वाक्प्राणरूपविधाषट्कमात्रपरतया चातुष्पद्यं पादोऽस्येति वक्ष्यमाणमेव ग्राह्यमिति **यादवप्रकाशो**क्तञ्च
न सम्यक्। **सैषे**त्येतदर्थस्तु—**चतुष्पदे**ति गायत्रीविशेषणम्। 'टाबृचि' इति सूत्रेण ऋक्परत्व एव
पदशब्दोपरि टाब्विधानात् गायत्रीशब्दः ऋक्परः। तथाच **एषा** प्रागुक्तचातुष्पद्यषाड्विध्यविशिष्टब्रह्मव्यक्तिः
पादचतुष्टयवती विधाषट्कवती च **सा** प्रसिद्धा गायत्रीति। एवं गायत्रीचातुष्पद्यादिकीर्तनात् तदभेदस्त-
त्सादृश्यात्। ऋचः पादचतुष्टयवत्त्वस्य चतुष्पदेति ज्ञापितत्वात् तदुपपादनं भाष्ये, 'इन्द्रः शचीपतिः
बलेन पीडितः, दुश्च्यवनो वृषा, समित्सु सासहिः' इति ऋग्विशेषमादाय कृतम्। तत्र प्रतिपदं
षडक्षरत्वादेव षड्विधत्वमपि। अतः चतुष्पदेति पदेन ऋग्विशेषणेन ब्रह्मणश्चातुष्पद्यं वक्ष्यमाणं
विधातुं न शक्यत इति अस्मदुक्तमेव तच्छ्रुत्यधीनम्। ननु देहविशिष्टात्मवाचिभूतपदार्थान्तर्गतस्य
शरीरस्य, तदन्तर्गतस्य हृदयस्य च कथं पृथक्पादत्वमिति चेत्—पूर्वपूर्वपदेन गोबलीवर्दन्यायेन तत्तद-
शव्यतिरिक्तग्रहणात् भेदसंभव इति। उत्तरोत्तरस्य पूर्वपूर्वापेक्षया मितत्वेपि प्राधान्यात् तुल्यपादता॥२७॥

---

இருவகைகள் கொண்டதாகும். ஆக மொத்தம் ஆறுவகைகள் ப்ரஹ்மத்திற்கும்
உள்ளவை, சிலர் ஆறு வகைகளாவன பூதம், பூமி, சரீரம், ஹ்ருதயம், வாக்கு
ப்ராணன் என்றவை என்பர். வாக்கையும் ப்ராணனையும் சொல்லியிருப்பது
வேறு நோக்கிலென்று படிக்கும்போதே தெரிவதால் அவ்வாறு இசைவத
தகாது—ஆக இப்படி காயத்ரீயென்ற சந்தஸ்ஸுக்கு ஸமமாக பரஞ்சோதி
யை யுபாஸிப்பது இந்த ச்ருதியின் பொருளாம். (27)

(I. 8. 4) **तमोनाम द्रव्यं बहल(बहुल)विरलं मेचकचलं**
**प्रतीमः ; केनापि क्वचिदपि न बाधश्च ददृशे ।**

28 अन्तर्याम्यधिकरणविषयवाक्ये पृथिव्याद्यविशेषेण, "यस्तमसि तिष्ठन् तमसोऽन्तरः" इत्येवं तमश्शरीरकत्वं श्रूयते । द्रव्यमेव शरीरमित्यन्यत्र निर्धारितम् । तमसो द्रव्यत्वमद्वैतिभिर्मीमांसकैश्च स्वीकृतमेव । तार्किकास्तु, "द्रव्यगुणकर्मनिष्पत्तिवैधर्म्यात् भाभावस्तमः" इति आलोकाभावस्तम इति वदन्ति । अन्धकारेऽपि मण्याद्यालोकसत्त्वात् खद्योतादिसत्त्वाच्च तमःप्रतीतिर्न स्यादिति चेत्— प्रौढप्रकाशकतेजोभावस्तम इति परिष्कुर्वन्ति । क्लृप्तेन तेजोभावेनैव निर्वाहे द्रव्यतत्कारणादिकल्पने गौरवमिति तदाशयः। एतद्विस्तरो वैशेषिकदर्शने(५-२-20) अस्मदीये **रसायने** द्रष्टव्यः। तदिदं प्रत्यक्षादिविरुद्धं न तर्कसाध्यमित्याशयेनाह **तम** इति । **नामे**ति प्रसिद्धौ । नाम्नि वा । न भावस्तम इति पक्षे तमश्शब्दो निरर्थकस्स्यात् । अस्मन्मते भावातिरिक्ताभावानंगीकारात् । भावत्वे च द्रव्यत्वमेव युक्तम् । घटादावपि द्रव्यत्वप्रत्यक्षसद्भावात् । अत्र तदसंभवे तत्रापि तस्याऽऽक्षेप्यत्वात् । अस्तु तर्हि आलोकरहितस्थले यावत् द्रव्यमस्ति, तत्तदेव तम इतीति चेत्—आलोककालेऽपि तत्सत्त्वात् कथं तस्य तदभावरूपता। किञ्च **बहलं** निबिडं तमः, **विरलं** तदन्यरूपं तम इत्यनुभवोऽस्ति। दिवा दोषा च विद्यमानेषु पृथिव्यादिषु तेष्वेव बहलत्वविरलत्वे कथमुपपाद्ये, एवं **मेचकत्वं** नीलत्वं **चलत्वं** चलनक्रियावत्त्वं तमसि प्रतीयमानं तत्र नोपपन्नम् । बहुलमिति पाठेऽपि स एवार्थः । बहलं वा विरलं वेति विग्रहः । मेचकं च चलञ्चेति च। अनेन द्रव्यत्वसाधकहेतूपन्यासोऽपि। तार्किकैः सावयवत्वात् संयोगवत्वात् रूपवत्त्वात् क्रियावत्वात् गुणवत्त्वादिति द्रव्यत्वे हेतव उपन्यस्यन्ते। तेऽत्राप्यविशिष्टाः। **तम** इति कर्मकारकम्। तत् द्रव्य त्वादिरूपेण **प्रतीमः** प्रत्यक्षयाम इत्यर्थः । नन्विदं सर्वं प्रत्यक्षं भ्रम इत्यत्राह **केनापी**ति। भ्रमत्वनिश्चयस्तावत् बाधज्ञानेन वा कारणदोषनिश्चयेन वा भवति। नात्र तदुभयमपि **क्वचिदपि** स्थले। **केनापी**त्यनेन त्वयापि अबहलमिदमनवयवमिदमनीलमचलमद्रव्यमिति बाधदर्शनं **न** कृतमित्युच्यते । **न ददृशे** । एतावत् न; इतः परमपि न द्रक्ष्यत एव। सर्वथा बाधाभावे कारणदोषकल्पनाया अपि नावकाशः। चकारेण तत्समुच्चयः। दर्शनाभावेऽप्यनुमानेन साध्यत इति चेत् , अग्नेरनुष्णत्वानुमानवत् कालात्ययापदिष्टो हेतुः। ननु तमो निरवयवं तदुत्पादकाभावात् । तथा हि प्रदीपेऽन्यत्र नीयमाने, प्रभाकरे वाऽस्तं याति समनन्तरक्षण एव सर्वदेशव्यापि महत्तमं तमो दृश्यते। न ह्येतावत उत्पादकास्तदवयवास्तत्र स्थिताः। न चान्यत आयान्त आलोक्यन्ते । अतः कारणाभावात् तदुदयायोगात् भ्रान्तिरेव । **मेचक**मिति प्रतीतिश्च नीलं नभ इतिवत् भ्रान्तिरेव। चलत्वं तु नीयमानप्रदीपगतं तच्छायायामिवऽऽरोप्यत इति सूपपादमित्यत्राह

28. இருளென்பதொன்றை த்ரவ்யமாகவும் நெருக்கமாகவும் ஸ்வல்பாவயவங்கள் கொண்டதாகவும் கறுப்பாகவும் ஸஞ்சாரம் செய்வதாகவும் காண்கிறோம். இப்படி காண்கிற அம்சங்களிலே ஒன்றையும் மறுக்க

अतः कल्प्यो हेतुः ; प्रमितिरपि शाब्दी विजयते ;
निरालोकं चक्षुः प्रथयति च तत् दर्शनवशात् ॥ २८ ॥

---

**अत** इति। दोषबाधव्यपेतदर्शनस्वतःप्रामाण्यात् सर्वसिद्धौ कार्यबलात् कारणं कल्प्यम्। न च प्रत्यक्षसिद्धे गौरवदोषादनंगीकारोक्तिर्घटते । अन्यथा प्रकृतिमहदादिकारणानामदर्शनात् क्षित्यादिप्रपञ्चस्यैवापलापः स्यात् । सर्वतः सूर्यातपसंतप्ते निर्मल एव नभसि निमेषमात्रेण निखिलदेशप्लावकनिरन्तरप्रवाहविधायिनं निश्शेषव्याप्तदिगन्तरालधाराधरसंछन्नतां संपश्यामः। किं तत्र कारणसंभरणमस्माभिरालक्ष्यते । किं वा मेघानामेवाभाव इष्यते । तद्वदिहापि कारणं कल्प्यम्। ननु धूमज्योतिस्सलिलमरुतां संनिपातो मेघ इति नः प्रत्यक्षम्। तमः किं तथा पाञ्चभौतिकम्, किं वा किञ्चित् भूतम्, आहो अन्यदेवेति चेत्— चतुर्विंशतौ तत्त्वेषु मूलप्रकृतेः 'तमः परे देव एकीभवति' इति तमश्शब्दवाच्यत्वेऽपि तत्त इदमन्यदेव 'नासीत् तम.' इति तदाऽस्य निषेधात्, 'तमस्ससर्ज' इति अस्य सहेतुकत्वात्, तेजसि तिष्ठन्, तमसि तिष्ठन् इति तेजःप्रत्यनीकवस्तुविशेषत्वात् सरूपत्वात् चलत्वात् बहलविरलभावात् विनाशित्वाच्च। न च तत्कार्यं त्रयोविंशतितत्त्वविलक्षणं किञ्चित्, चतुर्विंशतित्वसंख्यानविरोधात्। सरूपत्वादेव भूतत्रयान्तर्भूतम्। तत्र कृष्णरूपत्वात् पृथिवीति युज्यते । स्पर्शानुपलम्भस्तु प्रभाबाष्पादिषु उष्णशीतभूतान्तर्भूतेष्वपि दृष्टः ; किं पुनरनुष्णाशीते । विस्तरः श्रीदेशिकग्रन्थेषु । **मेघनादारिसूरयश्च नयद्युमणिग्रन्थान्ते,** "तमोऽपि पृथिवीद्रव्यमेव । प्रभाप्रभावद्रूपेण तेजोद्रव्यवत् पृथिव्यपि तमोरूपपृथिवीमती।.........आलोकदेशे तमोनुपलब्धिस्तु तस्याऽऽलोकाभिभवात्।....आलोकनिरपेक्षमेव तत्प्रत्यक्षम्" इति पृथिवीद्रव्यत्वमेवाहुः। आलोकाभिभवादित्युक्त्या तमोरूपपृथिवी सर्वव्यापितयैवाऽऽदौ सृष्टा तथैव सर्वदा सर्वत्र वर्तते । आलोकस्थलेऽनुपलम्भमात्रम्, न तु तदभावः । अतो नानवरततन्नाशतदुत्पादतदर्थद्रव्यादिकल्पनाक्लेश इति तदाशय उन्नीयते । यदि प्रत्यक्षेण तमसो द्रव्यत्वाद्यभावोऽवधारितः स्यात्, तदा वैदिकवाक्यम्, आदित्यो यूपः इत्यादिवत् बाधितार्थकत्वादन्यथा नीयेत। अबाधितार्थकस्थले तु शब्द एवानुमानतः प्रबल इति. 'तमस्ससर्ज,' 'तमसि तिष्ठन्' इत्यादिशब्दजन्याप्रतीतिरूपप्रमितिस्तस्य अभावत्वादिसाधकानुमानं परिभूय प्रत्यक्षवत् विजयते । ननु तमसो द्रव्यत्वे तज्ज्ञानं प्रत्यक्षं न भवितुमर्हति। द्रव्यनिष्ठविषयतासंबन्धेन चाक्षुषं प्रति आलोकसंयोगस्यापि कारणत्वात् तमसि तदभावात्। अतः शुक्तिरजतादिप्रत्यक्षमिव दोषजन्यं भ्रान्तिरूपं तदिति चेत्—तत्राह **निरालोक**मिति। एवं तर्हि आलोकरूपद्रव्यप्रत्यक्षमपि भ्रान्तं स्यात्, आलोके आलोकसंयोगरूपकारणस्यानिष्टेः। द्रव्याश्रितविषयकचाक्षुषं प्रति आलोकसंयुक्ताश्रितत्वस्य कारणत्वात् आलोकाभावे चक्षुषा गृह्यमाणे तस्य दुर्वचतया

---

மாறுன ப்ரத்யக்ஷம் காணப்படவில்லை. காரணத்தில் தோஷமாவதிருந்தால் வந்த ப்ரத்யக்ஷம் தவறுனதென்னலாம் அதுவும் காணபடவில்லை. இப்படி இருளென்ற த்ரவ்யம் ஸித்திப்பதால் அதற்குக் காரணமும் ஊஹிக்க

(1-३-2) भूमाख्यः पुरुषोत्तमो यदधिकं ब्रह्मेह सत्याह्वयं
प्राणाख्यादवरात्मनस्तुबलतस्तज्ज्ञाधिकस्सत्यवित् ।

आलोकाभावचाक्षुषमपि भ्रमः स्यात् ॥ द्रव्यप्रत्यक्षे आलोकस्य संयोगतादात्म्यान्यतरसंबन्धेन कारणत्वस्वीकारान्न दोष इति चेन्न ; तर्हि तत्र प्रतियोगित्वसंयोगतादात्म्यान्यतमसंबन्धेनालोकः कारणमिति कल्पन-संभवात्। वस्तुतस्तु आलोकप्रत्यक्षे आलोकस्य विषयविधया कारणत्वं क्लृप्तम्। विषयतासंबन्धेन प्रत्यक्षं प्रति स विषयः तादात्म्येन कारणमिति। तदतिरेकेण आलोकस्य तत्रान्यादृशकारणत्वं न कल्प्यम्। अन्वय-व्यतिरेकाभ्यामेव कार्यकारणभावावधारणात्। संयोगेनालोकाभावे तदन्यद्रव्यप्रत्यक्षाभाव इति नियमात् आलोकभिन्नद्रव्यनिष्ठविषयतासंबन्धेन प्रत्यक्षं प्रति संयोगेनालोकः कारणमित्येव वक्तुमुचितत्वात्। तद्वत् तमोभिन्नत्वमपि द्रव्ये निवेशनीयम्। एवमत्र तमोऽस्तीति प्रत्यक्षे कालस्यापि विषयत्वात् कालस्य च सर्वेन्द्रियग्राह्यत्वात् तत्प्रदेशावच्छेदेन काले आलोकसंयोगाभावात् कालभिन्नत्वमपि निवेश्यम्। आलो-काभावप्रत्यक्षेऽप्यालोको न कारणम्; प्रतियोग्यतिरिक्तायाः प्रतियोगिग्राहकसामग्र्या एवाभावग्रहे कारणत्वात्। अतो दर्शनानुसारेण तत् तमः नः आलोकासहकृतमेव चक्षुर्दर्शयति। तमश्चाक्षुषे आलोकस्य कारणत्वमेव नेष्यत इति। हीति हेतौ। यत आलोकस्य तमःप्रत्यक्षे न कारणत्वम्, अतोऽस्य भ्रान्तत्वाभावात् आक्षशाब्दयोर्विजयित्वं तदद्रव्यत्वयुक्तेः परास्तता चेत्युक्तं भवति। आरोपितं नीलरूपमेव तम इति वैशेषिकप्रशस्तपादभाष्यव्याख्याता **कन्दलीकारः**। आरोपस्य नीलरूपस्मृत्यधीनत्वात् आरोपं विना नीलरूपविशिष्टद्रव्यानुभवजन्यः नीलरूपमात्रविषयकः स्मृतिप्रमोषस्तम इति **प्राभाकरः**। आलोकाभावस्तम इति तार्किकपक्षे न्यूनालोकवत्तया विरलत्वोपपादनेऽपि नीलरूपप्रतीतिनिर्वाहस्य दुष्करत्वमालोच्यैवमुच्यते। वस्तुसदेव नीलरूपादीति सिद्धान्ते तु न कश्चित् क्लेशः ॥ २८ ॥

29 भूमाधिकरणार्थं संगृह्णाति **भूमाख्य** इति। ननु किमर्थोऽयं संग्रहः। न तावत् अद्वैति-निरासार्थः ; प्राणशब्दार्थः क इत्यत्र विवादेऽपि, 'प्राण एव भूमेति पूर्वपक्षः, प्राणातिरिक्तं सत्यं

---

வேண்டும். வேதத்திலும் இருள், தேசு போல் படைக்கப்படுகிறது. அதனுள் பரமாத்மாவிருக்கிருனென்று ஸ்பஷ்டமாக ஓதப்படுகிறது. இனி இருளுக்குக் கண்ணுல் ப்ரத்யக்ஷம் எப்படியுண்டாகும், காண்கைக்கு வெளிச்சமும் காரணமாயிற்றே. வெளிச்சமிருப்பின் இருள் தெரியாதே யென்னில், தார்க்கிகமதத்தில் **आलोकाभाव**த்திற்குக் கண்ணுல் ப்ரத்யக்ஷமுண்டு. அதற்கு வெளிச்சம் காரணமென்றிசைய வில்லையே. வெளிச்சத்தைக் காண்பதற்கும் வேறு வெளிச்சம் வேண்டாவே. அதுபோல் இதற்குமாகும். (கோட்டான் வெளிச்சமிராமலே எல்லாம் காண்கிறது) (28)

29. **பூமாதிகரணம்**—சாந்தோக்யத்தில் பூமவித்யையில் **பூமா** என்ற சொல்லின் பொருள் புருஷோத்தமனே, ஏனெனில், இங்குக் கீழே ப்ராண

भूमेति सिद्धान्तः । तुशब्दबलात् । अग्निहोत्रिवाक्यगततुशब्दगतिरत्र न युक्ता' इत्यस्योभयसंमतत्वात् इति चेत्–तन्निरासार्थत्वाभावेऽपि सुखग्रहणाय संग्रहो युज्यते । प्राणशब्देन प्राणवायूक्तिरद्वैतिपक्षे, जीवात्मग्रहणमस्मत्पक्ष इति भेदज्ञापनार्थमपि भवतु संग्रहः । अस्तु वा किञ्चिदधिकांशव्युत्पादनार्थमिति । तथा हि आत्मजिज्ञासयोपसन्नं नारदं प्रति, 'नाम ब्रह्मेत्युपास्ते' इति नाम्नि ब्रह्मदृष्टिर्विहिता । फलञ्चोक्तम् । अस्ति भगवो नाम्नो भूय इति नारदेन पृष्टम् । 'वाग्वाव नाम्नो भूयसी' इत्युक्त्वा वाग्ब्रह्मोपासनमुपदिष्टम् ; अथोपर्युपरि भूयोवस्तुप्रश्ने, 'प्राणो वाव आशाया भूयान्' इति प्राणपर्यन्तेषूपदिष्टेषु 'यः प्राणं ब्रह्मेत्युपास्ते' इत्युपदेशं तत्फलकीर्तनञ्चाकृत्वा प्राणोपासकस्यातिवादित्वमुक्तम् । अतः प्राणब्रह्मदृष्टेरविधानात् अतिवादित्वोक्तेश्च प्राणो ब्रह्मैवेति ज्ञायते, 'अत एव प्राणशब्दस्य प्राणवायुपरत्वमद्वैतीष्टमयुक्तम् । 'तरति शोकमात्मवित्' इत्युपक्रमात् अनात्मनः प्राणस्यैतद्विद्याप्रधानार्थत्वायोगात् । ननु 'प्राणो ह पिता, प्राणो माता, प्राणः स्वसा' इति जीवात्मनामेव प्राणशब्देन निर्देशात् कथं तस्य ब्रह्मत्वमिति चेत्—प्राणशब्दो वा शास्त्रदृष्ट्या विशिष्टब्रह्मपरो भवतु । आदितो ब्रह्मपदं वाऽस्यां विद्यायां जीवात्मविषयकमेव भवतु । वस्तुतस्तु, 'तरति शोकमात्मवित्' इत्यात्मज्ञानस्य नारदाभिलषितत्वात् केवलनामाद्युपासने स न तृप्येदिति ब्रह्मरूपात्मदृष्टिरचेतनेषूपदिष्टा । तदापि तस्यातृप्तिं दृष्ट्वा भूयः–प्रश्नानुरोधात् प्राणं प्रोवाच । वस्तुतस्तस्य प्राणस्याप्यात्मत्वादेतज्ज्ञानमात्मज्ञानमेव भविष्यति ; एतावता तत्पृष्टं वस्तु प्रोक्तं भवतीति ब्रह्मदृष्टेरवश्यवक्तव्यत्वाभावं विमृश्य प्राणमात्रं प्रोवाच, प्रशशंस च तम् । नारदश्च नामादिष्विव प्राणे ब्रह्मदृष्टेरनुप्रदेशात् प्राणब्रह्मैक्यं मेने । अत एवं भूयः प्रश्नादुपरराम । गुरुश्च तदुपरि प्रश्नाकरणात् तमेव भूमानमुपन्यस्य तद्विषयमेवाहङ्कारादेशात्मादेशादिकमकरोत् । अधिकं ब्रह्म नोपदिदेशेति । सर्वथा प्राणो भूमा चैक एव । अयमर्थ.—आशाया भूयानिति तदाधारे जीवे सुवचे तदनुक्त्या परमात्मग्रहणस्यायुक्तत्वात् उपास्यतया जीवमात्रे प्रथमोपस्थिते तदनुसारेण भूमादिशब्दनयनमेव युक्तम् ; सत्यशब्दार्थ इह ब्रह्मेति तु सर्वथा न युक्तम् । सुप्रसिद्धसत्यवचनरूपार्थग्रहणस्यैव युक्तत्वादिति मुखान्तरेण शंकाऽप्यत्र श्लोके उद्भाव्य निरस्यते । **यत्** यस्मात् **तुबलतः** तुशब्दबलात् **इह** भूमविद्यायाम्, "एष तु वा अतिवदति, यः सत्येनातिवदति" इति वाक्ये सत्यमिति **आह्वयः** नाम यस्य, तत् सत्यशब्दप्रसिद्धार्थभूतं **प्राणाख्यात्** प्राणशब्दनिर्दिष्टात् **अवरात्मनः** जीवात्

---

சப்தத்தினால் சொல்லப்பட்ட ஜீவாத்மாவைக்காட்டிலும் வேறான ப்ரஹ்மம் ஸத்யசப்தத்தினால் சொல்லப்பெற்றுளதே. ஸத்யசப்தத்திற்கு ப்ரஹ்மமே பொருளென்பது எப்படியெனில், **एष तु वा अतिवदति यः सत्येनातिवदति** என்கிற வாக்யத்திலே **तु** என்ற சொல் உளது. அதனால் கீழ்க்கூறிய ப்ராணஹிவாதியான ப்ராணோபாஸகனைவிட ஸத்யாதிவாதியான ஸத்யோபாஸகன் வேறென்றது தெளிவாம். ப்ராணனென்ற ஜீவனைவிட ஸத்யம் வேறு

अधिकम् अन्यत् ; प्राणोपासकाधिकश्च सत्योपासकः, तस्मात् तादृशसत्याभिन्नः **भूमाख्यः** भूमशब्दवाच्यः पुरुषोत्तम एव । न प्राणः । प्राणशब्दस्य प्राणपरत्वं यथा न युक्तमत्र, तथा तस्यात्र प्रधानार्थत्वमपि न युक्तम्, **तु**शब्देन तद्व्यावर्तनात् । अत एव प्राणशब्दस्य शास्त्रदृष्ट्या विशिष्टपरत्वोत्प्रेक्षाऽपि न युक्ता ।

श्लोके **भूमाख्य** इत्यनेन **अवर**शब्देन च तस्य भूमशब्दवाच्यत्वासंभवो ज्ञाप्यते । 'आरामात्तो ह्यवरोऽपि दृष्टः' इति श्रुतस्य तस्य "यत्र नान्यत् पश्यति नान्यच्छृणोति' इत्युक्तविपुलत्वसर्वव्यापित्वायोगात् । बहुशब्दात् **इमनिच्**प्रत्यये भूमशब्दः । बहुशब्दश्चात्र विपुलवाची, न संख्यावाची ; तदल्पमिति अन्यस्याल्पत्वकथनात् । तत्रैव जीवान्तर्भावात् ; वैपुल्यस्य जीवेऽभावाच्च । धर्मवचनोऽप्ययमत्र अल्पपदप्रतिनिर्देशादेव विपुलरूपधर्मिपरः । तर्हि पूर्वं सुखं त्वेव विजिज्ञासितव्यमिति प्रस्तुतत्वात् सुखपदस्य विशेष्यत्वं भूमपदस्य तद्विशेषणत्वं च युक्तम् । तत् कथं सुखमिति प्रयोक्तव्ये भूमेति सुखे प्रयोग इति चेत्—यो वै भूमा तत् सुखम् इति भूमविशेषणतयैव सुखस्य प्रतीयमानत्वात् । सुखपदस्य विशेष्यत्वे सुखस्यापरिच्छिन्नत्वं भूमपदेनोक्तं स्यात् । भूम्नो विपुलस्य सर्वव्यापिनः सुखत्वोक्तौ अल्पांशतोऽप्यसुखत्वं नेत्युक्तं भवति । यत्र नान्यत् पश्यतीति वाक्येन सर्वस्य प्रपञ्चस्य भूमान्तर्गतत्वोक्तिरिति भाषितत्वात् सर्वविशिष्टतया भूमशब्दोक्ते सुखत्वविधौ विशेषणभूते प्रपञ्चेऽपि सुखत्वमनुकूलत्वं श्रुत्योपदिष्टं

---

உபாஸ்ய வஸ்துவாலுல்தான் இது சேரும். **அதிவாதி** என்ற சொல்லுக்கு தான் உபாஸிக்கும் வஸ்துவைச் சிறந்ததாகச் சொல்லுகிறவன் என்பது பொருள். அசேதனங்களெல்லாவற்றினும் ஜீவாத்மா சிறந்ததாகையால் அதை யுபாஸிப்பவன் அதிவாதியாவானென்ருர் கீழே. அதற்கும் மேலே ஸத்யமென்ற ப்ரஹ்மமிருப்பதால் அதை யுபாஸிப்பவனே சரியான அதிவாதி என்கிருர் இங்கே. இந்த ஸத்ய வஸ்துவை ஸுகமென்றும் பூமா என்றும் மேலே மொழிவதால் ப்ராணன் பூமாவாகமாட்டான்.

கேள்வி:—**एष तु वा अग्निहोत्री यः सत्यं वदति** என்று வேதத்தில் வேறிடத்தில் இருக்கும் வாக்யத்தில் துசப்தமிருந்தும் முன் சொல்லப்பட்ட அக்னிஹோத்ரியையே கொள்கிருேமே முன் சொன்ன அக்னிஹோத்ரி பொய் சொல்லாமல் மெய் சொல்பவனுக வேண்டுமென்று பொருள் கொள்ளுகிருேமே, அவ்வாறு இங்கும் கொண்டாலென்ன என்றவாறு இதற்கு விடை உத்தரார்த்தம் அக்னிஹோத்ரிவாக்யத்தில் 'ஸத்யம் வததி' என்பதற்கு வேறு அர்த்தம் சொல்லவாகாது. உலகில் அக்னிஹோத்ரம் செய்கிறவரெல்லோருமே அக்னி ஹோத்ரிபதத்திற்குப் பொருளாகையால் அவர்களைவிட வேறு அக்னிஹோத்ரி ஒருவரில்லை. அதனுல் துசப்தத்தின் சக்தி குறைந்துவிட்டது. இங்கே

**यः सत्यं वदतीति वाग् गमयितुं न ह्यग्निहोत्र्यन्तरं**
**शक्नोति प्रकृताग्निहोत्र्यवगमात् भङ्गस्तु शब्दश्रियः ॥ २९ ॥**

---

भवति। अतो भूम्न एव विशेष्यतेति सूत्राद्याशयः ॥ नन्वेवं संप्रसादरूपप्राणाधिकृत्वस्य भूम्नि भूमनिर्वचनवाक्यशेषत एव ज्ञायमानतया किमिति 'एष तु वा अतिवदति' इति **तुशब्दोपरि** महान् भारो निक्षिप्यते। सत्येनातिवदतीत्यस्य सत्यभूतमतिवादं करोतीत्यर्थः, ज्योतिष्टोमेन यजेतेत्यस्य ज्योतिष्टोमरूपयागं कुर्यादिति यथा। इदमुक्तं भवति—प्राणं प्रस्तुत्य, 'स वा एष एवं पश्यन् एवं मन्वान एवं विजानन् अतिवादी भवति' इत्युक्त्वा अतिवाद्यसीति अन्येन प्रश्ने कृते अंगीकुर्यात् नापह्नुवीतेत्युक्तम्। अपह्नवे ह्यसत्यमुक्तं स्यात्। तदयुक्तमित्याशयः। एवमसत्यप्रसक्तौ सत्यवदनमावश्यकमिति वदन्, कदाऽतिवादः सत्यवादः स्यादिति च जानीहीति ज्ञापयितुमनाः विज्ञानमननादिकमुपदिशति। **इदं सर्वं एवंपश्यन्** इत्यादिवाक्यविवरणम्। 'तस्मै तमसः पारं दर्शयति भगवान् सनत्कुमारः' इति वाक्य इव पश्यन्निति दृशिधातुः विशदज्ञानात्मकश्रवणपरः; स्थानक्रमाच्चैवम्। इदं सर्वं व्युत्क्रमेणोपपाद्यते। अतः विज्ञानं मननं तत्पूर्वकार्यं सर्वं कीदृशमिति विज्ञाय तस्य सर्वस्य संपत्तिं बुध्वा पश्चादतिवादी भवेत्युपदेशः कृतो भवतु। अतोऽग्निहोत्रिसत्यवादतुल्य एवास्त्वयमपि सत्यवादः। एवं श्रुत्वा निराकांक्षं प्रति तदधिकभूमोपदेश उपरि क्रियत इति काममुच्यतामिति शंकायाम्, तुशब्दबलात् सत्यपदेन ब्रह्मैव विवक्ष्यत इति स्थापयत्युत्तरार्धेन **यःसत्य**मिति। **तुशब्दस्यान्यव्यक्तिगमकत्वं** स्वरससिद्धम्। प्राणोपासकस्यातिवादित्वं प्रागुक्तम्; वागाद्यचेतनरूपोपास्यातिशयित—ऐश्वर्यातिशायिफलहेतुस्वोपासनविषयजीवात्मवादित्वात्। तथैवातिशयितस्वोपास्यवस्त्वन्तरवादिनोऽन्यस्यासंभवे तुशब्दबलभंगः कार्यः। जीवातिरिक्तपरमात्मसद्भावात् तदुपासकरूपातिवादी जीवात्मोपासकातिवाद्यपेक्षयाऽन्योऽतिशयितश्चेति **तुशब्दस्य** तद्ग्राहकत्वमाद्रियते। सत्येनातिवदतीति वाक्ये सत्यशब्देन ब्रह्मरूपार्थे स्पष्टं प्रतीयमाने तदादायातिवादीति तुशब्दबलानुकूलमर्थमुपेक्ष्य सत्यवदनमित्यर्थस्वीकरणमयुक्तम्। अतिवादी भवतीत्युक्तवेव सत्यरूपातिवादवानेवेति स्वत एव सिद्ध्या तद्वचनमनर्थकम्। अन्यथा एकैकवाक्येऽपि सत्यतया भाव्यमिति वक्तव्यं स्यात्। एष तु वाऽग्निहोत्री यः सत्यं वदति इति वाक्यं तु अग्निहोत्र्यन्तरं गमयितुं न शक्नोति। **तुशब्दस्य** प्रकृताग्निहोत्रिभिन्नव्यक्तिगमकत्वे तस्याग्निहोत्रित्वं विधातुं न शक्यते। अग्निहोत्रिसामान्यस्य प्राग् गृहीततया तदन्याग्निहोत्र्यसंभवात्। सत्यवदनस्याग्निहोत्ररूपत्वाभावाच्च। अतः एषोऽग्निहोत्रीति **प्रकृताग्निहोत्रिण एवावगमात्** तुशब्दस्य या श्रीः=अन्यगमकत्वरूपसंपत् तद्भंगोऽगत्या सोढव्य इति। संभवति सत्यपदघटितवाक्यप्रभृति प्रकृतविद्यायाः प्राणातिरिक्तब्रह्मपरत्वे किमिति भूमवाक्यमात्रे तदादरः ॥ सूत्रकारेण संप्रसादादध्युपदेशादिति कुतो न सूत्रितमिति चेत्—संप्रसादादध्युपदेशादित्यस्य तुशब्दबलात् प्राणापेक्षयाऽधिकतया सत्यशब्देनोपदेशादित्येवार्थात् सूत्रे तस्याप्युक्तिसिद्धिः। सत्यपदस्य ब्रह्मपरतायाः सुप्रसिद्ध-

(1. 8. 5.) **अस्वारस्यचतुष्टयं परमते यच्छब्दलिंगव्यथा**
**तस्मिन्नित्यनपेक्षया(ता?)व्यवहिते हृत्पुण्डरीकेऽन्वयः ।**

तथा तत् स्वयमेव ज्ञायेत। भूमपदं तु धर्मवाचित्वात् सुखगतबहुत्ववाचीति मन्येतेति तदुक्त्यावश्यकतेति । अत्र **प्रकृताग्निहोत्र्यवगमा**दित्यस्य स्वस्थानेऽन्वये संभवति तं विहाय **अग्निहोत्र्यन्तर**मित्यत्रान्वय-कल्पनम् अवगम्यमानादग्निहोत्रिण इति व्याख्यानञ्च क्लिष्टम्। तत्सिद्धं प्राण इह जीवः, सत्यं सुखं भूमा च परमात्मेति ॥ २९ ॥

४० अथ दहराधिकरणविषयवाक्येऽर्थवर्णने स्वपरमतयोः स्वमते गुणं दर्शयति **अस्वारस्येति ।** अत्र**छान्दोग्यश्रुतिः**, "अथ यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तराकाशः, तस्मिन् यदन्तस्तदन्वेष्टव्यम्, तद्वाव विजिज्ञासितव्यम्" इति । अत्र शरीरसंबन्धिपुण्डरीकाकारहृदयवर्तिनः परमात्मनस्तद्गुणानामपहतपाप्मत्वादीनाञ्चोपास्यत्वमुभयमतसिद्धम् । ब्रह्मणः पुरं राजधानी शरीरम् । तत्र तस्य **वेश्म** वासगृहं हृदयम्। अस्मिन् वेश्मनि अन्तर्वर्ती **दहरः** अल्पपरिमाणः **आकाशः** परमात्मेत्यर्थ उभयसंमतः। **तस्मि**न्नित्यादेरर्थः शांकरोपनिषद्भाष्यतः, **तस्मिन्** आकाशे परमात्मनि यत् अन्तरस्ति तत् अन्वेष्टव्यमिति यथाश्रुतं प्रतीयते । **सूत्रभाष्यभामत्याम्**, "तस्मिन् यदन्तरित्यत्र तच्छब्दोऽनन्तरमप्याकाशमतिलंध्य हृत्पुण्डरीकं परामृशतीत्युक्तं भवति। तस्मिन् हृत्पुण्डरीके यत् अन्तराकाशं तदन्वेष्टव्यमित्यर्थः" इत्युक्तम्। आकाशस्याप्युपास्यत्वात् अयमेवार्थ इष्टः। अत्र दोषं त्रिभिः पादैराह । **परमते** शांकरदर्शितार्थे अस्वारस्यानि चत्वारि। **यच्छब्दलिंगव्यथा** एकमस्वार-स्यम्। अन्तराकाश इति पुंलिङ्गनिर्दिष्टत्वादाकाशस्य तस्य **यदिति** नपुंसकेनानुवादे लिंगभंग इति । अन्यास्वारस्यद्वयं द्वितीयपादेनाह **तस्मिन्नि**ति । **अनपेक्षये**त्यत्र सहेति पूरणीयम्। **अनपेक्षा**शब्दो वैयर्थ्यपर्यवसायी। **तस्मिन्नि**त्येतद्वैयर्थ्येन सह व्यवहितान्वयोऽपि दोष इत्यर्थः। वस्तुतः **अनपेक्षये**त्यत्र **अनपेक्षते**ति पाठः स्यात्। तस्मिन् यदन्तरिति वाक्यमेव तन्मते व्यर्थम्। अत्रोक्तं **परिमले** आकाशस्येव तद्धर्माणामप्युपासनीयतया विशिष्टमुपास्यमिति ज्ञापनार्थं विशिष्टपरयच्छब्दप्रयोग इति उपरितनवाक्यदर्शनानन्तरमेव तदवसेयम्। ततस्तदवगतेः तद्ज्ञापनायोगात् व्यर्थमेवेदम्। तथापि **तस्मि**न्निति पदस्यानपेक्षतैव। **यदन्तरि**त्युक्तावपि पूर्ववाक्यतो हृदयस्यावगतत्वात्। किञ्च पूर्वं हृदयस्य लोकसिद्धतया सन्निकृष्टत्वात् **इद**मिति **अस्मि**न्निति च निर्देशः कृतः। तस्य भूयोनिर्देशे **तस्मि**न्निति निर्देशो न युज्यते। परमात्मतद्गुणानां शब्दैकवेद्यानामिदानीं तच्छब्देन निर्देशो युक्तः। एवं यावान् वा इत्युत्तरवाक्येऽनुवादैकरस्यमपि न भवतीति। दोषान्तरं **व्यवहित** इति **अन्वय**शब्दः समन्वयादित्यत्रेवाभिधेयाभिधायक-भावरूपसंबन्धपरः **तस्मिन्नि**ति पदस्य स्वरसादव्यवहिताकाशपरामर्शिनः व्यवहितपुण्डरीकसंबन्धः=

---

இழிக்கூறிய ப்ராணுதிவாதி மாத்திரமே உலகில் அதிவாதி என்பதில்லை. வேறு அதிவாதியுண்டென்று தோன்றுவதை விட ந்யாயமில்லை. ஆக ஸத்யமும் பூமாவுமாகிறது ப்ரஹ்மம். (29)

**अप्याकांक्षितकामवेदनविधिक्षेपः ; स्वपक्षे द्वयम्**
**यच्छब्दस्य यदैकशेष्यमपि या तत्रैकवद्भाविता ॥ ३० ॥**

तदभिधायकत्वमस्वरसम् । यद्वा **यदन्तरिति** पदबोध्यार्थस्याकाशेऽन्वयं विहाय हृत्पुण्डरीकरूपव्यवहित- न्वयोऽस्वरस इत्यर्थः । चतुर्थमाह **अपीति** । अत्राकाशोपासनवत् तत्कामानां कल्याणगुणानां एते सत्यान् कामान् इति वक्ष्यमाणानां **वेदन**स्योपासनस्य विधिरा**कांक्षितः** अपेक्षितः ; यच्छब्देन तदग्रहणा न्यूनता । तस्मिन्निति हृदयग्रहणे तत्रैषामभावात् । गुणविशिष्टाकाशग्रहणमिति चेत्—पूर्वमाकाशस्य तथानुक्ततया यच्छब्दस्य तावद्ग्राहकत्वं न सिद्ध्यति । कामानामत्राभिप्रेतत्वे, तस्मिन्निति परमात्म- परामर्शित्वे च सत्येव, किं **तदत्र** परमात्मनि विद्यते इति प्रश्नोपि घटेत । अस्मन्मते तु नास्त्ये- प्यस्वारस्यम् । अन्यास्वारस्यसत्त्वेऽपि द्वयमेवेत्याह **स्वपक्षे** इति । **द्वयम्** अस्वारस्यद्वयम् । तत्र यच्छब्दस्येति । एकशेष एव ऐकशेष्यम् । **यदन्तरिति** यच्छब्दे एकशेषस्वीकारो यः, तत्रैव शब्दे या **एकवद्भाविताऽपि** एकवद्भावश्च, तद्द्वयम् । एकमात्रग्रहणे प्रथमतः प्रतीयमाने तदुपेक्षा- याधिकग्रहणात् तदर्थं शब्दस्य निर्वाहविधानादीषत्क्लेश इत्याशयः । अत्र निर्वाहे आयासः कर्तव्यो भवति । तथाहि—तस्मिन्निति अव्यवहितमाकाशं परमात्मानं परामृश्य तत्र यत् गुणजात- मन्तरस्ति तत् अन्वेष्टव्यमित्युक्तौ आकाशस्यान्वेष्टव्यता न सिद्ध्येदिति तस्यापि यच्छब्देन ग्रहणे उभयग्रहण- मेकशेषत एव कार्यम् ; यश्च यच्च यदिति । एवं तर्हि **तस्मि**न्निति दहराकाशस्य गृहीतत्वात् **यत्** दहराकाश- तद्गुणजातोभयं तस्मिन्=दहराकाशेऽन्तरस्ति, तदन्वेष्टव्यमिति वक्तव्यम् । तस्मिन् दहराकाशे गुणजातम- स्यात् ; न तूभयम्, स्वस्मिन् स्वस्य स्थित्ययोगादित्याक्षेपोऽवतरति । अत्र **रत्नसारिण्यां** परिहार ए- मुक्तः । अस्तीति पदमध्याहार्यम् । अस्ति, तस्मिन्नन्तश्चेति द्वयं विधेयम्, यदित्यस्य यो दहराकाशः यच्च गुणजातमित्यर्थः तत्रास्तिपदे, दहराकाशरूपार्थान्वयः, तदन्तर्वर्तित्वे गुणजातमात्रस्य च यथायो- गमिति । **तत्त्वसारास्वादिन्याम्, हलन्त्य**मिति सूत्रे महाभाष्यद्वितीययोजनायाम्, हस्य ल् हल् प्रत्याहाररूपो हल् अन्यः ; उभयोरेकशेषः । अन्त्यं हल् इत् स्यादित्यर्थः । तत्रान्त्यमिति प्रत्याहारे हलि

30 दहराधिकरणம்—சாந்தோக்யத்தில் முடிவில் உள்ளது தஹரவித்யை. "ப்ரஹ்மத்திற்குப் பட்டணமாயுள்ள இந்த உடலில் தாமரைப்பூ வடிவி (ஹ்ருதயமென்ற) மாளிகை யாதொன்று உளதோ அதில் ஆகாசமுளது அதனுள் எது உளதோ அதையறிந்து உபாஸிக்கவேண்டும் (8) என்று ஓதப்பெற்றது இங்கு ஆகாசபதத்திற்கு பரமாத்மா பொருள் என்பது ஸர்வமத ஸம்மதம் 'அதனுள் எதுவோ அதை உபாஸிக்க வேண்டும்' என்கிற வாக்யத்திற்குப் பொருள் கூறுவதில் விவாதம். சாங்கர மதத்தினர் சொல்வதாவது—ஆகாசத்தை உபாஸிக்க வேண்டியிருப்ப தால் இந்த வாக்யத்திற்கு ஆகாசத்தினுள் எதுவோ அதை உபாஸி

अन्वेति, न तु हकारसमीपवर्तिलकाररूपे हलि, तद्वदित्युक्तम्। तत्र प्रकृतश्रुतौ अस्तीत्यध्याहारे तयोभयसाधारण्यात् असाधारण्याय हृदयान्तरित्यध्याहारो युक्तः, यो हृदयान्तः यच्च तस्मिन्नन्तरित्यर्थः। अथवा अन्तःपदं पूर्वप्रयुक्तान्तःपदोपस्थित्या हृदयान्तरित्यर्थकम्। तथा च यत् तस्मिन् दहराकाशे यश्च हृदयान्तरित्यर्थो युक्तः। हलन्त्यमित्यत्र च तत्पुरुषार्थे हलि अन्त्यत्वविशेषणस्य प्रयोजनाभावेऽपि बाधाभावात् अन्वयस्य त्यागो नापेक्ष्य इति सुवचम्। एतदपेक्षया तस्मिन् यदन्तरित्यत्र तस्मिन्निति पदेऽप्येकशेषस्वीकारेण तच्च स च तत्; तस्मिन्। **तत्** पूर्वोक्तं पुण्डरीकम्, **सः** आकाशः। तयोर्यथायथं दहराकाशतद्गुणजाते इति युक्तम्। परंतु एवमर्थस्येष्टत्वे **तच्छब्दस्यैकशेष्यमित्येव** श्लोके उक्तं स्यात्, न तु प्रथमं विहाय **यच्छब्दस्येति** निर्देश उचित इति शंक्येत।

अत इदं सर्वं विहाय **श्रुतप्रकाशिकामेवानुसरेम**। तदर्थो वास्तवस्तावत्—अन्तराकाश इत्यत्रान्तरशब्द एव, न त्वन्तरशब्दः। अन्तरित्यस्यान्तर्वर्तीत्यर्थः। भाष्ये पुंलिङ्गयच्छब्दप्रयोगेऽपि तदध्याहारः नेष्ट इति पक्षद्वयम्। अनध्याहारपक्षमनुसृत्य प्रकृतश्लोकचतुर्थपादः, पुंलिङ्गयच्छब्दाध्याहारपक्षे तु तच्छब्दमात्रे एकशेषः, न तु यच्छब्दे। एवञ्च दहर इत्यारभ्य यदन्तरित्येतावदेकं वाक्यम्। यश्च यच्च **यत्**। दहरः हृत्पुण्डरीकान्तर्वर्ती आकाशः, तद्दहराकाशान्तर्वर्ति च यदित्यर्थः। एवमन्वये पुंलिङ्गयच्छब्दार्थ-मात्रान्वय्यस्तिपदाध्याहारस्य नैव प्रसक्तिः। विशेषणद्वयस्य यथायथं यच्छब्दार्थयोरन्वयः। व्याख्योक्त-विचारोऽत्रास्थाने। अत एव तस्मिन्नित्यत्र नैकशेषप्रसक्तिः। तस्यान्तःपदद्वारा नपुंसकयच्छब्दमात्रेऽन्वयात्।

इतः परम् एकशेषः केन सूत्रेण, कथमेकवचनमित्येव विचार्यम्। श्रुतप्रकाशिकायां त्यदादिसूत्रं नपुंसकसूत्रञ्चोपात्तमस्ति। **रत्नसारिण्यां** यच्छब्दतच्छब्दयोस्त्यदाद्यन्तर्भावात् तेनैव सूत्रेणैकशेषः। तर्हि नपुंसकसूत्रोक्तैकवद्भावशास्त्राप्रसक्त्या स कथमिति चेत्—अत्र भावप्रकाशिकाकृतं व्यत्ययो बहुलमिति वा, सुपां सुलुगिति वा, "कर्मणो रोमन्थतपोभ्याम्" इति सूत्रे कर्मपदे पञ्चमीद्विवचनान्ते प्रयोक्तव्ये एक-वचनप्रयोगवत् प्रत्येकैकत्वस्य द्विगुरेकवचनमित्यत्रेव लिंगसामान्यस्य च विवक्षया वा निर्वाहसमनादृत्यान्यदुक्तम्—'अन्वेष्टव्यपदे नपुंसकसूत्रेणैकशेषः; अत एवैकवद्भावश्च। यत्तदोस्तु—"उद्दिश्यमानप्रतिनिर्दिश्यमानयो-रैक्यमापादयन्ति सर्वनामानि तल्लिंगमुपाददते" इत्युक्त्या कांस्यभोजिन्यायेन च विधेयपरान्वेष्टव्यपदानु-सारेण नपुंसकलिंगता तत्समानाधिकरणतया चैकवचनान्तता, 'तदन्वेष्टव्यम्' इति तत्पदस्य; यच्छब्दस्य तु तच्छब्दपारतन्त्र्यात् तदुभयम्' इति। इदं **तत्त्वसारास्वादिन्यां** निरस्तम्—उद्दिश्यमानेति वाक्यस्य

---

தென்ற பொருள் பொருந்தாது அதனால் **तस्मिन्**= அதில் என்பதற்கு ஹ்ருதயத்தில் என்றே பொருள். அதிலுள்ளது ஆகாசம் அது உபாஸ்யமென்று இதனைக் கண்டிக்கிறார்—இப்படி உரைக்கும் பிறமதத்தில் நான்கு அஸ்வாரஸ்யங்கள். (1). கீழே ஆகாச: என்று புல்லிங்கபதத்தாலே சொன்னதை அநுவாதம் செய்யும் போது **यत्** என்று நபும்ஸகலிங்க ப்ரயோகம் தவறாகும்,

उद्देश्यविधेययोरेकत्वसंपादकसर्वनामपदे तदुद्देश्यविधेयवाचकपदानुसारिलिंगके भवत इत्यर्थः । 'शैत्यं हि यत् सा प्रकृतिर्जलस्य' इत्यत्र शैत्यपदप्रकृतिपदे उद्देश्यविधेयपरे । तद्विशेषणे सर्वनामनी । तत्रैकमुद्देश्यानुसारेणान्यत् विधेयानुसारेण विभिन्नलिंगम् । प्रकृते शैत्यपदस्थाने किं पदमस्ति । वस्तुतः भोजिन्यायश्च वचनविरोधे कथं प्रवर्तते, यत्तदोस्त्यदाद्येकशेषे एकवद्भावं विना प्रयोगार्थमेव, नपुंसकसूत्रोक्तैकवद्भावस्याप्रवृत्त्यर्थमेव तत्र सूत्रे अस्येति निर्देशात् द्विवचनान्तप्रयोगस्यैवानुशासनसिद्धत्वात् स्मृतिविरोधेन न्यायप्रवर्तनायोगात् इत्यपि द्वितीयव्याख्याहृदयम् । शास्त्रप्राप्ते प्रयोगे वचनभेदस्य सम्मतव्यत्वमेव । 'यल्लिंगं यद्वचनम्' इति विशेष्यानुसारिता विशेषणस्य लिंगवचनयोरुक्ता शास्त्राविरोधे । न तु विशेषणानुसारिता विशेष्यस्य । किंच अन्वेष्टव्यमित्यप्रयुज्य तस्मिन् यदन्तस्तदन्विष्यताम्, तद् न्वच्छेदित्यादिप्रयोगस्यापि संभवात् तत्र यत्तत्पदवचननिर्वाहः कथम्? त्यदादीनि पुंनपुंसकतो लिंगप्रतिपादकानि इति लिङ्गप्राप्त्या, अन्वेष्टव्यपदानुसारिता तत्र व्यर्था । यत्पदप्रयोगकाले अन्वेष्टव्यपदोपस्थित्यभावात् तदनुसारित्वं क्लिष्टमेव । अतः 'गतिशब्दाभ्यां तथा हि दृष्टम्' इति सूत्रे द्विवचनस्थाने एकवचनान्तदृष्टपदप्रयोगे, 'शक्यमञ्जलिभिः पातुं वाताः सुरभिशीतलाः' इत्यादौ च यो निर्वाहोऽवश्यस्वीकार्यः, स एवात्र स्वरस इति भावप्रकाशिकोक्तमेव सम्यक् । अतः श्रुतप्रकाशिकायां नपुंसकसूत्रमादायैकवद्भावोपपादनं यत्तद्विषये कृतं तत्सूत्रविषयान्वेष्टव्यपदानुसारित्वस्य यत्तदोर्वर्तमानत्वादिति शाब्दिकचंक्रमणं न घटते । किञ्च श्रुतप्रकाशिकाकारैरेव वेदार्थसंग्रहतात्पर्यदीपिकायाम्, "'नपुंसकमनपुंसकेनैकवच्चास्यान्यतरस्याम्' इति सूत्रेण नपुंसकानपुंसकसंनिपाते नपुंसकस्यैकशेषत्वं विकल्पेनैकवद्भावश्च विधीयत इति, अत्र यो यदिति पुंलिंगनपुंसकरूपयच्छब्दद्वयोपनिपाते यदिति नपुंसकैकशेष्यमेकवद्भावश्चेति निश्चीयते" इति स्पष्टं यच्छब्द एव नपुंसकसूत्रप्रवृत्तिः कथिता । न ह्यन्वेष्टव्यशब्दस्पर्शोऽस्ति । न च त्यदादिसूत्रविषयत्वाहि यत्पदे तत्पदे च न नपुंसकसूत्रप्रवृत्तिरिति वाच्यम्; शाब्दिकाशयविरोधात् । तर्हि नपुंसकसूत्रे शुक्लः पट इत्यादि उक्त्वा तानीमानि शुक्लानि, तदिदं शुक्लम् इति शुक्लशब्द इव तच्छब्देऽपि नपुंसकसूत्रप्रवृत्तिरेव दर्शिता । त्यदादिसूत्रमप्यत्र का

---

(2). கீழே ஹ்ருதயத்தில் ஆகாசமுளதென்று சொல்லியிருப்பதால் மீண்டும் அதையே சொல்வது வீணாகும். (3) आकाशस्तस्मिन् என்று आकाशवाக்யத்திற்கு மேலுள்ள तस्मिन् என்பதற்கு முன் வாக்யத்திற்கும் முன்னே சொன்ன ஹ்ருதயம் பொருளென்பது ஸ்வரஸமாகாது, இந்த வித்யையில் ஆகாசத்தையும் அதற்கு இருக்கும் காமங்களையும் = அதாவது கல்யாணகுணங்களையும் உபாஸிக்கவேண்டியிருப்பதால் கல்யாணகுணங்களின் உபாஸனத்திற்கு விதிவாக்யம் வேண்டியிருப்பதால் அதையே இவ் வாக்யத்திற்குப் பொருளாகக் கொள்வது கூடுமாயிருக்க அதை விடுவது நான்காவது அஸ்வாரஸ்யமாமென்றபடி.

प्रवर्तताम् । तन्मुख्यलक्ष्यं त्यदाद्यन्तर्गतप्रतिपदिक. तद्भिन्नानुपूर्वीकप्रातिपादिकसंनिपातेऽप्येकशेषः । अत एव **भावप्रकाशिकायां** वाकारोऽध्याहर्तव्य इत्युक्तम् । त्यदादिसूत्रत एकशेषे तु पुंनपुंसकतो लिंगवचनं वाक्यमस्त्येव । अतः शाब्दिकनिष्कर्षानुसारेण श्रुतप्रकाशिकानिर्वाहो भावप्रकाशिकादर्शितो नैवानादर्तव्य इति ।

वस्तुतस्तु एतच्छ्लोकतुरीयपादमनुसृत्य प्रवृत्ता व्यासार्यसूक्तिः किञ्चित्स्वातन्त्र्येण प्रवृत्तेत्यभ्यूह्यते । तथा हि तत्र पक्षद्वयोल्लेखी वाकारो न लक्ष्यते । **तात्पर्यदीपिकायाम**प्येतैः सूत्रद्वयमप्युपात्तम् । तत्र हि पुंल्लिंगनपुंसकलिंगयच्छब्दद्वयं न श्रूयत इत्याशंक्य, 'त्यदादीनि सर्वैर्नित्यम्' इति त्यदादीनामेकशेषत्वविधानात् तदन्यतमयच्छब्दस्यैकशेषत्वमवगम्यते । नपुंसकसूत्रेण नपुंसकस्यैकशेषत्वं विकल्पेनैकवद्भावश्च" इत्येव समाहितम् । ग्रन्थद्वयमपि—यच्छब्दादौ त्यदादिसूत्रादेकशेषः ; नपुंसकसूत्रं तु नैकशेषविधायकम् ; किंतु सरूपसूत्रत्यदादिसूत्रसाधारण्येन प्राप्ते एकशेषे नपुंसकस्यैव शेषत्वस्य तत्रैव विकल्पेनैकवद्भावस्य च विधायकमित्यर्थकम् । एवं तर्हि त्यदादीनां पुनपुंसकतो लिंगवचनानीति किमर्थं वचनमिति चेत्—एक शेषसूत्राणां प्रत्याख्याने प्रवृत्तानामेतद्वचनेन कर्तव्यं किमस्ति । पुमांस्स्त्रियेति, नपुंमकमिति च सूत्रप्रवृत्तिस्त्यदादावपि वर्तत इति ज्ञापनमेव तत्कार्यम् । यद्यपि एको व्रीहिः, वेदाः प्रमाणमित्यादिवत् जात्येकत्वविवक्षया वा वाचकशब्दैक्यस्यार्थे आरोपेण वा एकवचनं घटते । यथा सर्वेभ्यो दर्शपूर्णमासावित्यादौ उद्देश्यानां फलानामनेकत्वेपि एकसर्वशब्दोपात्ततया एकार्थत्वमेवेति वदन्ति, तथेति हि वक्तुं शक्यते—तथापि एकवच्चेत्यनुशासनमपि प्रवर्तत इति निर्वाहे निष्कम्पनव्यप्रयोगसाधुतेति प्रयोगाणां निर्बाधता स्यादिति भावः । एवमुपपादनस्य स्वातन्त्र्यप्रवृत्तत्वादेव अस्वारस्यं मन्येरन्निति कृत्वा श्लोकेऽत्र तथोक्तिः ।

सर्वमिदं परमत इवाधिकास्वारस्याभावात् पुल्लिंगयच्छब्दानध्याहारेण यच्छब्देनाकाशतद्गुणोभयग्रहणमिति पक्षे । यच्छब्दाध्याहारे, तच्छब्दे परमियं रीतिः सर्वाऽप्यस्त्येव । तत्र योजना तु—दहरोऽस्मिन्नन्तर्य आकाशः यच्च तस्मिन्नन्तः, तत् एकशेषेण आकाशगुणजातोभयमन्वेष्टव्यमिति । तदा तच्छब्दे स च तच्चेति [अनध्याहारे आकाशश्च तच्चेति] एकशेषो ग्राह्यः । अथ वा माभूदेकशेषः । दहरोऽस्मिन्नन्तराकाश इत्यस्य हृत्पुण्डरीकान्तर्वर्तिदहराकाश इत्येकोद्देश्यबोधकत्वम्, तस्मिन् यदन्तस्तदित्यस्य दहराकाशान्तर्वर्ति गुणजातमित्युद्देश्यान्तरबोधकत्वम् ; तच्छब्दानन्तरं चकारो ग्राह्यः ; एतदुभयमन्वेष्टव्यमित्यर्थः । सर्वत्रापि

---

ஆனால் ஆகாசத்தின் உபாஸனம் விதிக்கப்படவில்லையேயெனில், விதிக்கப்படுமென்போம். 'ஹ்ருதய புண்டரீகத்திலேயிருக்கும் ஆகாசமும் அதனுள்ளிருக்குமதுமாவது எது எது அதனை யுபாஸிப்பதென்று பொருள், **यत्** என்ற சொல்லால் ஆகாசத்தையும் குணத்தையும் சேர்த்தெடுப்பது. **यश्च यच्च** **यत्** என்று ஏகசேஷம். **यत्**பதம் ஸ்வரஸமாய் ஒன்றையே கூறுமதாயிருக்க அனேகத்தைக் கொள்வதற்காக **ஏகசேஷகல்ப்பனம்** அஸ்வரஸமென்றால்,

पक्षे चकाराध्याहारोऽस्त्येव ; यो दहराकाशः यश्चान्तर्वर्तीत्यनुक्तौ उभयग्रहणासिद्धेः । अन्वेष्टव्यपदमात्रे नपुंसकसूत्रेणैकशेषः । ईदृशः प्रयोगो बहुरस्ति । तद्वाव विजिज्ञासितव्यमित्यत्र तत्पदेन अन्वेष्टव्यपदनिर्दिष्टस्य ग्रहणादेकवचनम् । अतो न कुत्राप्येकशेषः । नन्वाकाशाग्रहणेऽप्यष्टानामपहतपाप्मत्वादीनां यदित्येकवचनान्तेन ग्रहणादेकशेष आवश्यक इति चेत्—तत् गुणमात्रपरस्तच्छब्द इति शांकरोपनिषद्भाष्ययोजनायामपि तुल्यम्। वस्तुतः पश्चादेव गुणानां ज्ञाप्यमानत्वात् , प्रथमतस्तद्विषयशब्दस्य संख्यायाश्चानवधारणात् सामान्यतो नपुंसकलिंगमेकवचनञ्च सा ध्वित्यलम्। एवं स्वपरपक्षयोर्दोषसदसद्भावविमर्शः कृतः।

ननु तस्मिन् यदन्तस्तदन्वेष्टव्यमित्यत्र तस्मिन्नित्यस्य अन्वेष्टव्यमित्यत्राप्यन्वयात्, यदन्तः, तत् तस्मिन्नन्वेष्टव्यम् विजिज्ञासितव्यम् इति तदन्तवर्तित्वेन तदुपासने उक्ते धर्म्युपासनमपि लभ्यत एव। यद्वा 'तस्मिन् वर्तमानं किमिति विचार्यम्। यतस्तत्र विजिज्ञासितव्यम्। न चात्रात्यल्पे किं स्यादिति शंक्यम्, तस्य सर्वप्रपञ्चाधारत्वात्। न च तस्य हेयस्य सर्वस्य कथमुपास्यत्वमिति मन्तव्यम्; प्रयञ्चवत् उपास्यत्वार्हाणां कामानामपि सत्त्वात्' इति धर्माणां विचार्य निर्णेयतया तत्प्राधान्यमादृत्य श्रुतिरेवं वक्तीति तावता आकाशस्यानुपास्यत्वप्रसक्त्यभावात् किमिति क्लेशादरणमिति चेत्—व्याकरणसंमतेन पथोभयग्रहणक्लेशस्यादोषत्वात् । अन्यथा व्याकरणमेवात्र व्यर्थं स्यादिति धर्मिविषयेऽपि स्पष्टविधिवचनमेव श्रेयः ॥ ३० ॥

31 अर्वाग्भिः पूर्वमीमांसकैः—कर्मकाण्डविहितयागद्युद्देश्यभूतानां देवतानां विग्रहादिकमस्ति न वेति विचारे, 'विधिवाक्येषु देवतावाचकाग्न्यादिपदमात्रसत्त्वात् विग्रहादेरनुक्तत्वात् मन्त्रार्थवादेभ्य एव तत्सद्भावो वक्तव्यः। तत्र विधिसंनिधिपठिता अर्थवादाः विधेयप्राशस्त्यबोधनाय प्रवृत्ता इति निर्विवादम्। प्राशस्त्यज्ञानञ्च विधेयेषु गुणवत्त्वज्ञानाज्जायत इति अर्थवादानां गुणाभिधायकमस्त्येव। अथापि तेषां गुणानां सत्यत्वे सत्येव स्तुतित्वमिति नास्ति । प्रत्युत खर्वाटः खर्वाटत्वेन कथ्यमानः स्तुतो न भवति, किंतु प्रशस्तकेशत्वारोपण एवेति अविद्यमानगुणकथनत एव स्तुतिनिर्वाहात् गुणे तात्पर्यस्यानावश्यकत्वात् विग्रहवत्त्वादयः प्रतीता न वास्तवा इति निश्चीयते । एवमेव विधिवाक्यसंनिहितैर्मन्त्रैर्देवतागुणानामवगमेऽपि, मन्त्रैरेवानुष्ठेयार्थः स्मर्तव्य इति व्यक्तिस्मरण एव मन्त्रोपयोगात्

---

இதனைப் பொறுக்கவேண்டும், வ்யாகரணஸம்மதம்தானே. ஆனால் ஒரு சப்த மானாலும் ஏகவசனமெப்படியென்னில், அதிலும் एकवचनात्र என்கிற வியாகரணஸூத்ரத்தின் படியா, வேறுவிதமா என்ற விசாரப்பிரயாசையிருக்கலாம். இத்தையும் அஸ்வாரஸ்யமாகச்சொல்லில் இம் மதத்தில் அஸ்வாரஸ்யம் இவ்வாறிரண்டே ஆகையால் இவ் உரையே சிறந்தது, எப்படியும் यत् என்ற சொல்லாலே பல கல்யாண குணங்களைக் கொள்ளவேண்டும், நபும்ஸகலிங்கத்தையும் நிர்வஹிக்க வேண்டும். அதுபோல் ஆகாசத்தையும் கூட்டிக் கொள்வதே தகும் (30)

(1-3-7.) पटुतरविग्रहादि भजतां भवतापवतां भगवदुपासनं दिविषदामपि संभवति ।

तावतैव चरितार्थानां तेषां गुणेष्वपि तात्पर्यं नाऽऽकलनीयम् इति निरूपयद्भिः देवताविग्रहादिकं निराकारि । यदुच्यते, 'विग्रहो हविरादानं युगपत् कर्मसंनिधिः । प्रीतिः फलप्रदानञ्च देवतानां न विद्यते' इति । एतद्वासनावासितान्तःकरणैः परमात्मोपासने मनुष्याणामेवाधिकारः, न देवतानाम्, यथा कर्मसु तासां नाधिकार इति चिन्तितमासीत् । तन्निरसनेन देवतानां विग्रहादिकं स्थापयता भगवता बादरायणेन तासां भगवदुपासनेऽधिकारः समर्थितः पूर्वोक्तदहराधिकरणपश्चाद्भाविनाऽधिकरणेन । तमिममर्थं मन्त्रार्थ-वादान्यथाकरणायोगोपपादनेन पञ्चभिः श्लोकैरिह संगृह्णाति । तत्र देवताः परमात्मोपासनकर्तृत्वार्हाः अर्थित्वसामर्थ्यरूपाधिकारपूर्णत्वादित्याह **पटुतरे**ति प्रथमपद्येन ।

अत्र पूर्वार्धे सूत्रार्थः स्पष्टमुदितो भवति—**तत्** उपासनम् **उपर्यपि** दिविषदामपि ; कुतः तेषामपि पटुतरविग्रहादिमत्त्वात् तापत्रयवत्त्वाचार्थित्वसामर्थ्यसंभवादिति । **पटुः** कर्तव्यं यथावत् त्वरया च कर्तुं क्षमः । अतिशयेन पटुः **पटुतरः** । मनुष्यशरीरापेक्षया देवताशरीरस्य कार्यक्षमत्वाति-शयोऽस्तीत्युच्यते । देवतानामपि कर्मपारवश्यात् कदाचित् सामर्थ्यहानिरसुरैः परिभवेऽन्यत्र च दक्षयज्ञादौ दृष्ट इति पटुतमेति नोक्तम् । **विग्रहो देहः** । तस्य शक्तत्वेऽपि ज्ञानाभावेऽनधिकार इति **आदि**पदेन ज्ञानोक्तिः । देवैस्तत्र जन्मनि वेदाध्ययनाकरणेऽपि पूर्वजन्माधीतवेदतदर्थवेदनाप्रमोषात् चतुर्मुखाद्यनु-ग्रहमूलकसर्ववेदस्फूर्त्यादिमत्त्वाच्च तत्सिद्धिरिति भावः । शूद्राणामिव देवानां पर्युदस्तत्वाभावोऽप्यादिपदार्थः । अत्रादिपदेनार्थात् हविरादानादिकमप्यस्तीति तत्समर्थनमप्यभिमतम् । देवताधिकरणगतसर्वसूत्राभिप्रेतार्थ-संग्रह इहाऽऽदिपदेनेत्युक्तं भवति । तथाचैवं शंकापरिहारौ—ननु विग्रहस्वीकारे तेन विग्रहेण कर्मसु दीयमानं हविस्ता आददत इत्येष्टव्यम् ; न हि तथा ता उपलभ्यन्ते । अतो न हविरादानम् ॥ सूक्ष्मत्वादिनाऽस्माकं तदनुपलम्भ इति चेत्—विग्रहवत्त्वे सर्वत्र देशे समान एव समये क्रियमाणेषु कर्मसु युगपत्संनिधिः कथं भवितुमर्हति । अतोऽपि न विग्रहः । अनेकविग्रहपरिग्रहोऽपि तासां प्रतीयत इति चेत्—तर्हि ताभिर्हविर्भोजनप्रीताभिर्यागादिकर्तारः, अतिथिभिरिव गृहस्थाः, अनुग्राह्या इति स्यात् । ताः प्रीता न वेति को वेद । अतोऽनाश्वास एव स्यात् । ननु कर्म यथावदनुष्ठितमित्यत्र संशयाभावे देवताः प्रीता इत्यत्र न संदेग्धव्यमिति चेत्—कर्मजन्यफलोत्पत्तेः समनन्तरक्षण एवाभावात् व्यवहितकालभाविफल-

---

31. தேவதாதிகரணம் தேவதைகளுக்கும் பகவானை உபாஸிக்க. அதிகாரமுண்டென்கிறது.

நம்மைவிட திடமான உடலும் கருவிகளும் அறிவும் சக்தியுமுடையார் களும் ஸம்ஸாரதாபங்கள் பலவற்றிற்கு ஆளாகியுமிருக்கும் (மிருப்பதால்) ஸ்வர்க்கவாஸியான தேவதைகளுக்கும் பகவானை யுபாஸிப்பது கூடும். அவர் களுக்கு உடல் முதலானவையெல்லாம் உண்டென்கிற விஷயத்தில் நூற்றுக்

**ननु शतमर्थवादवचसामपि मन्त्रगिरां विधिवदिह प्रमाणमपदोषमपुम्प्रभवम् ॥ ३१ ॥**

काले तासां प्रीत्यनुवृत्तिरस्ति, ता अनुपहताः शक्ता एव सन्तीत्यत्र मानाभावात्। तासां क्षयप्रसक्तौ च नैष्फल्यमेव स्यादिति फलप्रदानं तत्कर्तृकतया न स्वीकर्तव्यम्। देवतानुद्देश्यकदानतपःप्रभृतिष्विव च प्रीति विनैवोपपत्तौ किं तया। एवञ्च प्रीत्यादिकमपि नापेक्ष्यम्। अतस्तदंशे तात्पर्याभावे विग्रहेऽपि तात्पर्यं मा भूदिति मीमांसकवादः। परिहारस्तु—फलप्रदानपर्यन्तं सर्वमेष्टव्यमेव। इन्द्राद्युद्देशेन कृतानां कर्मणामिन्द्रादयः फलं ददत्येव। तद्व्यक्त्यभावे तत्स्थाने इन्द्रव्यक्त्यन्तरस्य स्थित्या तद्द्वारा फल-प्रापणं सर्वान्तर्यामिणा सर्वकर्मसमाराध्येन भगवता क्रियते। कस्याप्यभावे तु स्वयमेव। तथाच क्षणविलयिनामिति **दयाशतके** श्लोकः। दानादीनामपि तद्विधाता विधातैव फलस्य विधाता। अतो विग्रहस्वीकारे नानुपपत्तिरिति संग्रहः।

शक्तिज्ञानयोः सतोरपि फलार्थित्वाभावात् नाधिकार इत्यत्राह **भवे**ति। **भवे** संसारे ये तापाः अध्यात्मिकाधिदैविकाधिभौतिकाः ते तासामपि सन्ति। मतुप् अतिशायने। मनुष्यतोऽधिकोऽपि तासां भवति। विवेकाधिक्येन तापकाले निर्वेदाधिक्यात् वैराग्यमपि विशिष्टं भवति। **दिविषदां** स्वर्गे **सीदतां** वर्तमानानां **सीदतां**=असुरपरिभवादिना तत्र दुर्लभस्थितीनाञ्च। **अपि**शब्दो दृष्टान्ततया मनुष्यसमुच्चये।

ननु शब्द एवात्र प्रमाणं वक्तव्यम्: मन्त्रार्थवादतस्तत्सिद्धिरुक्तैवेत्यत्राह **नन्वि**ति। **नन्वि**ति संबोधने, **खल्वि**त्यर्थे वा। विधिसनिहितत्वादर्थवादानां प्रथममुक्तिः। अनुष्ठानकालेऽपि स्मारकाः मन्त्राः। तेषां शतम्। **शत**मित्यानन्त्ये। अनन्ताः मन्त्रार्थवादाः इह प्रमाणम्, "वज्रहस्तः पुरन्दरः। तेनेन्द्रो वज्रमुदयच्छत्। त्रिशीर्षाणं त्वाष्टमहनम्। प्रतर्दनो वै दैवोदासिरिन्द्रस्य प्रियं धामोपजगाम युद्धेन पौरुषेण च। तं देवा ज्योतिषां ज्योतिरायुर्होपासतेऽमृतम्। (अग्निवाय्विन्द्रादयः) तन्न व्यजानन्त किमेतद्यक्षमिति। कस्तं मदामदं देवं मदन्यो ज्ञातुमर्हति। तस्य ह देताश्चन नाभूत्या ईशते" इत्यादयः विग्रहशक्त्यादिकं तापं ब्रह्मोपसनादिकञ्च देवतानां प्रतिपादयन्ति। **अपि**शब्दोऽनुक्तसमुच्चायकोऽपि। देवानां सालोक्यसायुज्यादयो विधिवाक्येषु फलत्वेनोक्ताः सत्याः; तदभावे विधिहानेः। अतो विग्रहाद्यपलापो न भवति। अतो विधिषु तदश्रवणोक्तिरप्यपास्ता॥ अस्तु मन्त्रार्थवादेषु प्रतिपादनम्। तस्याः प्रतिपत्तेः प्रमात्वं कथमित्यत्राह **अपदोष**मिति। अर्थज्ञानस्याप्रमात्वं प्रतीतार्थबाधे सति स्यात्। अप्रत्यक्षदेवतादिविषये प्रत्यक्षरूपो बाधो दुर्वचः। बाधाभावेऽपि वाक्यस्य दोषमूलकत्वे

---

*கணக்கான அர்த்தவாதவாக்யங்களும் மந்த்ர சொற்களும் ப்ரமாணமாகும். விதிவாக்யம் போலவே அவையும் வேதமாய் ஒருவனால் இயற்றப்பெற்ற தென்னவாகாமையால் வக்தாவுக்கு உள்ள அஜ்ஞானம், ப்ராந்தி, அசக்தி பிறரை வஞ்சித்தல் என்கிற தோஷங்களுக்கு இவை இடமாகாமலிருப்பதாலே ப்ரமாணமாவது திண்ணம்.*

**स्तुतिपरमाद्यमत्र निजसाध्यविधेयरुचिप्रजननसिद्धये स्ववचनीयगुणादरवत् ।**
**तदितरथा न सिध्यति विधिष्विव तत्त्वविदां कथमसता गुणेन कथितेन नुतिर्भवति॥**

---

निश्चिते प्रामाण्याभावोऽनुमीयेत । नात्र वेदे दोषोऽस्ति । वक्तृगतभ्रमप्रमादादिरेव हि वचसो दोषः । न चात्र पुरुषोऽस्ति । अपुंप्रभवत्वात् । **पुमान्** पुरुषः **प्रभवः** कारण मस्य शतस्य न भवतीत्यपुंप्रभवम् । अपौरुषेयं हीदम् । अतोऽप्रमात्वसाधकाभावात् स्वतःप्रमात्वात् प्रतीतानामंशानां सर्वेषां यथार्थत्वमेवेति ॥ ३१ ॥

32 ननु वेदवाक्यानां सर्वत्र वाच्यार्थे प्रामाण्यस्वीकारे, आदित्यो यूपः इत्युक्ते यूपादित्यैक्येऽपि प्रामाण्यं स्यात् । तस्य बाधितत्वात् त्याग इति चेत्—तर्हि तद्वाक्यमप्रमाणं स्यत् ॥ नैवम् । यत्रार्थे तात्पर्यम्, तत्र वेदः प्रमाणम्, लोकवत् । आदित्यसादृश्ये उज्ज्वलत्वादावेव तात्पर्यात् नाप्रामाण्यम्; नापि वाच्यार्थस्वीकार इति चेत्—तर्हि प्रकृतेऽप्यर्थवादानां स्तुतावेव तात्पर्यात् प्राशस्त्यांशे प्रामाण्यम्, न तु वाच्ये वायुदेवताक्षेपिष्ठत्वादावित्यत्राह **स्तुतीति** । अत्रः मन्त्रार्थवादयो **आद्यम्** । पूर्वं शतमिति प्रयोगात् क्लीबनिर्देशः । अर्थवादशतं त्वदुक्तरीत्या स्तुतितात्पर्यकमेव सत् निजया स्वकृतया स्तुत्या साध्या या विधेये कर्मणि **रुचिः**=अनुष्ठेयत्वेनेच्छा तदुत्पादनरूपकार्यनिष्पत्त्यर्थमेव स्वेन शतेन **वचनीयेषु**=वक्तव्येषु गुणेष्व**ादरवत्** तात्पर्ययुक्तमेव । **इतरथा** गुणेष्वादराभावे तत् स्तुतिपरत्वं न सिद्ध्यति । **विधिष्विव** । विधिवाक्यात् स्तुत्यलाभात् खलु अर्थवादान्वेषणा । कुतस्तत्र तदलाभः । विधिषु देवतादिगुणाकथनात् । तद्वदत्र गुणकथनस्यानिष्टत्वे स्तुत्यलाभ एव । नन्वसत्यगुणकथनमत्रास्ति; विधिषु तदपि नास्तीति चेत्—तत्त्वविदामर्थवादोक्तगुणासत्यत्वज्ञाने सति अप्रामाण्यज्ञानानास्कन्दितगुणज्ञानहेतुव्यापाररूपस्तुतेरभाव एव विधिष्विवार्थवादे; यथा क्षीरं पिब, शिखा वर्धिष्यते इति बालोपच्छन्दनविध्यर्थवादे अपरमार्थगुणकथनमिति ज्ञाने सति न स्तुतिग्रहणम् । मिथ्यागुणकथनात् वास्तवगुणः कश्चिदपि नास्तीति निश्चयात् प्रत्युताप्रवृत्तिरेवार्थवादफलं भवेत् । अथवा **विधिष्विवे**त्यस्यायमर्थः—विधेः प्रवर्तकत्वमिष्टसाधनताज्ञानद्वारा; ज्ञानं भ्रमप्रमासाधारणमेव लोके प्रवृत्तिहेतुरिति भ्रमात्मकज्ञानेनैव प्रवृत्तिनिर्वाहात् कर्मणां फलहेतुत्वं वास्तवं मा भूदिति स्यात् । अयं भ्रम इति तत्त्व-

---

*32. அர்த்தவாதம், மந்த்ரம் என்று சொன்னவற்றில் முதல் வகுப்பானது துதிக்க வந்ததாகையாலே, தான் எதை யுண்டுபண்ண ஏற்பட்டதோ அதை—அதாவது அனுஷ்டிக்க வேண்டிய கார்யங்களில் ருசியை உண்டு பண்ணுவதற்காகவே, தான் சொல்லும் குணங்களிலும் நோக்கு உடையதாகும். இல்லையாகில் துதிப்பதென்பதே யில்லையாம். கர்மவிதிவாக்யம் துதிப்பதாயிராமையால்தானே ருசியை யுண்டுபண்ணப் போதாதென்கிறோம். இல்லாத குணங்களை ஏறிட்டும் துதிக்கலாமேயென்னில்—இந்த குணங்கள்*

**अथ मनवो विधेयपरिबोधनकार्यमुखात् विधिमुपकुर्वते हि दिविषद्वपुरादिधियम् ।
उपजनयन्त एनमुपकर्तुमलं खलु ते ; कथमिव देवता धियमुपैति वपुर्विधुरा ॥ ३३ ॥**

---

विदां तत्र प्रवृत्तिर्न स्यादिति चेत्, स्तुतावपि तुल्यम् । अबाधादिष्टसाधनत्वं वास्तवमिति चेत्—गुणा अपि तथैव गुणाभिधानमात्रस्य स्तुतित्वेऽपि वेदजन्यगुणज्ञानस्य प्रमात्वभंगाभावात् गुणसत्यत्वमवर्ज्यम् । किंच **तत्त्वविदां** स्तुतिशब्दार्थे यथावद्ज्ञातवतां गुणेष्वादराभावे स्तुतिपरत्वं न सिध्यति । तत्र हेतुमाह **कथ**मिति । **असता** अविद्यमानेन गुणेन **कथितेन** शब्दजन्यभ्रमज्ञानविषयीकृतेन **नुतिः** स्तुतिर्न भवति । स्तुतिभ्रमः स्यान्नाम ; न तु स्तुतिः । गुणिनिष्ठगुणाभिधानं स्तोत्रमिति मीमांसका अप्याहुः । गुणिनिष्ठत्वे सत्येव गुणिनि गुणाभिधान एव स्तुतिव्यवहारो मुख्यः । तदेव सत्यगुणवर्णनं परमार्थगुणाभिधानमित्युच्यते । अन्यथा अविद्यमानैरेव गुणैस्तुतित्वनिर्वाहे अविद्यमानेऽपि दोषे निन्दात्वसिद्धिरिति अपगोरणानिषेधफलं शतयातना न स्यात् । रात्रिसत्रविधावर्थवादावगतप्रतिष्ठाफलमपि न स्यात् । अबाधात् ग्रहणमिति स्तुत्यर्थगुणेष्वपि तुल्यम् । अतो गुणस्यासत्त्वे वास्तवगुणाभिधानरूपस्तुतिशब्दार्थानिष्पत्तिरेव । अन्यदीयान् गुणान् अन्यत्रारोप्यवर्णनरूपस्तुतिस्तु यथार्थस्तवासंभवे, स्तव्यस्याविवेकित्वे भवति । अचेतनत्वे च देवतायाः संबोधनमप्यशक्यम् ; किमुत स्तुतिः ॥ ३२ ॥

४३ मन्त्राणामनुष्ठेयार्थस्मारकत्वात् कर्मस्मारणमेव कृत्यम्, न तु देवतागुणबोधनमिति मन्वानान् प्रत्याह **अथे**ति । यथाक्रममर्थवादे वक्तव्योक्त्यनन्तरं मन्त्र उच्यते—**अथ**—पूर्वमर्थवादानन्तरमुक्ताः यद्वा अर्थवादाधीनरुच्यधीनानुष्ठानकाले इत्यर्थः । **मनवः** मन्त्राः उच्चार्यमाणाः **विधेयस्य**—अनुष्ठेयस्य कर्मणः **परिबोधनं** स्मारणरूपं यत् कार्यम्, **तन्मुखेन** तद्द्वारा **विधिमुपकुर्वते**—विशिष्टकर्मविधिविषयीभवन्ति हि । यद्वा **विधिम्** अनुष्ठानमुपकुर्वते—अनुष्ठानांगं भवन्ति हि । अस्तु ; किं तेनेत्यत्राह **दिवी**ति । मन्त्रेषु प्रायः कर्मवाचकपदं नास्ति, किंतु देवतापदमेव तद्विग्रहगुणकर्मबोधकपदविशिष्टम् । अतो **दिविषदां** देवानां वपुरादिविषये बुद्धिं जनयन्तस्सन्तः तादृशदेवतोद्देश्यकत्वेन रूपेण कर्मस्मारणं कारयन्ति । अतः **एनमुपकर्तुं** विध्युपकारकतां प्राप्तुं ते मनवः वपुरादिधीजननमुखेनैव **अलं** शक्ताः । ननु देवताशक्तिमात्रमुपादेयम् ; किं वपुरादिनेत्यत्राह **कथ**मिति । **वपुर्विधुरा** विग्रहशून्या

---

இல்லாதவையென்ற உண்மை யறியப் படாதவரையில் அவற்றால் துதி ஏற்படலாம் அவ்வுண்மை யறிந்தவர்விஷயத்தில் இல்லாத குணங்களைச் சொல்வதால் துதி எங்ஙனே செய்ததாகும்! (32)

33. அர்த்தவாத விஷயம் சொன்னோம். இனி இரண்டாவது வகுப்பு. மந்த்ரங்களும் செய்ய வேண்டிய வேலையை நினைப்பூட்டுவதென்னும் கார்யம் வாயிலாக வல்லவோ விதிவாக்யத்திற்குத் துணையாகின்றன. கர்மாவுக்கு ஸம்பந்தப்பட்ட தேவதைகளின் உடல் முதலானவற்றின் அறிவையுண்டு பண்ணிக்கொண்டுதானே அம் மந்த்ரங்கள் விதிக்கு உதவுகின்றன. உடலில்லா

अथ सुरनरतिर्यक्स्थावरात्मप्रपञ्चप्रजननगणनासु च्छन्दसामन्तभागे ।
प्रकटतरमधीता विग्रहा देवतानाम् ; अवकल्य गतिश्चोपासनप्रक्रियासु ॥ ३४ ॥
निगमशतनिदानैर्देवताविग्रहादि स्फुटतरमितिहासैर्धर्मशास्त्रैः पुराणैः ।

---

चेत्, अमूर्तत्वात् न बुद्धिमारोहेत् । तदविशेषात् गुणादयोऽपि तत्रोक्ता ग्राह्याः । तेन देवता स्तुता भतति । ततः प्रीत्यतिशयात् यथावत् फलप्राप्तिरिति ॥ ३३ ॥

34 यागादिकर्मोद्देश्यत्ववत् उपासनविषयत्वस्यापि देवतासु वेदैर्वेदनात् तत्र विग्रहाणामत्यन्तमुपयोग इत्याह **अथेति** । **अथ** संहितानन्तरं छन्दसामन्तभागे=वेदानामन्ते उपनिषदि देवतिर्यङ्मनुष्यस्थावररूपचतुर्विधचेतनप्रपञ्चसृष्टिबोधकप्रकरणेषु ऐतरेयकबृहदारण्यकादिषु 'द्वया हि प्राजापत्याः देवाश्चासुराश्च' इत्यादिना देवतानां विग्रहाः **अधीताः** निर्दिष्टाः । इतस्तत्परिज्ञानमपि कर्मकाण्डे उपयुज्यते । विशिष्य च तत्तद्देवताविषयकोपासनेषु विग्रहज्ञानस्यावश्यकत्वादत्रोक्तिः । अत उपासनप्रकरणेषु **तद्गतिं** निरूपणप्रकारम**वकलय**–अवधाय जानीहि ॥ ३४ ॥

35 सर्ववेदसारोद्धारप्रवृत्तपरमर्षिप्रणीतपुराणादित एतद्वैशद्यम् । एतदस्वीकारे उपनिषत्पुराणेतिहासादिकं सर्वमप्रमाणं कृतं स्यात् । तथाच कृत्स्नवेदाप्रामाण्यमेवाऽऽपतेदिति भावेनाह **निगमेति** । **निदानम्** आदिकारणम् । प्रथमतो वेदशतमूलमुत्पन्नैः इतिहासैः धर्मशास्त्रैः पुराणैरपि देवताविग्रहादिकं स्फुटतरं गदितमस्ति । **तत्** तस्मात् अयममरवर्गः **तत्फलार्थी** मोक्षरूपफलकामनायुक्तः **समर्थः** ज्ञान.शक्ति.शास्त्रसंमतिरूपसामर्थ्यत्रयवांश्च । अतः **अस्य** अमरवर्गस्य **अनन्तोपासने** परमात्मविषयकोपासने अधिकारोऽस्त्येव । तृतीयपादवाक्यस्य चतुर्थपादानन्तरमेवानुसंधेयत्वात् **अस्येति** प्रथमं प्रयोगो नानुचितः । **अस्याधिकार** इत्यत्र **साधिकार** इति पाठो वा । तदोत्तरार्धमेकमेव वाक्यम् ॥३५॥

---

*யாகில் தேவதை எப்படிதான் புத்திக்கு கோசரமாகும் ஆகையால் மந்த்ரப் பொருளை யிசையவேணும். (33)*

*34. மேலும், வேதங்களில் முடிவான பாகத்தில் தேவர் மனுஷ்யர், திர்யக்கு, தாவரமென்ற நாலுவகையான ப்ரபஞ்சத்தின் பிறப்பைப் பிரித்துக் கூறுமிடங்களிலே தேவதைகளுக்கு உடல்கள் விரிவாகப் பலவிதமாக ஓதப் பட்டிருக்கின்றன. அங்குச் சொன்ன அவற்றின் உபாஸன முறைகளிலும் அவற்றிற்கு உபயோகமுண்டு. ஆதலால் வேதாந்தமூலமாகவும் இசைய வேணும் (34)*

*35. பற்பல வேதங்களை மூலமாகக்கொண்ட இதிஹாஸ, புராண. தர்ம சாஸ்த்ரங்களாலும் தேவதைகளுக்கு உடல் முதலானவை வெகு ஸ்பஷ்டமாக உரைக்கப்பெற்றன. ஆகையால் இந்த தேவகணமானது மோக்ஷாதி*

अपि गदितमनन्तोपासनेस्याधिकारः (साधिकारः?)तदयममरवर्गस्तत्फलार्थी समर्थः ॥

**अत्रैवाधिकरणे**—संस्थानं कलयाऽऽकृतिं त्वनुगतं तावत् प्रतीमो हि तत्र
भ्रमश्चापरमप्यदर्शि न तथा ; पक्षान्तरे जातिषु ।

---

36 आरम्भे चतुस्सूत्र्यधिकरणानि विशिष्य निर्दिष्टवताऽप्याचार्येण पश्चादधिकरणनिर्देशो नाकारि ; विषयत एवाधिकरणनाम विज्ञास्यत इति । ततो देवताविचारादेव देवताधिकरणमिति सुज्ञानमिति प्राक् तदनुक्तवतैवाथ संस्थानविचारप्रवत्तेन तदधिकरणं स्पष्टं नावगम्येतेति कृत्वा **तत्रैवाधिकरण** इति विशिष्यालेखि । अन्यथाऽऽकृतिसंस्थानविचारस्य श्रीभाष्ये जिज्ञासाधिकरण एव भेदनिरासघट्टे कृतत्वात् अत्रापि ग्रन्थे तत्रैव कार्योऽयम्, नात्रेति शंका स्यात् । अत एतदुक्तिः । अत्र सूत्रकारेण ज्ञापितमेव प्रमेयं तत्र भाष्यकारैरद्वैतिनिरासावसरे तार्किकादिनिरसनाय व्युदपादि । अत्र हि—इन्द्रादीनां विग्रहवत्त्वे विग्रहस्योत्पद्यमानतया वेदस्यानित्यार्थसंयोगःस्यादित्याशंकायम्, इन्द्रव्यक्तीनामनेकत्वात् तावद्वर्तिजाति-वाचित्वमिन्द्रादिपदस्य, जातिश्च नित्यैवेति समाधाने कार्ये, सूत्रे **समाननामरूपत्वा**दिति संस्थान-वाचिरूपपदप्रयोगः संस्थानातिरिक्तजातिनिरासार्थः, तेन जैमिनिसूत्रे आकृत्यधिकरणे आकृतिपदस्य नित्यजातिपरतयाऽर्वाचीनमीमांसककृतं व्याख्यानमनादेयमिति ज्ञाप्यते । तदत्र प्रतिपादयाम इत्यभिप्रेत्य **अत्रैवाधिकरणे** इत्युक्तमिति भावः । अद्वैतिनां ब्रह्मातिरिक्तनित्यपदार्थाभावात् एकविज्ञानविज्ञेयत्वाच्च सर्वस्य, नित्या जातिर्नास्त्येवेति संस्थानमेव जातिः । संस्थानातिरिक्तजातिवादस्तार्किकमीमांसककृतः । स निरस्यतेऽत्र चतुर्भिः पदैः । गौर्गौरित्यादिप्रतीतिरनुगतधर्मविषयिणी अनुवृत्तबुद्धित्वादित्यनुमाने सिद्धसाधनमनैकान्त्यश्चाह प्रथमेन । आकृतिं संस्थानं तु **कलय** जानीहि । नन्विदं वावय सिद्धसाधनम् ; "आकृतिर्जातिलिङ्गाख्या" इति न्यायसूत्रेणाकृतिर्जातिव्यञ्जिका, संस्थनव्यंग्या जातिरिति आकृतिपदेन संस्थानस्यैव कथनात् । अत आकृतिपदं विहाय जातिपदमत्र प्रयोक्तव्यमिति चेन्न-मीमांसकनिरासार्थत्वात् । जैमनिसूत्रे 'आकृतिस्तु क्रियार्थत्वात्' इत्याकृत्यधिकरणसूत्रे आकृतिपदेन जातिं ते गृह्णन्ति ।

---

*பலனை யபேக்ஷிப்பதும் ஞ்ஞான சக்த்யாதி ஸாமர்த்தியமுடையது மாகிறபடியால் பகவானின் உபாஸனத்தில் அதிகாரம் உடையதேயாகும். (35)*

*36. இந்த்ராதி சப்தங்கள் ஒவ்வொரு அநித்ய வ்யக்தியைச் சொல்பவையல்ல; அந்தந்த ஸம்ஸ்த்தானத்தைச் சொல்பவை என்பது ஸித்தாந்தம். புதுமீமாம்ஸகர் **ஆக்ருதி** யென்னப்படும். ஜாதியே சப்தத்திற்குப் பொருள், ஸம்ஸ்தானமன்று என்கின்றனர். அது தவறென்கிறார் - ஜைமினி ஸூத்ரத்திலும் **ஆக்ருதி** என்றதை ஸம்ஸ்தானமாகவே கொள்க. அதையே ஒரேவிதமான வ்யக்திகளில் தொடர்ந்ததாகக் காண்கிறோம். வேறாக ஜாதியென்பது காணப்படவில்லை. கேள்வி—ஒவ்வொரு கோவுக்கும் உருவமைப்பு வெவ்வேறாயிருப்பதால் **கோத்வம்** என்கிற ஒரேவிதமான*

गोत्वाश्वत्वपुरस्सरीषु धिषणा बह्वीषु साधारणी

तन्मते तदधिकरणं जातिशक्तिस्थापकम्। शब्दानां व्यक्तौ शक्तिः जातौ वेति विचारे व्यक्तिशक्ति-स्वीकारे व्यक्तीनामानन्त्यात् शक्त्यानन्त्यापत्तिः, व्यक्तीनामनित्यत्वात् वेदे अनित्यार्थसंयोगरूपदोष-श्चेति जातावेव शक्तिस्तदिषिता। जात्या व्यक्तिराक्षिप्यते, न तु साक्षादुच्यत इति न शक्त्यानन्त्यमिति। यदि आकृतिपदं संस्थानपरं स्यात्, संस्थानस्यापि प्रतिव्यक्ति भिन्नत्वेनानन्त्यस्यानित्यत्वस्य चाविशेषात् नोक्तदोषपरिहार इति तदाशयः। तत्रोच्यते—जैमिनिः आकृतिपदेन तार्किकवत् संस्थानमेव मन्यते। नातिरिक्तजातिम्। शब्दानाञ्च न जातिमात्रवाचिता, न वा विशेषणमात्रवाचिता। संस्थानविशिष्ट-व्यक्तिशक्तिस्थापनमेवाकृत्यधिकरणकार्यम्। **शाबरादिदुष्टव्याख्यानरीतिनिरासोऽस्मत्सिद्धान्ताभिमत** आकृत्यधिकरणसूत्रार्थश्चास्मदीयायामुपयुक्तमीमांसायां द्रष्टव्यः। अतो जैमिनिसूत्रस्थाकृतिपदाभिप्राये-णात्राऽऽकृतिपदप्रयोगः। न चैवमनित्यार्थसंयोगरूपदोषप्रसक्तिः। संस्थानस्य व्यक्तेश्च विनाशित्वेऽपि प्रवाहनित्यत्वेनैवानित्यार्थसंयोगरूपदोषपरिहारात्। अनेकशक्तिकल्पनदोषोऽपि न। **उदयनाचार्यैः न्यायकुसुमाञ्जलौ** (2) शक्त्याधारगोशब्दरूपव्यक्तीनामानन्त्येऽपि यथा शक्तेरेकता, तथा शक्तिवि-षयभूतगोरूपार्थानन्त्येऽपि तदेकतेत्यैक्यस्य स्थापितत्वात्। न हि गोशब्दत्वमिति काचिज्जातिस्तार्किकादीष्टा; गकारोत्तर ओकारत्वरूपगोशब्दत्वघटकोत्तरत्वरूपधर्मस्य प्रतिव्यक्ति भिन्नत्वात्। संस्थानत्वस्यानुगतत्वञ्च गोशब्दत्वस्येव मन्तव्यम्। संस्थानं नाम स्वासाधारणधर्मः। समित्येकीकारे। एकीभूय स्थितिः तन्तु-रूपावयवानां पटरूपेणैकीभूय स्थितिः; तन्तूनां मिथः संश्लेष इति यावत्। अतः सावयवेषु अवयव-संयोगविशेष एव संस्थानम्। निरवयवे तु अन्यविधोऽसाधारणधर्मः। स्वासाधारण इत्यस्य समभि-व्याहृतपदबोध्ययावदर्थवृत्तिस्तदन्यावृत्तिर्धर्म इत्यर्थः। घटस्य संस्थानमिति प्रयोगे समभिव्याहृतं घट-पदम्। एवमन्यत्रापि। प्रतिघटमवयवव्यक्तीनामन्यत्वात् तत्संयोगोऽपि भिन्न एव। अथापि सौसा-दृश्यात् अनुगतत्वं मन्तव्यम्। तदाह 'अनुगतं तावत् प्रतीमो हि तत्' इति। **ताव**दित्यवधारणे। **तत्** संस्थानमनुगतत्वेनैव जानीमः। इयं सास्नादिमती, इयमपि सास्नादिमतीति अनुगतबुद्धिदर्शनात्, **ब्रूमः**=अनुगतमित्येव व्यवहरामश्च। तथा प्रतीत्यभावे तथा व्यवहारः कथम्। ननु संस्थानातिरिक्तं नित्यमेकमनेकानुगतं सामान्यमादायानुगतप्रतीतिनिर्वाहे सुकरे किमिति सौसादृश्यमादाय कथञ्चिदनु-गमकल्पनक्लेशः इत्यत्राह **अपरमप्यदर्शि न तथेति**। अनुभवसिद्धं संस्थानं सौसादृश्यञ्च नापलप्यम्। एतद्वत् संस्थानातिरिक्तत्वेन जातेः प्रत्यक्षसिद्धत्वे तथा निर्वाहः स्यात्। न हि **तथा** अनुगतत्वेन किञ्चित् दृश्यते। न हि कश्चित् लौकिकः तत्रत्यं गोत्वमत्राप्यस्तीति विलक्षणमनुभवति। अस्ति चेत् प्रत्यक्षम्, किमेतेनानुमानेन? कल्पकानुमानस्यात्र दूषणात् कल्पनमपि न भवति। एवं सिद्धसाधनमुक्तम्।

---

புத்தியும் பேச்சும் அதைக் கொள்ளுமா என்று. விடை - கோத்வம் - அச்வத்வம் மஹிஷத்வம் என்றாற்போன்ற எல்லா ஜாதிகளிலும் இது ஜாதி

**जातिर्जातिरितीदृशी फणितिरप्येवं मदीये पथि ॥ ३६ ॥**

**एका व्यक्तिषु भूयसीष्वनुगता पूर्णा प्रतिव्यक्ति या**

---

अनुवृत्तबुद्धित्वादिति हेतुरनेकान्तो विरुद्धश्च । तदाह **पक्षान्तर** इति । अतिरिक्तजातिवादेऽपि गोत्वाश्वत्वगजत्वादिषु इयं जातिः इयमपि जातिरित्यनुवृत्तबुद्धिरस्ति । तावज्जात्यनुगतं जात्यन्तरं तैर्न स्वीकृतम् । 'व्यक्तेरभेदस्तुल्यत्वं संकरोऽथानवस्थितिः । रूपहानिरसंबन्धः' इति जातिबाधकसंग्रहात् जातीनां जातिमत्त्वेऽनवस्थादोषः स्यादिति तत्त्यागात् । अत एकानुगतविषयकत्वरूपसाध्याभावेऽपि हेतु-सत्त्वात् व्यभिचारः । यद्वा तद्दृष्टान्तेनोक्तहेतुनैवैकानुगतधर्मविषयकत्वाभावस्यैव साधनात् विरुद्धता चेति । अतो यथा सा **धिषणा** बुद्धिः **फणितिः** व्यवहारश्च, एवमेव मदीये पथि संस्थानजातिपक्षेऽपि गवादिष्वपि धिषणाफणिती इति ॥

**गोत्वाश्वत्वपुरस्सरीषु** इत्यस्य जातिष्विति विशेष्यम् । 'पुरोग्रत' इति सूत्रात् टः । अत्र गोत्वाश्वत्वप्रभृतिष्वित्यत्रेव बहुव्रीहेरिष्टत्वे [अश्वत्वसमानाधिकरण–क्लीबपुरस्सरशब्दघटितस्योपसर्जनत्वात् बहुकुरुचरेत्यादाविव टाबेव स्यात् ; न ङीप् । तदा **गोत्वाश्वत्वपुरस्सरा**स्विति भाव्यम् । गोत्वाश्वत्वयोः पुरस्सरीषु **इति** तत्पुरुषे गोत्वाश्वत्वादिष्वित्यर्थालाभः ; गोत्वाद्यपेक्षया इतरजातीनां पूर्वोपस्थितत्वञ्च क्लिष्टम् ; **जातिष्वि**त्यनेन गोत्वाश्वत्वयोर्ग्रहणासंभवश्च । एतदपेक्षया **गोत्वाश्वत्वपुरस्करी**ष्विति युक्तम् । तत्पुरस्कारे तद्ग्रहणस्यापि जातिपदेन सिद्धेः । परंतु करोतेरपि कतिपयपदोत्तरस्यैव ट उक्तः । यद्वा गोत्वाश्वत्वे पुरस्सर्यश्चेति द्वन्द्वः । **पुरस्सरी** इत्यस्य पूर्वोपस्थितेत्यर्थे पर्यवसानम् । अथवा पुरस्सरी इत्यस्यान्तर्भावितण्यर्थकत्वस्वीकारेण पुरस्सारयन्तीत्यर्थः । गोत्वमश्वत्वञ्च पुरस्सरं कुर्वतीषु जाति-ष्वित्युक्तं भवति ॥ ३६ ॥

37 उक्त एवार्थे पूर्वपक्षांशमेकेन पद्येन सिद्धान्तांशञ्च द्वाभ्यां विवृणोति **एके**त्यादिना । **भूयसीषु** बहुतरासु गवादिव्यक्तिषु **अनुगता** अन्विता एका । ननु त्रित्वादिसंख्यावत् अस्या एकस्या अनेकस्थत्वे एकगोमात्रे त्रिस्त्र इति यथा न व्यवहारः तथा गौरिति न स्यात् । बहुवचनान्त एव च शब्दः स्यात् । तत्राह **प्रतिव्यक्ति पूर्णे**ति । प्रत्येकं गौरिति प्रयोगानुसारेण जातेः प्रत्येकपर्याप्तिरिष्यत इति भावः । ननु पर्याप्तिः परिसमाप्तिः । सा यद्येकत्रैव, तर्हि अन्यत्र जातिर्न स्यादिति चेन्न ; अन्यत्रावर्तमानत्वं परि-समाप्तिरित्यनुक्तेः, इतरनिरपेक्षविशेषणत्वार्हत्वमेव परिसमाप्तिः । नेयं संस्थानरूपा, एकत्वात् उत्पत्ति-

---

*இதுவும் ஜாதியென்று புத்தியும் பேச்சும் உண்டே. அங்கு நீங்கள் ஜாதித்வ மென்ற ஒரு தர்மத்தை யிசையவில்லையே. அங்கென்ன கதி—அதுவே இங்கும்.*

*37. ஜாதிகள் நித்யமான தனிப் பதார்த்தமென்னும் தார்க்கிகர் சொல்வதாவது—ஒன்றாய், பல வ்யக்திகளிலும் தொடர்ந்திருப்பதாய், ஒவ்வொன்றிலும் நிறைந்ததாய், ஸம்ஸ்த்தானமென்கிற உருவமைப்பைவிட வேறாய்,*

संस्थानादपरा निरादिनिधना सा जातिरास्थीयताम् ।
गौर्गौरित्यनुवृत्तबुद्धिवचसी नो चेद् घटेते कथम् ?
व्युत्पत्तिश्च कथं गवादिवचसां व्यक्तिष्वसंख्यासु नः ॥ ३७ ॥
अत्र ब्रूमः प्रतीमः किमपि किमपरं वस्तु सास्नादिमत्त्वात्

---

विनाशरहितत्वाच्चेत्याह **स**मिति । **आदिः** आरम्भः उत्पत्तिः **निधनं** नाशः ते उभे निष्क्रान्ते यतः सा । इदमेव नित्यमेकमनेकानुगतं सामान्यमिति निरुक्तं तार्किकैः । **आस्थीयताम्** स्वीक्रियताम् । एतदस्वीकारे दण्डमाह **गौ**रिति । इयं गौरित्येकत्र, पश्चात् सर्वत्र इयमपि गौरिति च अनुवृत्तबुद्धिरस्ति । बुद्धेरनुवृत्तत्वं समानाकारत्वम्, **वचसः** शब्दप्रयोगस्याप्यनुवृत्तत्वं तदेव । **नो चेत्**—नित्यैकजातिर्नास्ति चेत्, इमे द्वे कथं निरुह्येयातामिति । गवादिशब्दाः तादृशजातिवाचिनः एकशक्तिमत्त्वात् । शक्तेरेकता च सति अर्थस्यैकत्वे स्यात् । व्यक्तेरनेकत्वात् एकव्यक्तिमात्रे शक्तौ अन्यत्र व्यक्तौ न प्रयोगः स्यात् । सर्वत्र शक्तौ शक्त्यानन्त्यं स्यात् । तदापि एकशक्तिग्रहणे अन्यशक्तिविषये व्युत्पत्तिर्न जाता स्यात् । तत्र मीमांसका जातिमात्रे शक्तिवादिनः, तार्किकाः जात्यवच्छिन्नव्यक्तिष्वेकशक्तिवादिन इति भेदः । **सर्वथा** जातिरेष्टव्या । ननु गोर्नाशे तत्र स्थिता जातिः कुत्रास्तीति चेत्—अन्यत्र गवि । प्रलये कुत्रास्ति ? न कुत्रापि । कथं जातेर्धर्मस्य निराधारत्वम् ॥ न ; कालिकसंबन्धेन कालाधारकत्वात् । समवायसंबन्धेन तु सर्वगोव्यक्तिसंबन्धार्हतया प्रतिव्यक्तिपूर्णतया गोभिन्नावृत्तितया च धर्मिग्राहकमानेन तत्सिद्धिरिष्यत इत्यलम् इति पूर्वपक्षप्रतिपादकं पद्यम् ॥ ३७ ॥

38 **अत्रे**ति । अस्मिन् पूर्वपक्षे प्रत्युत्तरमेवं ब्रूमः—गौर्गौरिति बुद्धिशब्दपक्षकानुमाने साध्यं अनुगतधर्ममात्रविषयकत्वं वा संस्थानातिरिक्तनित्यैकानुगतधर्मविषयकत्वं वा । सास्नादिमत्त्वादपरं अनुवृत्तबुद्धिप्रयोगविषयत्वरूपहेतुसाध्यं गोत्वाख्यं वस्तु किञ्चित् **न प्रतीमः**=नानुमानात् पूर्वं प्रत्यक्षेण

---

*ஆரம்பம் அழிவு இரண்டு மில்லாதது மாகிறது எது, அது ஜாதியென்று கொள்ள வேண்டும். இல்லையாகில், இது கோ, இதுவும் கோ என்று தொடர்ச்சியான புத்தியும் தொடர்ச்சியான பேச்சும் எங்ஙனே கூடும். (வெவ்வேறான ஸம்ஸ்த்தானத்திற்குத் தொடர்ச்சி எது?) மேலும் **கோ என்ற** சொல்லுக்கு இன்னது பொருள் என்ற அறிவு வ்யுத்பத்தியாகும். எது பொருள்? மாடுகளே யென்னில், அவை பல பலவாகையாலே அவற்றில் எது பொருள். ஒன்றைப் பொருளென்றால் மற்றொன்றை அச் சொல்லால் சொல்லவாகாது. எல்லாம் பொருளென்றால், பொருள் பலவாகையால் சக்தியும் பலவாகும். தனியாக ஜாதியை யிசைந்தால், அது ஒன்று. அதில் சக்தியும் ஒன்றென்று கூறவியலும் என்றவாறு. (37)*

**गोत्वं नामानुवृत्ति(त्त)व्यवहृतिविषयम् ; तद्धि तादृक्षमैक्षि ।**
**गोत्वाजत्वाश्वतादिष्वनुगतमपरं वस्तु जातिष्वनेका-**
**स्वेकं जात्यादिशब्दव्यवहृतिघटकं जातिवादे किमूचे ॥ ३८ ॥**
**अन्यस्यादर्शनेन, व्यवहृतिघटनस्यान्यथैवोपपत्त्या**
**कल्प्यत्वासंभवेनाप्युभयसमयसंगीतसंस्थावलम्बी ।**

---

पश्यामः ; नाप्यनुमानप्रयोगे साध्यबाचकपदात् गृह्णीमः । अनुगतधर्मविषयेति सामान्यत एव प्रयोगात् ; **तद्धि**—सास्नादिमत्त्वमेव **तादृक्षम्** अनुगतरूपम् **ऐक्षि** प्रत्यक्षदृष्टमस्ति । अतस्तदेव साध्यपदेन गृह्येत । न विशेषरूपेण । **गोत्वे**ति । गोत्वजातिरजत्वं जातिरश्वत्वं जातिरिति सर्वासु जातिषु जातिरित्यनुवृत्तबुद्धि-प्रयोगोभयविषयत्वमस्ति । तत्र जातित्वरूपजातिर्युष्माभिः **जातिवादे** जातिस्थापनग्रन्थे किमुदिता ; प्रत्युत नास्तीत्येवोक्तम् । अतोऽनेकान्तो बिरुद्धता च हेतोरिति भावः ॥ ३८ ॥

39 **व्युत्पत्तिश्च कथ**मिति यदुक्तम्—तत्राह **अन्यस्ये**ति । संस्थानातिरिक्ततया जातेः प्रत्यक्षा-भावात् कल्पनायोगाच्चेति हेतुद्वयम् । द्वितीयहेतुसाधकहेतुः **अन्यथैवोपपत्त्ये**ति । उभयोः **समययोः**= वादिप्रतिवादिपक्षयोः **संगीताम**विगीतां निर्विवादसिद्धां **संस्थां** संस्थानमेवा**वलम्बते**=विषयीकरोति वाच्य-तया स्वीकरोति **जाति**शब्दः । गवादिशब्दश्च वाच्यतावच्छेदकतया संस्थामेवावलम्बते । **अवलम्बी युक्तः**

---

38. இதற்கு மறுப்புக்கூறுவம்—கோவைக் காணும்போது அதன் கழுத்துச் சதை முதலான உருவமைப்பு நீங்கலாக வேறு கோத்வமெனப்படும் ஒரு தனி வஸ்துவை தொடர்ச்சியான **गौः गौः** என்ற பேச்சுக்கு விஷய மாகக் காண்கிறோமா. உருவமைப்புதானே தொடர்ந்ததாகக் காணவாகி றது. ஒரேவிதமான புத்தியோ பேச்சோ ஒரு நித்யமான தர்மமிராவிடில் கூடாதென்னில், கோத்வம், அச்வத்வம், மஹிஷத்வம் என்றுற்போன்ற எல்லா ஜாதிகளில் இது ஜாதி, இதுவும் ஜாதி, இதுவும் ஜாதி என்று ஒரே விதமான புத்தியும் பேச்சும் கொண்டிருக்கிறீர்களே, அங்கெல்லாம் ஜாதித் வமென்றொரு நித்யமான ஜாதியை இசைந்தீர்களா? அந்த புத்தியையும் பேச்சையும் நிர்வஹிக்க அது வேண்டுமே. அங்கே அது இல்லாமலே நிர்வாஹம் கூடுமாகில், இங்குமப்படியே யாகுக. (38)

39. ஆகையால் வேறொரு தர்மத்தைக் காணாமையால், பேச்சின் நிர்வாஹம் வேறுவிதம் கூடுகிறபோது கல்பிக்கவும் காரணமில்லையாகையால், ஜாதி, ஸாமாந்யம் என்றுற்போன்ற சொல் இரு பக்ஷத்தினராலும் இசையப் பெற்ற ஸம்ஸ்த்தானத்தையே பொருளாகக் கொள்ளும், உருவமைப்பென்பது ஒவ்வொரு வ்யக்திக்கும் ஒவ்வொருவிதமாயிருப்பதால் ஒன்றாகாவாயினும்

युक्तो जात्यादिशब्दः सुसदृगिह मिथः सा ह्यनुस्यूतधीवा-
ग्व्युत्पत्त्यर्हैव ; यादृक् परसमयमतामाकृतिं सा व्यनक्ति ॥ ३९ ॥
अभावस्याभावो भवति खलु भावः परमते

अवलम्बित्वेनैव हेतुमान् भवितुमर्हति । जातिर्जातिरित्यनुगतप्रयोगोऽपि त्वदिष्टरूपजात्यतिरिक्तावलम्ब्येव त्वदिष्टः । संस्थायाः प्रतिव्यक्तिभिन्नायाः कथमनुगतत्वमित्यत्राह सुसदृगिति । इह संस्थायाः भिन्नत्वे सा संस्था मिथः परस्परं सौसादृश्यवत्येव हि यस्मात्, तस्मात् अनुवृत्तायाः धियः वाचः व्युत्पत्ति-रूपशक्तिग्रहणस्य चार्हैव । सौसादृश्यमादाय निर्वाहो भवताऽपि कार्य इत्याह यादृगिति । यादृक् यथा परसमये परमते मतां स्वीकृतां आकृतिशब्दवाच्यतया परेष्टां नित्यैकानुगतजातिं सा संस्था व्यनक्ति । संस्थानरूपव्यञ्जकबलात् तादृशजातिप्रत्यक्षं भवदिष्टम् । व्यञ्जकतावच्छेदकानुगतधर्माभावे कथं व्यञ्जकता । सौसादृश्यमात्रेण तन्निर्वाहे प्रत्यक्षहेतुत्वादिकमपि तावतैवास्तु । नियमेनैकबुद्ध्यारूढत्वादिति । किमिदं सौसादृश्यमिति चेत्, सप्तपदार्थवादिना तार्किकेण सादृश्यरूपं पदार्थान्तरमस्वीकृतवता आकृतिषु सौसादृश्यमिच्छता यादृशमंगीकृतम्, तादृशमेव । अतिरिक्तस्य सादृश्याख्यस्य धर्मस्य स्वीकार्यत्वेऽपि संस्थानातिरिक्तजातिकल्पना सर्वत्र तार्किकाद्यभिमता निराकृतैवेति किं तद्विचारेण ॥ ३९ ॥

40 एवं देवतासद्भावे स्थाप्यमाने वेदस्यानित्यार्थसंयोगरूपदोषशंकायां संस्थानरूपानुगताकृत्यवच्छिन्न-प्रवाहनित्यवस्तुवाचित्वान्न स दोष इत्युक्तम् । ननु जात्यस्वीकारेपि सौगतरीत्या अतद्व्यावृत्तिरूप-भेदात्मकैकधर्मावच्छिन्नवाचित्वमेवेन्द्रादिशब्दस्यास्तु ; किमनन्तसंस्थानानां वाच्यकोटिप्रवेशेनेति शंकायाम् भावातिरिक्तस्य कस्याप्यभावस्यास्वीकृततया स मार्गोऽपि हेय इति वक्तुमाह अभावस्येति । भावाति-रिक्तमभावं स्वीकृतवतां परेषां मते यो घटाभावस्याभावः सः घटरूपो भावपदार्थ एव । द्वितीयाभावः प्रथमाभावप्रतियोगिस्वरूपः, अन्यथाऽनेकाभावकल्पनायां गौरवादिति हि तदुक्तम् । एवं एतद्वत्

அவ்வமைப்புக்கள் நன்கு ஒத்திருப்பதால் தொடர்ச்சியான புத்திக்கும் பேச்சுக்கும் விஷயமாகலாம். ஜாதியை வேறாக இசைந்த பிறர் அதை எதுமூலமாயறிகிறார்கள். ஜாதி வெவ்வேறென்பது உருவமைப்பின் வேறுபாட்டாலென்பர். வ்யக்திதோறும் அது வேறாயிருப்பதால் அங்கெல்லாம் ஒரே ஜாதியை அது எப்படி காண்பிக்கும். ஒன்றோடொன்று நன்கு ஒத்திருந்தால் உருவமைப்பு ஜாதிபுத்திக்குக் காரணமென்னில், அதே தொடர்ச்சியான புத்திக்கும் பேச்சுக்கும் காரணமென்றே கூறிறலென்ன. எதற்கு வேறு ஜாதி. ஜாதிநிராஸமாயிற்று (39)

40. ஸம்ஸ்த்தானம் தவிர வேறு ஜாதியில்லை யென்றோம். ஸம்ஸ்த்தானமே அபாவ பதார்த்தமுமாகலாம். வேறாக அதைக் கொள்ள வேண்டா என்கிறோம். ஸம்ஸ்த்தானமானது அஸ்தி என்கிற புத்திக்கு விஷயமாகையால்

घटादेरप्येवं कथय किमभावो न भवति ।
घटस्य प्रध्वंसो भवति हि कपालत्वमपर-
स्त्वभावः पिण्डत्वं किमिह ददृशे किञ्चिदपरम् ॥ ४० ॥

---

**घटादेरभावोऽपि** प्रथमाभावोऽपि किं भाव एव न भवति, कथय । एवं घटाभावाभावो घटरूपभाव एवेति कथनं प्रथमाभावपदेन घटभेदातिरिक्ताभावग्रहणे । घटभेदग्रहणे तु घटभेदाभावः न घटः ; भेदाभाव भेदप्रतियोगितावच्छेदकधर्मस्वरूपत्वात् । किंतु घटत्वरूपः । अथापि परमते भाव एवेत्युक्तं घटत एव । घटत्व-रूपभाव एवेत्यर्थात् । तद्वत् घटभेदोऽपि पटत्वादिधर्म एवास्तु, किमतिरिक्तान्योन्याभावकल्पनेन । एवं घटाभावा-भावः घटप्रागभावध्वंसरूपः भवन्मते यथा, घट एव घटध्वंसप्रागभावरूपोऽपि घट एव—एवं घटप्रागभावो घटध्वंसोऽपि च भाव एवास्त्वित्यप्यर्थः । अत्र श्लोकद्वये भेदरूपाभावविषये उपरि विवरणाभावात् प्रथमपादेऽपि तदग्रहणे न्यूनता स्यादिति प्रथमपादस्य भेदपरत्वमवश्यं वक्तव्यम् । संस्थानातिरिक्तजात्यस्वी-कारवत् संस्थानातिरिक्तभेदोऽपि नेष्यत इति भाष्योक्तस्यार्थस्य तत्रोक्त्वादेव विशिष्यानुपपादनेऽपि क्रोडीकार आवश्यक एव । चतुर्विधेष्वभावेषु भेदस्य भावान्तर्भावेऽपि अन्येषां प्रागभावादीनां पार्थक्य-मावश्यकमिति शंकायां तदुपपादनमुत्तरार्धादित इति संगत्यर्थमपि पूर्वार्धं पूर्वप्रकृतसंस्थानरूपभेदविषयकमपीति युक्तम् । अतो न ग्रन्थन्यूनतेति । अथ ध्वंसं प्रागभावञ्च भावं समर्थयत उत्तरार्धेन । अत्यन्ताभावमपि भावं समर्थयितुमुत्तरश्लोकः । घटो न भवतीत्यत्र यदा ध्वंसग्रहणम् , तदा घटो नानाकपालरूपेण भग्न इति दृष्टम् । अतः कपालत्वरूपधर्मो घटध्वंसः । घटोत्पत्तेरव्यवहितप्राक्क्षणे, घटो भविष्यति, न तु भवति इति अभावप्रतीतिर्भवति । सोऽभावः प्राक् स्थितत्वात् प्रागभावः । स च तदा यो धर्मोऽस्ति तद्रूपः । मृदि घटत्वावस्थोत्पत्तिप्राक्काले च पिण्डत्वमेवास्तीति पिण्डत्वमेव तत्प्रागभावः । एतदपेक्षया अपरम् अतिरिक्तमभावरूपं न कदापि केनापि ददृशे । अतो दृश्यमानधर्मत एव व्यवहारनिर्वाहः । कपाले नाशितेऽपि घटध्वंसोऽस्ति ; तत्र कपालत्वरूपता कथमिति चेत्—घटत्वावस्थातः पश्चात् तद्द्रव्ये या याऽवस्था जायते कपालत्वचूर्णत्वरजस्त्वाणुत्वरूपा, सा सर्वापि घटध्वंसरूपेति तात्पर्यम् । एवं घटप्रागभावोऽपि घटत्वावस्थातः प्राक् तद्द्रव्यस्थितपिण्डत्वचूर्णत्वलोष्टत्वादिरूपः सर्वोऽपि हि धर्मः घटप्रागभाव इष्ट इति ॥ ४० ॥

---

भाव பதார்த்தம். अभावமென்பது 'நாஸ்தி' என்னும் புத்தியில் விஷயமாகும் ஆக अभावம் भावமாகாதென்னில், நீங்களே, घटाभावो नास्ति என்று தோன்றும் घटाभावाभावமாவதென்ன என்கிறபோது அது घटமேதான், வேறில்லை யென் கிறீர்கள் अभावம் भावமாகுமா. ஆறுலென்ன? வேறு எதற்காகக் கல்பிப்ப தென்னில், முதல் अभावம்கூட ஒரு भावவஸ்துவாகக் கூடுமாகில், அதுகூட வேறு வேண்டாவே என்போம். घटाभावமாவது எந்த भाव பதார்த்தமாகு மென்னில், घटाभावமென்பதற்கு घटभेदமென்று பொருளாகில் இது என்

संसर्गाभावमेवं विदुरिह सुधियो भावमेव त्वभावं
मन्वानाः ; कुम्भवद्भूतलत इतरभूभागभेदस्त्वभावः ।

---

41 नन्विदमस्तु सुनिर्वहम् । घटसंसर्गाभावस्त्वन्यः कीदृशभावरूपः स्यात् । भूतले घट नास्तीति प्रतीतो घटाभावः न घटभेदः ; भूतले घटभेदस्य घटसत्ताकालेऽपि सत्त्वात् तदा घटो नास्तीत्यप्रत्ययात् । नापि घटस्य ध्वंसः प्रागभावो वा । तयोः प्रतियोगिभूतघटोपादाननिष्ठताया एवेष्टत्वात् भूतले तदयोगात् । न च भूतलमेव घटाभावः ; भूतलस्य भूतलवर्तित्वायोगात् । नापि भूतलत्वम्, तस्य घटकालेऽपि सत्त्वेन तदापि घटो नास्तीति प्रतीतिप्रसंगात् । नापि घटासंबन्धविशिष्टभूतलत्वम् ; असंबन्धस्याभावरूपतया तदनिरूपणे एतन्निरूपणायोगादित्यत्राह **संसर्गे**ति । **सुधियः** विवेचनकुशलाः अभावं सर्वं भावमेव मन्वानाः **इह**=अभावेषु संसर्गाभावं तु एवं विदुरित्यन्वयः । तुशब्देन सुखनिर्वाह्यत्वाभावरूपं वैलक्षण्यमत्र ज्ञाप्यते । **एव**मित्यस्य वक्ष्यमाणभावरूपेणेत्यर्थः । यद्वा एवमित्यस्य **पूर्वोक्त**ध्वंसप्रागभावरूपेणेत्यर्थः । ध्वंसप्रागभावयोर्भावरूपत्वं प्रागेवोक्तम् । संसर्गाभावश्च ध्वंसप्रागभावरूपत्वात् तथेति भावः । तदयमर्थः—"नास्ति घटो गेह इति घटे गेहसंसर्गप्रतिषेधः" (वै. द.9-1-10) इति सूत्रेण, "घटाभाव इत्यस्य घटसंयोगाभाव इत्यर्थः । भूतले घटसंयोगसंभवात् तत्र तदभावः संयोगप्रागभावरूपो वा संयोगध्वंसरूपो वा भवति ; न त्वयमत्यन्ताभावस्तदन्यः" इति कथितम् । तेन ध्वंसादिरूपत्वे सिद्धे भावरूपत्वमप्यस्मद्रीत्या भवतीति । **संसर्गाभाव** इति प्रयोगः गेहसंसर्गप्रतिषेध इति सौत्रपदसूचनाय । अथ घटसंसर्गप्रतियोगिकत्वं विहाय घटप्रतियोगिकत्वमेव स्वीकृत्य निर्वहति **कुम्भे**ति पूर्वार्धशेषेण । **भेदः** विशेषः घटवत् यत् भूतलम्, तद्भिन्नः भूप्रदेशविशेष एवाभाव इत्यर्थः । घटवति भूतले घटो नास्तीति प्रतीतिर्न भवति ; भूतलान्तरस्य तत्र विषयत्वायोगादिति । ननु कुम्भवदित्यादेरेवमर्थः प्रतीयते—घटाधिकरणभूतलादितरो **भूभागभेदः** भूप्रदेशविशेषः । गृहे

---

உளது. **पट**த்தில் உளதென்னில், அந்த **पट**த்தில் உள்ள **पटत्व**மென்ற தர்மமே அதுவாகும். **पट**த்வமாவது ஒருவிதமான உருவமைப்பென்னும் ஸம்ஸ்த் தானமே. அதே **भेद**மென்கிற அபாவம் இதுபோல் **घटध्वंस** மென்கிற **घटाभाव**த்தை அச்சொல் கூறுவதாலல் அது ஓடுமுதலான உருவமைப்பாகும். **घट प्रागभाव**ம் =குடமுண்டாவதற்குமுன் உள்ள **अभाव**ம் பொருளென்னில், குடமுண்டாவதற்கு முன்னிருந்த வடிவமான பிண்டாகாரமே அதாகும். இதைவிட வேறு **अभाव**மென்பது காணப்படவில்லையே (40)

41. ஆயினும், **घटो नास्ति** என்னும் **अत्यन्ताभाव**மென்கிற **संसर्गाभाव**ம் **भाव** பதார்த்தமாகாதே என்னில்? **भाव**மே **अभाव**மென்போர் அதையும் இவ்வாறு கொள்வர்—**घटाभाव**மாவது குடமுள்ள பூப்ரதேசத்தைவிட வேறான பூமிப்ர தேசம். குடமிருந்தவிடத்திலேயே ஒரு ஸமயம் குடமில்லையென்று கூற

**यस्तत्तत्कालभेदव्यतिकरितगृहप्राङ्गणादिप्रदेशः**
**कुम्भाभावाश्रयोऽन्यैरगणि स इह नः क्वाधिकस्योपलम्भः ॥ ४१ ॥**

वेद्यां घटोऽस्ति चेत्, वेदिभिन्नापवरकादिः घटानधिकरणदेशो भवति । स एवाभाव इति चेत्—तावता अपवरकादौ घटाभावव्यवहारनिर्वाहः स्यात् । घटवत्यां वेद्यां कदाचित् घटापसरणे घटो नास्तीति व्यवहारो जायमानः कथं निरुह्येत । अपवरकादिदेशरूपाभावस्य तत्राविषयत्वादित्यत्राह **य** इति । वेद्यां यस्मिन् यस्मिन् काले घटो भवति, तद्भिन्नकालः **तत्तत्कालभेद**शब्दार्थः । तेन **व्यतिकरितः** तदवच्छिन्नः गृहस्य यः **प्राङ्गणादिप्रदेशः** चत्वरादिरूपो भागः पूर्वं घटाधिकरणतया स्थितोऽपि, सोऽप्यभावाश्रय एवेति । इदमुक्तं भवति—कुम्भवद्भूतलेतरभूप्रदेश इत्यत्र मतुप्प्रत्ययेन वर्तमानकालसंबन्धबोधनात् देशे वृत्तौ कालस्य, काले वृत्तौ देशस्य चावच्छेदकत्वात् तत्कालावच्छिन्नघटाधिकरणताकदेशभिन्नदेशः इत्यर्थे सति तस्य घट-तद्भूतलसंसर्गकालभिन्नकालावच्छिन्नभूतलं घटाभावाश्रयः इत्यर्थे पर्यवसानम् । कदाचित् घटयुक्तमपि भूतलमन्यदा निरुक्तभूतलं भवत्येव । एवं दशाभेदेऽपि । बाल्ये विधिनिषेधवश्यता नास्तीत्युक्तौ विधिवश्यतावच्छेदकदशाभिन्नदशावच्छिन्नः स पुरुषोपि वश्यत्वाभावाश्रयो भवतीति । **क्वाधिकस्योपलम्भः**=एतदतिरिक्तोऽभावः क्वापि नोपलभ्यत इति । नन्वीदृशभूतलमेवाभावश्चेत्, भूतले इदं नास्तीत्यत्राधिकरणं किम् आधेयं किमिति चेत्—अधिकरणात्मकोऽभाव इति वदन् मीमांसकः पृच्छ्यताम् । वयं त्वेवं ब्रूमः । अतिरिक्ताभाववादिना कालविशेषावच्छिन्नभूतलमभावाधिकरणमित्युक्तम् । अस्माभिस्तु भूतलत्वेन भूतलमधिकरणम् । तत्रत्यो घटाभावश्च घटाधिकरणकालभिन्नकालावच्छिन्नभूप्रदेशः । अवयविनि भूतले अवयवात्मकोऽभावोऽस्तीत्याधाराधेयभावनिर्वाहः । भिन्नकालावच्छिन्नतद्भागवत्त्वं भिन्नकाल एव भवितुमर्हति, न घटवत्ताकाले । सावयवत्वात् भूतलस्यैवं निर्वाहः कृतः । यथायथं तत्रत्यधर्मविशेषोपि भिन्नकालावच्छिन्नः तत्राभावत्वेन ग्राह्यः । अतस्तदाश्रयत्वमक्षतमित्याशयः ॥ ननु संसर्गाभावपदेनान्योन्याभावभिन्नसर्वाभावग्रहणं तार्किकेष्टम् । कथमत्रात्यन्ताभावमात्रे तदुक्तिरिति चेत्—उच्यते । संसर्गो नाम संबन्धः । स चैकानुयोगिकः अपरप्रतियोगिकश्च

---

*வேண்டுமே. அது வேறு பூமிப்ரதேசமாகுமோ என்னில்-ஆகும்-உங்களையே கேட்போம். **अभाव**ம் வேறென்கிறீர்களே அது எங்கே யிருக்கிறது. பூப்ர தேசத்தில் என்னில். குடமுள்ளபோதும் அது இருக்கின்றதே. வேறெங்கும் போகவில்லையே. நித்யமான **अभाव**மாயிற்றே. அப்போது **घटो नास्ति** என்பரா. இனி குடமிருக்கும் காலவளவைவிட-வேறான காலவளவுடன் கூடிய பூமிப்ரதேச நிலையே ஆதாரமாகைக்கு நியாமகமான தர்மமென்பீர்கள். அந்த நிலையைத் தான் **अभाव**மென்கிறதென்போம். வேறு **अभाव**ம் காண வில்லையே. இப்படி எல்லா **अभाव**மும் ஸம்ஸ்த்தானம் முதலான **भाव** பதார்த்தமே யென்றதாயிற்று.*

वस्तुद्वयाभावे स दुर्वचः । अत एवाभेदो नाम न कश्चित् संबन्धः । लोके च नीलो घट इत्यादिप्रत्यक्षे अभेदभानं न भवति । नीलत्वघटत्वादेः प्रकारतया द्रव्यस्य च विशेष्यतया भानमेवानुभविकम् । अत एव तत्त्वचिन्तामण्यवयवग्रन्थे **दीधितौ**, पर्वतो वह्निमानिति प्रत्यक्षे नाभेदभानम्, किंतु वह्नि-मात्रस्य संयोगेन प्रकारता । शब्दप्रयोगे तु नामार्थयोरभेदान्वय इति अभेदः संबन्धो भवतीत्युक्तं **शिरोमणिना** । **श्रीभाष्ये** तु नीलो घट इति शब्दप्रयोगेऽपि नैल्यघटत्वोभयविशिष्टद्रव्यबोध एव, नाभेदभानमिति अरुणाधिकरणशिक्षणस्थलेऽभिप्रेतमिति सुवचम् । अतो भेदसंबन्ध एव मुख्यः संसर्गः । स च संसर्गः ध्वंसप्रागभावयोरत्यन्ताभावे च प्रतियोगिनः सुवचः । घटस्य कपाले समवायः संसर्गः । तेन संबन्धेन तत्र वृत्त्यर्हस्य यदा तत्राभावः, तदा स ध्वंसः प्रागभावो वा । संयोगादि-संबन्धान्तरेण घटवत्त्वार्हे भूतलादौ तदभावोऽत्यन्ताभावः । तथाच प्रतियोगिसंसर्गशंकापरिहाराय कथ्यमा-नोऽभावः संसर्गाभावः । एवमपि ध्वंसप्रागभावयोः संसर्गावच्छिन्नप्रतियोगिताकत्वं तार्किकैर्नेष्यते । तयोः प्रतियोगिसमवायिदेशमात्रवर्तित्वात् समवायावच्छिन्नप्रतियोगिताकत्वमेव वक्तव्यम् । तर्हि भूतले समवायेन घटो नास्तीति प्रतीतावपि ध्वंसभानं स्यात् । अतो नास्तीत्यनेन विशिष्य ध्वंसप्रागभावविवक्षा-संभव एव तत्प्रतीतिरिति वक्तव्यम् । एवञ्च तत्र समवायसंबन्धस्य नियतत्वादवक्तव्यत्वात् तस्याप्यवच्छेदकत्वा-स्वीकारात् समवायावच्छिन्नत्वविशेषणदानं न भवतीति तदाशयः । एवञ्च संसर्गेणाभावः संसर्गाभाव इति संसर्गावच्छिन्नप्रतियोगिताकाभावस्य संसर्गाभावपदेन विवक्षणादेतन्मात्रासाधारण्यमस्य । तत्र सामयिका-भावः अत्यन्ताभावश्चेति द्वैविध्यं कैश्चिदिष्टम् । कादाचित्कोऽभावः सामयिकः, यथा भूतले घटो नास्तीति । अस्योत्पत्तिविनाशशालित्वमस्ति । यत्र यस्य कदापि न प्रसक्तिः तत्र तदभावोऽत्यन्ताभावः, यथा पृथिव्यां शीतस्पर्शादेः, जले गन्धस्य, तेजसि स्नेहस्य, वायौ रूपस्येत्येवं समवायेन, यथा च संयोगेनाग्न्यादे-र्जलादौ । तत्रात्यन्ताभावस्थले अधिकरणवृत्तिपृथिवीत्वादिधर्म एवात्यन्ताभाव इति सुवचम् । सामयि-काभावस्थले एव तस्य दुर्वचतया तत्तत्कालावच्छिन्नत्वघटनेनाभावव्यवहारनिर्वाहः । एवं नित्येनात्यन्ताभावेनैव निर्वाहात् सामयिकाभावो मास्त्वित्येव तार्किकनिष्कर्षः । अभावाधिकरणतावच्छेदकं घटाधिकरणकाल-भिन्नकालावच्छिन्नभूतलत्वम्; तत् तदा नेति समाधीयते । यद्वा भूतलमात्रस्याधारत्वेऽपि तत्तत्कालाव-च्छिन्नस्वरूपं संबन्ध इत्युच्यते । स्वरूपञ्चाभावो वा भूतलमेव वा । अनुभवानुसारेण स्वरूपस्य संबन्धत्वं सर्वेष्टमिति । तथाऽस्माभिरनुभवानुसारेण स्वरूपस्याभावत्वमपि सुवचम् । वस्तुतोऽभावस्य धर्मतया प्रतीत-त्वात् यथायथं भूतलादिवृत्तिर्धर्मविशेष एवाभाव इत्येवास्तु ॥ ४१ ॥

---

42 உருவமைப்பு தவிர வேறு ஜாதி என்ற தர்மமோ **अभाव** பதார்த்த மோ கிடையாது அவ்வுருவமைப்பு வஸ்துவை விட்டுப் பிரியாமலிருப்ப தால் அதைச் சொல்லும் சொல்லானது அந்த வஸ்துவையும் சொல்லும் என்று **आकृत्यधिकरण** ஸித்தாந்தமென்றார் கீழே. இதனால் பரமாத்மாவை

सच्च त्यच्चेति सृष्ट्वा विशसि चिदचितौ तेन चोक्तोऽसि विश्वम्
तज्जत्वात् तल्लयनत्वात् त्वमिति च निखिलं त्वच्छरीरं किलेति ।

42 **अनित्यदेवतादिस्वीकारे** नित्यस्य वेदस्यानित्यार्थसंयोगापत्तिरिति शंकायां प्रवाहनित्यत्वेन तद्दोष-परिहारं स्वयमभिमत्य—तदर्थमिन्द्रत्वादिजातिर्न स्वीकार्या ; आकृत्यधिकरणे च जैमिनीये आकृतिपदं संस्थानवाच्येव, न तु नित्यजातिवाचि ; विशिष्टवाचित्वपक्षे दोषाभावात् विशेषणमात्रवाचिता च न स्वीकर्तव्या । यथा च संस्थानातिरिक्तजात्यभावः, तथैव संस्थानादिभावातिरिक्ताभावोऽपि नेति प्रपञ्चितम् । अस्य संस्थानरूपाकृतिविषयकविचारप्रवृत्तस्याधिकरणस्य विशिष्टवाचित्वस्थापकत्वात् तत्रैव सर्वेषां पदानां विशिष्टपरदेवतारूपपरमात्मपर्यन्तवाचकत्वमपि सिद्धम्—अपृथक्सिद्धधर्मवाचिनां धर्मिपर्यन्ततेति न्यायस्याविशिष्ट-त्वात् । तथा च गवादिशब्दो न केवलगोत्ववाची, न च तद्विशिष्टपिण्डमात्रवाची, नापि तद्विशिष्टपिण्डवि-शिष्टजीवमात्रवाची ; किंतु तादृशजीवविशिष्टपरमात्मपर्यन्तवाची । यत्र चेतनं प्रति अचेतनस्य शरीरत्वम्, तत्रैवम् यस्य समष्टिरूपाचेतनस्य मूलप्रकृत्यादेर्वा जीवशरीरता नास्ति, तद्वाचिपदस्य तु अचेतनविशिष्ट-परमात्मपरतैव ; न तु जीवस्य घटनेति प्रमेयनिष्कर्षं प्रतिपिपादयिषुः, लोके चेतनाचेतनशब्दानां परमात्म-पर्यन्ततया व्यवहाराकरणात् तथा तदधिकरणन्यायशिक्षणमयुक्तमिति शंकायाम्, लौकिकव्यवहाराभावः परमात्मप्रसंगस्य लोके प्रायेणाभावात् जगत्परमात्मनोरपृथक्सिद्धिरूपसंबन्धापरिज्ञानाच्च स्यात्, शास्त्र-व्यवहारसत्त्वात्तु सर्वमेषितव्यम् । आकृत्यधिकरणस्य तावद्विषयकत्वपोषकमिदं शास्त्रमिति शास्त्रीयम् अभेदव्यवहारं शास्त्रीयमेव तदुपपादनप्रकारञ्च प्रदर्शयन्, अत एव तस्याभेदव्यवहारस्य प्रकारान्तरेण निर्वाहप्रवृत्तमतान्तरनिरसनमपि सिद्धमित्यप्याह **सदिति** । अनेन श्लोकेन, "तदेवाग्निस्तद्वायुस्तत्सूर्यः" इत्यादिना देवतानां परमात्मैक्यावधारणात् देवतैक्यमेव ; अनित्यत्वञ्च नेति शंकाऽप्यपास्यते अग्न्यादि-सामानाधिकरण्यं शरीरात्मभावनिबन्धनमित्युपपादनेन । **संस्थानंकलयाकृति**मित्येवं प्राक् कथकादि-

விட்டுப் பிரியாமலே எல்லா வஸ்துவுமிருப்பதால் எந்த வஸ்துவைச் சொல்லும் சொல்லுக்கும் பரமாத்மாவும் பொருள் என்றதாயிற்று. சிலர் உலகிலுள்ள சேதநாசேதநங்கள் பரமாத்மாவுடன் ஒன்றுகவே யிருப்பதால் எல்லாம் ப்ரஹ்மமென்கிறதென்பர். எல்லாம் அவனை விட்டுப்பிரியாமலிருப் பதால் எதற்கும் அவன் ஆத்மாவானபடியால் அவ்வாறு கூறுகிறதென் கிறோம் நாம். நமக்குக் கீழே கூறிய **आकृत्यधिकरण**யுக்தியே யன்றி சாஸ்த்ரமும் ப்ரமாண மென்கிறார் மேல் ச்லோகத்தினுல், எம்பெருமானே! நீ சேதநா சேதநங்களைப் படைத்து அதனுள்ளே புகுந்திருப்பதாலே எல்லாம் நீயே என்கிறது தைத்திரீயம். இங்கே கார்யத்தில் புகுந்தானென்றதால் கார்யம் வேறு இவன் வேறென்று தெளிவாவதால் அத்வைதம் அழிக்கப்படும். சாந்தோக்யத்திலும் சாண்டில்ய வித்யையானது எம்பெருமான் உலகின்

संबोधनेनोक्तम् । इह तु साक्षात् परमात्मैव संबोध्यते । तदिदं सदर्थापलापिबाह्यकुदृष्टिषु वैमुख्यादि-त्याहुः । सर्वान्तर्यामितया संनिहितस्य परमात्मनः सौलभ्यादिगुणानुभाविनस्तत्संबोधनेन संलपितुमवशा-दियं प्रवृत्तिः । वेदान्तव्युत्पत्तिरहितान् अनुपसन्नान् प्रति वेदान्तप्रमेयं साक्षान्नोपदेष्टव्यमिति च भगवदाभिमुख्येन विज्ञापनम् । **तेन चे**ति चकारः **इतिचे**ति चकारश्च मिथस्समुच्चयार्थः । तदनु-प्रविष्टत्वतज्जत्वतल्लत्वतदनत्वानि अभेदव्यवहारहेतव इत्युक्तं भवति । अनुप्रवेशवाक्यस्फूर्तये **सच्चत्यच्चे**ति प्रयोगः । सत्=चित्, **यत्** तद्भिन्नमचित् । सच्च त्यच्चेत्युक्तौ चिदचितौ, महदहंकारादिभौतिकपर्य-न्ताचेतनजातं देवमनुष्यादिजीवजातञ्च सृष्ट्वा तदनुप्रवेशं कृतवानसि भगवन् । **तेन** अनुप्रवेशेन हेतुना त्वं **विश्वमुक्तोऽसि**—चिदिति अचिदिति महान् अहंकारः देवो मनुष्यः इदं तदित्येवं विश्ववाचकशब्द-समानाधिकरणस्ववाचकशब्दको भवसीत्यर्थः । तत्तदन्तर्यामितया प्रतिपादितोऽसीति यावत् । "तत् सृष्ट्वा तदेवानुप्राविशत्; तदनुप्रविश्य सच्च त्यच्चाभवत्" इति वाक्ये अनुप्रविश्येति ल्यपा अनुप्रवेशस्य चिदचित्सामानाधिकरण्यहेतुत्वमुक्तम् । अथ तज्जत्वादिकं हेतुमाह **तज्जे**ति । **विश्व**मिति पदस्यात्राप्यनुषंगात्, तज्जत्वात् तल्ल्यनत्वात् त्वं विश्वमिति चोक्तोऽसीत्यन्वयः । अत्र "सर्वं खल्विदं ब्रह्म तज्जलानिति" इति वाक्यमभिप्रेतम् । तत्र **इति**शब्देन तज्जत्वादेर्विश्वतादात्म्ये हेतुत्वमुक्तम् । श्रुतौ जं च लं च तदेव अन् च जलान्; तस्य जलान् तज्जलान् । तदिति ब्रह्मवाचि । जनिलयाननानां तत्संबन्धित्वञ्च तदधी-नत्वरूपम् । तदधीनजन्मलयस्थितिमत् (मत्त्वात्) विश्वं तदित्युक्तं भवति । श्लोके ल्येत्येतत्स्थाने **लि** इति **अन्** इत्येतत्स्थाने **अन** इति च प्रयोगः प्रत्ययभेदात् । लमिति डप्रत्यये; अन् इति क्विप्प्रत्यये । **लि** इति क्विपि; अन इति अचि । ननु घटस्य दण्डकुलालादिजन्यत्वेऽपि तदभेदो न भवतीति तज्जत्वं कथं हेतुरिति शंकापरिहाराय लेत्यप्युक्तम् । यत् लयस्थानं सत् जन्महेतुः तस्य कार्याभेद इष्टः । उपादेयत्वरूपजन्यत्वं विवक्षितमिति भावः । ब्रह्मण उपादानत्वात् जगदभेदोऽक्षत एव । ननु अनु-प्रवेशादभेदव्यवहारः, तदधीनजीवनत्वाच्च तथा व्यवहार इत्ययुक्तम् । गृहानुप्रवेशमात्रेण गगनस्य गृहिणश्च तदभेदाभावात्; राजाधीनजीवने भृत्ये तदभेदाभावाच्चेत्यत्र श्रुत्याशयं दर्शयति **निखिलं त्वच्छरीरं किले**ति । अनुप्रवेशाननशब्दाभ्यां नित्यनियमनधारणविवक्षणात् नियमेन नियाम्यत्वधार्यत्वयोः शरीर-स्वरूपत्वात् शरीरात्मभावावगतौ शरीरवाचिशब्दस्य शरीरिपर्यन्तवाचित्वन्यायेन तादात्म्योपपत्तिरिति भावः । अनेन अनुप्रवेशाननयोरुक्त्या ब्रह्मजगतोर्भेदस्यैव प्रतीयमानतया कार्यकारणैक्याभावात् कथमुपादेयत्व-लीयमानत्वे इति शंकापि परिहृता भवति । अन्तर्यामिब्राह्मणादिना कारणं कार्यञ्च सर्वं चेतनाचेतनं ब्रह्मशरीरभूतमित्यवगमात् विशिष्टब्रह्मण एव कार्यत्वकारणत्वसिद्ध्या न कश्चिद्दोषः । श्रुतौ तदधीन-स्थितिकत्वरूपतदनत्वस्य विशेषणभूतचेतनाचेतनमात्रनिष्ठतया तज्जत्वतल्लत्वयोरपि तन्निष्ठयोरेव विवक्षणेऽपि

---

பிறப்பு இருப்பு இறப்பு இம்மூன்றுக்கும் காரணமாகையால் உலகே அவன் என்கிறதென்று உபதேசிக்கின்றது. அவனால் உலகம் வாழ்கிறதென்றால்

**तैस्तैः शास्त्रैरभेदव्यवहृतिहृदयं विस्तृणानैर्निरस्ताः**
**भेदाभेदावभेदं भ्रममपि भगवन् कारणं कल्पयन्तः ॥ ४२ ॥**

---

विशिष्टरूपेणोपादानभूतब्रह्माधीनत्वस्य विशेषणगतजन्मादावप्यक्षततया सर्वंखल्विति सर्वशब्दार्थे सर्वान्तर्यामि इत्यत्रैकदेशे सर्वस्मिन् तज्जत्वादेरन्वयात् तज्जत्वादिविशिष्टसर्वान्तर्यामि ब्रह्म तज्जत्वादिहेतुज्ञाप्यसर्वतादात्म्यवदिति अर्थो ज्ञातो भवति । एवञ्च कार्यकारणैक्यमपि ब्रह्मणि शरीरात्मभावनिबन्धनमेव ; अन्यथा निर्विकारत्वभंग इत्याशयः । अत एव तुर्यपादेन मतान्तरनिरासः । **किलेति** किलशब्दः "यस्य पृथिवी शरीरम्....यस्य तमः शरीरम्....यस्यात्मा शरीरम्" इत्यादिबहुश्रुतिप्रसिद्धिप्रदर्शि । **इतीत्यस्य** हृदयमित्यत्रान्वयः । एवंरूपमभेदव्यवहारतात्पर्यं विवृण्वद्भिः पूर्वार्धसूचितैः अनुप्रवेशजन्मादिपरैः शास्त्रैः मतान्तरस्थाः निरस्ता भवन्तीत्यर्थः । अत्र पूर्वार्धे व्याख्यातृभिः **तेनचे**त्यत्र चकारस्त्वर्थे । तस्य हृदयमित्यत्रान्वयात् हृदयं तु इत्यर्थः । **इतिचे**ति चकारो वाक्यार्थे । तेन सर्वं खल्विदं ब्रह्मेति वाक्यस्य सर्वशरीरकं ब्रह्मेति सर्वं ब्रह्मशरीरमिति अर्थविकल्पो दर्शितो भवतीत्युक्तम् । अत्र व्याख्यातरीतिश्च सम्यगववेया । द्वितीययोजनायां "ब्रह्मशब्दो ब्रह्मशरीरे लाक्षणिकः" इति **रत्नसारिण्यां** कण्ठरवेणोक्तम् । तेन शरीरिवाचकशब्दस्य शरीरे प्रयोगोऽपि मुख्य इति केषाञ्चित् कल्पनाविस्तरः प्रतिक्षिप्तो भवति । अधिकमस्मदीये **आचार्यभाष्यतात्पर्ये** द्रष्टव्यम् ।

एतावता देवतैक्यभ्रमव्युदासः पदानां परमात्मपर्यन्तवाचितायां शास्त्रप्रमाणप्रदर्शनञ्च कृते भवतः । शरीरिपर्यन्तत्वं विनैव भास्करादिपक्षावलम्बनेन सामानाधिकरण्यनिर्वाहो न युक्तः उक्तप्रमाणदर्शितरीतिहानिप्रसंगादित्याह **भेदे**ति । जगद्ब्रह्मणोर्भेदाभेदौ भास्करयादवोभयेष्टौ । तत्र चेतनाचेतनयोर्ब्रह्मणश्चाभेदः स्वाभाविकः ; अद्वैतात् । अचेतनब्रह्मणोर्भेदोऽपि स्वाभाविकः ; कार्यकारणभावात् । जीवविषये तु घटाकाशादिवत् औपाधिको भेद इति **भास्कर**पक्षः । तत्रापि कार्यकारणभावस्वीकारात् स्वाभाविक एव भेद इति **यादव**पक्षः । ब्रह्मणोऽनुप्रवेशस्याधारत्वनियन्तृत्वादेः ततश्शरीरात्मभावस्य च शास्त्रतोऽवगमात्, 'भेदव्यपदेशाच्चान्यः', 'अधिकं तु भेदनिर्देशात्' इत्यादिसूत्रतश्च भेद एवेति नाभेदस्यावकाशः । समानाधिकरणप्रयोगावगमितस्त्वभेदो न चिदचिदभेदः, किंतु चिदचिदन्तर्याम्यभेद एव । पृथगात्मानमित्यादिभेदश्रुतयश्च जाग्रति । अतः शास्त्रविरोधः । प्रकृत्याद्यचेतनस्य नित्यत्वाच

---

அவன் வேறு உலகம் வேறென்றே தேறும். அதனால் பிறர் நினைத்த அத்வைதமில்லை. வேறாகில் எல்லாம் அவன் என்னலாமோ என்னில் — வேறாயினும் சரீராத்ம ரூபமாயிருந்து வேறென்பதால் அது தகும். சரீரமும் ஆத்மாவும் வேறு. விட்டுப்பிரியாத தர்மதர்மிகளில் தர்மம் வேறு தர்மி வேறு. ஆயினும் தர்மத்தைச்சொல்லும் பதம் தர்மியான ஆத்மாவையும் கூறுவது இயற்கை. ஆக ஸர்வம் என்ற சொல்லுக்கு ஸர்வ வஸ்துவின் ஆத்மா என்ற

## अथ प्रासंगिकमरुणाधिकरणम्—

न कार्यता। जीवकार्थितावादियादवप्रकाशमते अकृताभ्यागमादिदोषश्चेति। शांकरमतमाह **अभेदं** भ्रममपीति। क्वचिदभेदं क्वचिद्भ्रमश्चेति समुच्चयाय **अपि**शब्दः। जीवब्रह्मणोरभेदः। जडब्रह्मणोर्मिथ्या-सत्यत्वोक्तदयोगात् ब्रह्मणि जडभ्रममात्रम्। शुक्तौ रजतस्येव कल्पनेति यावत्। तथाच तत्त्वमसीत्यत्र स्वरूपाभेदो विभक्त्यर्थः। ज्योतींषि विष्णुरित्यादौ तदयोगात् बाधार्थसामानाधिकरण्यम्। विष्णुरेवास्ति न ज्योतींषीति तदर्थ इति। इदमप्ययुक्तम्; शास्त्रे अनुप्रवेशस्योक्तेः। न हि मिथ्याभूते कस्य-चिदनुप्रवेशो भवति। मिथ्यावस्तुनो जन्यत्वधार्यत्वनियाम्यत्वादिकमपि न भवति। सर्वं खल्विदं ब्रह्मेत्यत्र सर्वपदेन चिदचिदुभयग्रहणात् तत्राभेदो विभक्त्यर्थश्चेत्, अचिति नान्वयः। चिदचिद्भ्रमाधिष्ठा-नमिति सर्वशब्दार्थश्चेत् जीवस्वरूपान्वयो न भवति। अस्मन्मते शरीरात्मभावनिबन्धनत दात्म्यमुभयत्रैकरूपम्। शब्दानां विशिष्टवाचित्वस्य मुख्यत्वात् पदे लक्षणादिदोषोऽपि नास्ति। सर्वशास्त्रैकरस्यश्चेति। जगद्ब्रह्मणोरत्यन्तभेदवादिनो यथा अभेदपरैः शास्त्रैर्निरस्ताः, तथा अभेदशास्त्रमभेदपरतयैव निर्वहन्तः कुदृशोऽपि तदर्थविवरणभूतशास्त्रैर्निरस्ताः; भेदमेव स्वीकृत्याभेदशास्त्रस्यापि मुख्यार्थताया एवास्मा-भिरुक्तेरिति। अस्य श्लोकस्यानुप्रवेशादिविरोधेन परनिरसने तात्पर्यम्; अन्यविधप्रतिक्षेपप्रपञ्च उपरि॥ ४२॥

43 अथ **प्रासंगिकमरुणाधिकरण**मिति मूलवाक्यम्। इदञ्च शारीरककतिपयाधिकरणार्थ-परेऽत्र निबन्धे पूर्वमीमांसान्तर्गतारुणाधिकरणविचारः कथमिति शंकापरिहारार्थम्। श्रीभाष्ये आनन्द-मयाधिकरणे तत् यथा प्रासंगिकम्, तथेहापीति भावः। प्रसंगशब्दप्रयोगात् मुख्यसंगतिर्नास्तीत्य-भिप्रेतमिति न; श्रीभाष्ये समानाधिकरणपदयोरेकार्थकत्वावश्यकतायां प्रतिपाद्यमानायाम्, पूर्वपक्षी अरुणा-धिकरणमादाय भिन्नार्थकत्वमपि भवतीति शशंके। तन्निराकरणे प्रवृत्तः स्वयं पृथक् पूर्वमीमांसाव्याख्यानस्या-करणात्, 'तत्रास्मद्व्याख्याने द्रष्टव्यम्' इत्युक्त्वोपरतेः कर्तुमशक्यतया तदधिकरणशिक्षणमत्रैव व्यस्तृणीतेति भावः। तथेहापि विशिष्टपर्यन्तबोधकत्वमेव पदानाम् आकृत्यधिकरणस्योपनिषदाञ्चेष्टमित्यभिप्रायवर्णने अरुणा-धिकरणविरोधः स्यादिति शंकायाम् तत्समाधानार्थं तदधिकरणशिक्षणं श्रीभाष्यकृतमत्र विशदीक्रियत इति

---

பொருளாகையால், அந்த ஆத்மா ப்ரஹ்மமாகையால் எல்லாம் ப்ரஹ்ம மென்பது நன்கு பொருந்தும் அபேதம் சொல்லும் அத்வைதிகளுக்கு. 'புகுந்து வாழ்க்கை யளிக்கிறான்' என்னும் வாக்யம் முரண்படும். மேலும் சாங்கரர் ஜீவனுக்கும் ப்ரஹ்மத்திற்கும் அத்வைதம்; மற்ற உலகு பொய்யாகையாலே மெய்யான ப்ரஹ்மத்துடன் ஒன்றாகா. அங்கே ஒன்றென்கிற வாக்யத்தின் கருத் தென்னவெனில்–உலகு என்ற ப்ராந்தி எதனிடம் உண்டாகிறதோ அது ப்ரஹ்மமென்றதென்பர். என்ன அபேத நிர்வாஹத்தின் அழகு பாருங்கள். (42)

**उन्नीतं गुरुणाऽरुणाधिकरणे न ह्येकहायन्यगात्**
**आरुण्यान्वयमाभिधानिकमपित्वाक्षेपतः प्रापितम् ।**

भावः । अत्रैवमद्वैतिशंका—भेदेऽपि सामानाधिकरण्यं दृश्यते, सिंहो माणवक इति, शुक्तौ च इदं रजतमिति। तत्र सिंहसदृश इति, रजतभ्रमविषय इति सिंहरजतपदयोर्लक्षणास्वीकारात् अभेद एव सामानाधिकरण्यमिति चेत्—अथाप्यरुणयैकहायन्या पिङ्गाक्ष्या गवा सोमं क्रीणाति इति वाक्ये अरुणापदस्याऽऽरुण्यरूपगुणार्थकस्य तद्भिन्नद्रव्यवाचिपदेन सामानाधिकरण्यं दृश्यते । न च तत्रारुणापदं गुणविशिष्टद्रव्यपरम् ; पूर्वमीमांसागतिविरोधप्रसंगादिति । कीदृशी पूर्वमीमांसागतिरिति चेत्—तत्प्रदर्शनमनेन उन्नीतमिति श्लोकेन । मीमांसकैः, "नागृहीतविशेषणा बुद्धिर्विशिष्टे प्रवर्तते" इति न्यायात् विशेषणज्ञानं विना विशिष्टज्ञानायोगात् पदानां विशेषणमात्रे शक्तिः । अयमेवाकृत्यधिकरणार्थः । तथाचारुणापदं गुणमात्रवाचीति निष्कृष्य, आरुण्यगुणमात्रार्थकत्वमादायैवारुणाधिकरणे तत्र पूर्वपक्षः प्रवर्तितः, तन्मात्रार्थकत्वं स्वीकृत्यैव सिद्धान्तोऽपि कृतः । अस्माभिस्तु आकृत्यधिकरणं पदानां विशिष्टवाचित्वस्थापकमेवेत्युपपादनात् अरुणापदं विशिष्टद्रव्यपरमेव । अतो भाष्ये द्रव्यपर्यन्तत्वस्वीकारेणैव पूर्वपक्षः सिद्धान्तश्च दर्शितौ । मीमांसकमतेऽस्मन्मते च प्रकृतवाक्ये अरुणयेति पदं क्रीणातीत्यत्र नान्वेति ; किंतु अध्याहृतक्रियान्तरे इति पूर्वपक्षः समानः ; क्रीणातीत्यत्रैवान्वय इति सिद्धान्तश्चैकरूपः । तत्रेह मीमांसकरीतिरेवम्—क्रीणातीत्युक्तः क्रयो नाम द्रव्यविनिमयः ; तस्य द्रव्यसाध्यत्वात् गुणसाध्यत्वासंभवात् आरुण्यस्य क्रयान्वयायोगात् अरुणयेति पदं तद्वाक्यानिविष्टं पृथग्भूतम् । तस्य स्वान्वययोग्यक्रियान्तराध्याहारेण आरुण्येन द्रव्यं परिच्छिन्द्यादिति वाक्यार्थे कल्पिते तद्द्रव्यं किमित्याकांक्षायाम्, कल्पितस्यास्य वाक्यस्य सोमयागप्रकरणगतत्वात् सोमयागद्रव्यं सर्वं परिच्छिन्द्यादित्यर्थलाभात्, सर्वेण प्रकृतद्रव्येणारुणेनैव भाव्यमिति पूर्वपक्षः । सिद्धान्तस्तु—सत्यम् अरुणापदमारुण्यमात्रपरम् । तथापि गवा क्रीणातीति गोपदोक्तस्य गोत्वस्य जातितया क्रयसाधनत्वायोगेऽपि द्रव्यद्वारा तत् भवतीति यथा क्रयान्वयः, तथाऽस्य गुणस्यापि परम्परया क्रयसाधनत्वं भवितुमर्हतीति अत्रैवान्वयो युक्तः । न चारुण्यमेकहायनीद्रव्यमित्यनेकविधाने वाक्यभेद इति शंक्यम् ; आरुण्य.एकशयनीपिंगाक्षीरूपसर्वविशिष्टक्रयरूपैकविशिष्टार्थविधानात् । तत आरुण्यस्य द्रव्यापेक्षायां स्वान्वितक्रयान्वयिगोरूपद्रव्यस्य संनिकृष्टतया तदन्वय इष्यत इति । मीमांसकैः, वायव्यं श्वेतमालभेतेत्यत्र श्वेतपदस्य द्रव्यपर्यन्तार्थकत्वं स्वीकृतम् ; कथमरुणयेत्येतदपि न तथेत्याशंक्य उपात्तद्रव्यकत्वाक्यस्थं गुणपदं गुणमात्रवाचि । अत्र एकहायन्या गवेति द्रव्योपादानमस्तीति विशेषः इत्युक्तम् । तैरेव रक्तः पट इत्यत्र रक्तपदं द्रव्यपर्यन्ततयेष्टं

43. மீமாம்ஸகர்கள் अरुणा என்ற சொல்லுக்கு சிவப்பு நிறம் மட்டும் பொருளென்றனர். அதனால் अभेदம் இராவிடினும் ஸமாநவிபக்தி வரலாமே யென்று இவர் நினைப்பர். அதற்குச் சொல்லுகிறோம். குருவால் (மீமாம்ஸக

**यद्‍ब्रूतेऽरुणयेति केवलगुणं वाक् द्रव्यनिर्देशव-**
**द्वाक्यकथा ; न गिरस्तु कारकविभक्त्यन्ताः मिथस्संगताः ॥ ४३ ॥**

---

कथमिति चेत्—प्रथमायाः पाणिनिमते कारकवाचित्वाभावात् क्रियान्वयनिर्बन्धाभावात् पटेनान्वय-संभवात् रक्तपदस्य द्रव्यपरता युक्ता ; अत्र तु अरुणयेति तृतीया कारकविभक्तिरिति क्रियान्वय एव वक्तव्यः । अतः पटस्य शुक्ल इत्यत्र शुक्लपदमिवारुणापदं गुणमात्रवाचीत्युक्तम् । **अयमर्थ इह** श्लोके उच्यते—अरुणाधिकरणे **गुरुणा** प्रभाकरेण । उपलक्षणमिदं भट्टस्य । **उन्नीतम्**—उत्प्रेक्षितम् । किमिति ? अत्र एकहायन्या पिंगाक्ष्या गवेत्युक्तद्रव्यमेकहायनी अभिधानिकमारुण्यान्वयं नागात्—नाप्नोति स्म । आरुण्यविशिष्टैकहायनीविषयकशाब्दबोधो नैतद्वाक्यजन्य **इ**ति यावत् । किं तु उभयविशिष्टक्रय-विषयकबोधे जाते गुणस्य द्रव्याकांक्षया द्रव्ये आक्षेप्ये तद् द्रव्यमिदमेवेति एव वाक्यान्वितस्वरूप-संनिकर्षातिशयेन प्रापितमेव तदन्वयमेकहायनी प्राप्नोति । नन्वरुणयेति पदं विशिष्टवाचीति शंकां परिहरति **य**दिति । **अरुणयेति वाक्** पदम् उपात्तद्रव्यकवाक्यस्था(स्थतया) **यत्** यस्मात् केवलगुणमेव ब्रूते । पटस्य शुक्ल इत्यत्र शुक्लपदस्य द्रव्यपर्यन्तता कुतो नेत्यत्रोपात्तद्रव्यकवाक्यस्थत्वमेव हि हेतुः । तदत्रापीति भावः । ननु रक्तः पटो भवतीत्यत्रोपात्तद्रव्यके गुणविशिष्टवाचिता भवदिष्टेत्यत्र तद्वैषम्यं दर्शयति **ने**ति । कारकविभक्त्यन्ताः **गिरः** पदानि **मिथः संगता** न भवन्ति । मिथोन्वयस्तेषां पदानां न भवति । कारकाणां क्रिययैवान्वयात् । अतो रक्तः पट इत्येतद्वैषम्यम् । तथाचारुणयेत्यत्र गुणमात्र-वाचित्वेऽपि सामानाधिकरण्यं मीमांमकसंमतमिति अद्वैतिप्रत्यवस्थानम् ॥ ४३ ॥

---

*வகுப்பில் சேர்ந்த ஒருவருக்கு குரு என்று ப்ரஸித்தி. ப்ரபாகர குரு என்று பெயர்.)* **अरुणयैकहायन्या गवा सोमं क्रीणाति** *என்றவிடத்தில்* **अरुणा** *பதத்திற்கு ஆருண்யம் என்ற நிறம் பொருள். அது நேராக ஏகஹாயநிக்கு (பிறந்து ஒரு வருஷமான கோவுக்கு)ச் சேராது.* **अरुणया** *என்பதைப் பிரித்துத் தனிவாக்யமாக்க நினைக்கிருன் பூர்வபக்ஷி. அது வேண்டா. வாக்யநடைக் கிணங்க* **क्रीणाति**-*வாங்குகிருன் என்ற க்ரியைக்கே சேரும், பிறகு எதற்கு ஆருண்ய மென்ற போது ஏகஹாயநிக்கு என்று* **अर्थात्** *ஏற்படுமென்பர்,* **अरुणा,** *என்ற சொல்லிலேயே நிறத்திற்கு த்ரவ்ய ஸம்பந்தம் தெரிகின்றதே என்னில், தெரியாது,* **अरुणया** *என்ற வாக்கு= சொல் த்ரவ்யத்தைச் சொல்லாது: த்ரவ்யம் அங்கேயே வேறு பதத்திஞல் சொல்லப் பட்டிருக்கிறதே 'ஆகில் இந்த நிற மென்ற பொருளுக்கு அந்த த்ரவ்யத்திலே அந்வயம் கூறலாமே என்னில் இது சேராது,* **अरुणया** *என்று மூன்ரும் வேற்றுமை. வேற்றுமைகளுக்கு காரகம் பொருள், காரகமெல்லாம் க்ரியாபதத்துடன் தான் சேரும் த்ரவ்யத்தைச் சொல்லும் பதத்துடன் சேராது. (43)*

**अरुणाधिकरणसरणिः समगणि रामानुजार्यमुनिभिर्या ।**
**उचितेयमनुचिताऽन्या परिषदि विदुषां स्फुटीभवति ॥ ४४ ॥**
**उपात्तेऽपि द्रव्ये विसदृशविभक्तिव्यपगमात्**
**प्रकृत्या वैशिष्ट्यं परिणमति खल्वाकृतिनयात् ।**

---

44 अर्वाचीनमीमांसकादृता अरुणाधिकरणार्थवर्णनगतिर्नादरणीयेति श्रीभाष्ये तद्वर्णनसरणिः प्राची प्रादर्शि । तत्रानाश्वासे सम्प्रति विद्वांसो मिलन्तो विमृशन्त्वित्याह **अरुणे**ति । अरुणाधिकरणस्य भगवद्रामानुजपादैर्या व्याख्यानसरणिः प्रमाणोपपत्तिमत्तया **समगणि** संशीलिता, इयमेवोचितत्वेन, **अन्या** मीमांसकसरणिश्चानुचितत्वेन प्रागव्यक्ताऽपि विदुषां सभायां व्यक्तीभवतीत्यर्थः ॥ ४४ ॥

45 अथैतदुपपादयति **उपात्ते**ति । भगवद्रामानुजपादप्रदर्शिता सरणिस्तावदियम्—आकृत्यधिकरणं विशिष्टवाचित्वस्थापकमिति प्रागेवावाचि । अरुणादिपदस्य विशिष्टवाचित्वं श्वेतमालभेतेत्यादौ तैः स्वीकृतश्च । अथापि पटस्य शुक्ल इत्यादौ उपात्तद्रव्यकवाक्ये गुणमात्रपरत्वदर्शनात् अरुणयैकहायन्येत्यत्रापि न द्रव्यपरत्वं लाघवादिति तैरुच्यते—तदयुक्तम्, तैरेव रक्तः पट इत्यत्र द्रव्यपरत्वेष्टेः । अत एवं वक्तव्यम्—यथा गोशब्दस्य विशिष्टवाचित्वमेव, न तु गोत्वमात्रे प्रयोगः ; अयं गौरितिवत् अस्य गौरिति प्रयोगादर्शनात्—न तथाऽत्र ; शुक्लः पट इतिवत् पटस्य शुक्ल इत्यपि प्रयोगात् । अतो निष्कर्षविवक्षारहितस्थले सर्वत्र विशिष्टपरत्वमिति व्यवस्था तद्विवक्षा च विसदृशविभक्तिबलात् समानविभक्त्यभावात् विजातीयविभक्तिसत्त्वादवसीयेत । तत्सत्त्वेऽपि पटस्य शुक्लो भाग इति प्रयोगे द्रव्यपर्यन्तवाचिता दृश्यते । अतोऽपृथक्सिद्धत्वसंबन्धेन स्वान्वयिद्रव्यवाचकपदसत्त्वे गुणमात्रविवक्षा । पटस्य शुक्ल इत्यत्र षष्ठ्यर्थ आधेयताविशेष इति शुक्लपदं गुणमात्रपरम् । तत्रैव शुक्लो भाग इत्युक्तौ घटपदस्य भाग एव घटकतयाऽन्वयः, न गुणे इति न विशिष्टवाचित्वभंगः । अतो विजातीयविभक्त्यन्तस्य गुणान्वयिद्रव्यवाचिपदस्याभावात् श्वेतमालभेत, रक्तः घटः अरुणयैकहायन्या इत्यादौ विशिष्टवाचित्वमेव । द्रव्यानुपादान इव द्रव्योपादानेऽपि रक्तः पट इत्यत्रेव आकृत्यधिकरणसिद्धं विशिष्टवाचित्वं न बाध्यम् । द्रव्यानुपादानेऽपि रक्तं रूपं पश्येत्यादौ गुणमात्रविवक्षा दृश्यते । अतो गुणमात्रविवक्षारहितस्थले सर्वत्र **आकृतिनयात्** , आकृतिवाचिनां विशिष्टवाचित्वमुत्सर्ग इति आकृत्यधिकरणात् अरुणयेति पदे **प्रकृत्या**=प्रातिपदिकेनैव आरुण्यगुणवैशिष्ट्यं द्रव्ये **परिणमति** भासते, प्रतीयते । गुणमात्रार्थकत्वे 'गुणे शुक्लादयः पुंसि' इति पुंलिंगतैव स्यात् ।

---

**44.** *மீமாம்ஸகர் உரைத்ததை உதறிவிட்டு பகவத்ராமானுஜமுனிவர் அருணாதிகரணத்திற்கு வேறுவிதம் உரை யருளினார். இதுதான் தகும். மீமாம்ஸகர் மொழிந்தது தகாதென்பது வித்வான்களின் ஸபையில் விசதமாகும்.* (44)

**विभक्तिस्त्वर्थैक्यं कथयति समानैव पदयोः**
**त्निरूपा सा संख्यान्वयमिव (इव) दिशेत् कारकधियम् ॥ ४५ ॥**

तर्हि अरुणाधिकरणे किं विचारणीयमिति चेत्—तदाह **विभक्तिरिति** । समानविभक्तिकत्वेऽपि कारकविभक्तित्वात् क्रियान्वयस्यैव वाच्यत्वात् अरुणयेति विभक्त्या एकहायनीद्रव्यैक्यस्य बोधयितुमशक्यत्वात् एकहायन्या एवारुण्यमिति न सिध्येदिति पूर्वपक्षः । न च क्रियान्वयेऽपि एकक्रयक्रियायामुभयोरन्वयात् पश्चादुभयोर्मिथोऽन्वयोऽवगम्येतेति शंक्यम्—चकाराद्यभावेन अरुणायाः एकहायन्याश्च निरपेक्षकरणत्वावगमात् क्रयभेदस्यैव प्राप्तेः । तर्हि दशभिः क्रीणातीति द्रव्यदशकप्रतीतिर्भज्येतेति चेत्—अतोऽप्यत्र वाक्ये एकमेव क्रयान्वयि, अन्यत् वाक्यात् पृथक्कार्यमिति मन्यताम् । क्रयस्य वाक्यान्तरप्राप्तत्वे सुतरामनेकविधानमसंभवि । अरुणयेत्यस्य पृथक्करणे च मीमांसकोक्तरीत्यैव प्राकरणिकद्रव्यव्यक्तिभिः अरुणाभिर्भाव्यमिति सर्वद्रव्यारुण्यं पूर्वपक्षीष्टमिति । अत्रास्मत्सिद्धान्तरीतिरित्थम्—अरुणयैकहायन्येति सामानाधिकरण्यादुभयोः पदयोरेकत्वे सिद्धे अरुणापदेनैव द्रव्यगुणयोरभिहितत्वात् विशिष्टस्यैकक्रयरूपकर्मान्वयात् गुणस्यात्रैव नियमः, न प्राकरणिकद्रव्यान्तरे प्रसक्तिरिति । अयं भावः—

आकृत्यधिकरणनयात्, अरुणयेति स्त्रीलिंगश्रवणात्, एकहायन्येत्येतत्सामानाधिकरण्याच्चारुणापदं गुणविशिष्टद्रव्यवाच्येव । नात्र यदाग्नेयोऽष्टाकपाल इत्यादाविव विशिष्टक्रयरूपकर्मविधिः । अजया क्रीणाति, वाससा क्रीणातीति प्रतिवाक्यं क्रयविधानेनानेकक्रयकल्पने प्रमाणाभावात् दशभिः क्रीणातीति वाक्यस्यैव क्रयविधायकत्वात् । तत्र दशभिरिति समुदायश्रवणात् नाजादीनां विकल्पप्रसक्तिः । विकल्प्यत्वाभिमतानां द्रव्याणां गौरवलाघवदर्शनादपि विकल्पायोगात् समुच्चयः सिध्यतीति तदुपष्टम्भकमेव **दशभिरिति** पदम् । एवञ्च प्राप्तक्रयोद्देशेनाजादेरिव अरुणावाक्येन द्रव्ये विधेये नानापदोपात्ततया कारकतया मिथः संश्लेषं विनाऽन्वयाच्च वाक्यभेदः स्यादिति यदेकं स्वरसतो विशेष्यत्वार्हं तदर्थस्यैव क्रयकरणत्वेन विधानम्; अरुणयेति तु तत्रानन्वयात् पृथक्कार्यमिति प्राकरणिकसर्वद्रव्यारुण्यं तदर्थं इति पूर्वपक्ष्याशयः । द्रव्यस्यानेकपदोपात्तत्वेऽपि सामानाधिकरण्यबलादनेकधर्मविशिष्टैकद्रव्यपरत्वावगमात् सर्वाकारविशिष्टस्यैव क्रयक्रियाकरणत्वं बोध्यत इति न वाक्यभेद इति सिद्धान्तः । कारकविभक्त्यर्थानां क्रियायामेवान्वय इत्येतत् सत्यम् । विभक्तीनां वचनत्वाकारेण संख्यावाचित्वं संख्यायाः प्रकृत्यर्थेऽन्वयश्च

---

*45* **अरुणया** *என்ற வாக்யத்தில் வேறு பதத்தினுல் த்ரவ்யத்தைச் சொல்லியிருப்பினும் அருணுபதமும் ஆக்ருத்யதிகரணந்யாயத்தாலே த்ரவ்யத்துடன் நிறத்திற்குச் சேர்க்கையைக் குறிக்கும், ஸமாநவிபக்தியிருக்கலாம்; வேறு. விபக்தியாயிருந்தால்தான் த்ரவ்யத்தைச் சொல்லலாகுமா என்ருராய்தல் வேண்டும்.* **पटस्य शुक्लः** *என்ற விடத்தில் விபக்தி வெவ்வேருகவேயிருப்பதால் த்ரவ்யத்தையும் சேர்த்து சுக்லபதம் சொல்லாது,* **पटस्य शुक्लो भागः** *என்ருல் மீண்டும் த்ரவ்யத்தைச் சொல்லிதான் ஆகவேண்டும், த்ரவ்ய மென்று*

यथेष्यते, तथा समानविभक्तित्वाकारेणाभेदार्थकत्वं पदान्तरोपात्तार्थैक्यस्य प्रकृत्यर्थेऽन्वयश्चानुभविकत्वादेषितव्ये। तत्रारुणैकहायन्येति समस्तपद इव व्यस्तयोरपि पदयोर्विशिष्टवाचित्वमवसीयते । समानविभक्तीनां स्वप्रकृत्यर्थे समभिव्याहृत. स्वसमानविभक्त्यन्तपदार्थाभेदबोधकत्वव्युत्पत्त्या एकहायन्यभिन्नारुणाकरणकः अरुणाभिन्नैकहायनीकरणकश्च क्रय इति बोधे जाते नोभयोर्विधेयत्वम् ; अर्थैक्यादेकत्वैव विधितात्पर्यादन्यस्यानुवादत्वसंभवात् । यथा नयनद्वये संनिकर्षद्वये च सत्यपि घटस्यैकस्य प्रत्यक्षे सकृदेव भानम्, तथा विभक्तिभेदेऽप्यर्थोपस्थितिभेदेऽपि सर्वविशेषणविशिष्टद्रव्यकरणकत्वस्य सकृदेव शाब्दबोधे भानमिति पक्षश्च श्रुतप्रकाशिकादर्शितः । अत एव रक्तः पट इत्यत्र मिथोन्वय इष्टः । अग्नये पावकाय, विष्णवे शिपिविष्टायेत्यादौ कारकविभक्तिभेदादनेकविधानमाशंक्य, **पार्थसारथिमिश्रैः शास्त्रदीपिकायामुक्तम्**, 'पुराणप्रसिद्धार्थस्य भिन्नपदोपात्तत्वेऽपि एकपदस्थल इवार्थैक्यम्' इति । पुराणप्रसिद्धिस्थलेऽपि तदिष्टौ प्रत्यक्षप्रसिद्धारुणादिस्थले किंपुनः । वस्तुतः समानविभक्तिकत्वमेव प्रयोजकम्, न तु प्रमाणान्तरप्रसिद्धिः । इदमपि **समानैवेति** एवकाराभिप्रेतं श्लोके । न चार्थैक्यरूपाभेदस्य विभक्त्यर्थत्वे प्रथमातिक्रमे कारणाभावात् विशेषणविभक्तीनां प्रथमाविभक्तित्वमेवास्तु ; प्रथमायाः प्रातिपदिकार्थवाचित्वादभेदेन नामान्तरार्थेऽन्वयसंभवादिति वाच्यम्, तदा समानविभक्तित्वाभावेनाभेदाप्रतीतेः । इदमपि **समानैवे**त्येवकारज्ञाप्यम् । विभक्तीनां कारक एवानुशासनात् अभेदेऽनुशासनाभावात् **सा** विभक्तिः **त्रिरूपा** वचनत्व.समानविभक्तित्व.कारकविभक्तित्वरूपाकारत्रयवती कारकबुद्धिं जनयेत् । कारकबोधिका सत्येव व्यवहारसिद्धव्युत्पत्त्या अर्थैक्यमपि बोधयतीति भावः । तैत्तिरीये अरुणया क्रीणाति, एकहायन्या क्रीणातीति पृथक्पृथक् वाक्यश्रवणेऽपि एकवाक्यताऽभिप्रेतेत्याशयेन एकवाक्यतयैवैवं पठित्वा अधिकरणप्रवर्तनं मीमांसकैः कृतम् ; यत्र क्वापि न्यायः शिक्षणीय इति ।

एवञ्च विशिष्टपरतयैवारुणाधिकरणप्रवृत्तेररुणापदस्य गुणमात्रपरत्वाभावात् सर्वत्रार्थैक्य एव सामानाधिकरण्यमिति सर्वं खल्विदं ब्रह्मेत्यादावपि शरीरात्मभावनिबन्धनविशेषणविशेष्यतापन्नार्थबोधादन्तर्याम्यैक्यमेव विवक्ष्यते, न मतान्तरोक्तात्यन्ताभेद इति सिद्धं तदेवाग्निस्तद्वायुरित्यादावपि न देवतैक्यम्, किंत्वन्तर्याम्यैक्यमेवेति । अतो देवतानां भिन्नत्वात् भगवदुपासनं दिविषदामपि संभवतीति ॥ ४५ ॥

---

தெரிந்தாலும் ஏகஹாயநீத்ரவ்ய மென்று தெரியுமோ என்னில், இரு சொல்லும் ஒன்றோடொன்று சேர்வதால் அதுவும் தெரியும், காரகவிபக்தியாகிறதே; க்ரியையோடு தானே சேருமென்னில், இங்கே விபக்திக்கு மூன்று ஆகாரங்கள் உள. வசனவிபக்தி, காரகவிபக்தி, ஸமாநவிபக்தி என்றவாறு. வசனவிபக்தியானபடியாலே (ஏகவசனமாயிருப் பதாலே) ஒன்றென்னும் எண்ணிக்கையைக் கூறி அருணபதத்தோடு சேர்வதுபோலே, ஸமாநவிபக்தி என்கிற ஆகாரத்தாலே ஐக்யத்தைச் சொல்லி ஏகஹாயநீபதத்தோடு சேரும், காரகவிபக்தியானபடியாலே க்ரியையோடும் சேரும். அருணாதிகரணவிசார மாயிற்று.

## (2-3-6) आदावीश्वरदत्तयैव पुरुषः स्वातन्त्र्यशक्त्या स्वयं तत्तज्ज्ञानचिकीर्षणप्रयतनान्युत्पादयन् वर्तते ।

46 यद्येवं शरीरात्मभावनिबन्धनमेव सामानाधिकरण्यम्, न तु साक्षादभेदनिबन्धनम्, तर्हि 'य आत्मानमन्तरो यमयति' इत्यस्य नियतनियाम्यत्वपरतया, जीवैः स्वातन्त्र्येण कस्यापि कर्मणोऽकृततया पुण्यपापकर्तृत्वाभावेन तत्फलभोक्तृता न स्यात्। नन्वीश्वरस्य साधारणकारणत्वात्, 'प्रधानकारणीभूता यतो वै सृज्यशक्तयः' इति जीवशक्तीनामेव मुख्यकारणत्वात् न क्षतिरिति चेत्—किमिदं साधारण-कारणत्वम्, न हि सलिलवत् स संनिधानमात्रेण कारणम्, किंतु संकल्पद्वारा। वैषम्यनैर्घृण्यसूत्रे च स्वशक्त्येत्यस्य स्वकर्मणेत्यर्थो भाषितः। कर्मणेत्यस्य कर्मजनितसंकल्पेनेत्येवार्थो वक्तव्यः। अतो जैवव्यापारस्य सर्वस्य अयमिदं करोत्विवतीश्वरसंकल्पाधीनत्वात् स्वातन्त्र्यलेशाभावात् न फलप्राप्तेरवकाशः। ननु परेण जन्तुहनने प्रेरित एव यो हन्ति, स लोके शिक्ष्यत एव। एवं परप्रेरणयैव सत्कर्म कुर्वन् अनुगृह्यते चेति चेन्न; वैषम्यात्। बहिः स्थित्वा राजादयः प्रेरयन्ति, न तदाचरणकाले हस्तपादादिकं तदीयं स्वयं प्रचाल्य कारयन्ति। प्रेरणाधीनया स्वबुद्ध्यैवायमिच्छति यतते च। प्रकृते चेश्वरः, जीवः स्वशरीरमिव, स्वयमन्तः प्रविश्य भूतावेशन्यायेन प्रवर्तयन् जीवशरीरद्वारा सर्वं कारयतीति हि विशेषः। अतः शरीरात्मभावो न स्वीकार्य इत्याशंकायाम्—परायत्ताधिकरणार्थप्रतिबोधनेन परिजिहीर्षन् **आह आदाविति**। प्रतिमादिवत् वायूदकादिभिरितवत् भूताविष्टपुरुषवच्च अस्वतन्त्रत्वात् न फलभागितेति धीव्यावर्तनाय **स्वातन्त्र्यशक्त्येति** तदस्तित्वं दर्शितम्। तर्हीश्वरस्य सर्वकारणत्वभंग इति धीनिवर्तनाय **ईश्वरदत्तयैवेत्युक्तम्**। परप्रेरणया हननादिकर्तरीवात्रापि ज्ञानादिसत्त्वात् तद्वत् फलभागित्वमवर्जनीयमिति ज्ञप्तये **तत्तज्ज्ञानेत्यादिकम्**। अयं भावः—एकैकोऽपि पुण्यं वा पापं वाऽनुभयं वा तद्विषयकज्ञान-चिकीर्षाप्रयत्नवानेव निष्पादयतीति सांदृष्टिकमेतत्। भूतावेशादिस्थले तु शारीरव्यापाराः न तच्छरीर-जीवप्रयत्नाधीनाः। ततस्तत्र तस्य न फलभागिता। प्रतिमादिषु ज्ञानादेर्नैव प्रसक्तिः। अचेतनेषु

46 சேதநாசேதநங்களுக்கும் ஈச்வரனுக்கும் சரீராத்மபாவமென்கிற ஸம்பந்த முண்டென்றதால் எல்லாச் சொற்களும் ஈச்வரனைச் சொல்வதாகை யால் ஐக்யவசனங்கள் பொருந்துமென்னில், சரீராத்மபாவம் சொல்லி ஈச்வ ரன் உள்ளே புகுந்து அவன் எப்படியாட்டுகிறானோ, அப்படி ஜீவன் செய்கிறானென்றபோது ஜீவன் ஸ்வதந்த்ரனல்லனென்றேற்படுவதால் நல் லது கெட்டதென்று பிரித்து ஒருவனை அநுக்ரஹிப்பதும் ஒருவனை நிக் ரஹிப்பதும் கூடுமோ என்ற கேள்விக்கு உத்தரம் கருதி **பராயத்தாதிகரண த்தின்** பொருளைப் பணிக்கிறார்—ஈச்வரன் உள்ளே புகுந்து சரீரச்செயல் அனைத்துக்கும் காரணமாகிறானாலும் ஜீவனுக்கும் ஸ்வாதந்த்ர்யத்திற்கு அழிவில்லை. ஸ்வாதந்த்ர்யமாவது அறிவும் விருப்பமும் முயற்சியும், இம்

स्वातन्त्र्यशक्तेरीश्वरेणादत्तत्वात् । स्वातन्त्र्यशक्तिर्नाम स्वातन्त्र्यस्वरूपयोग्यता चेतनत्वमेव । स्वातन्त्र्यं नाम, 'स्वतन्त्रः कर्ता' इत्यनुशासनावगमितं ज्ञानचिकीर्षाप्रयत्नवत्त्वमेव । नित्यस्यानित्यस्य च सर्वस्येश्वरेच्छायत्तत्वादीश्वरदत्तैवेयं शक्तिः । तस्याश्च शक्तेः सर्वकार्यसाधारणकारणत्वात् तत्प्रद ईश्वरोऽपि सलिलमिव साधारणकारणं भवत्येव । एवं देहेन्द्रियादिरूपशक्तिरपि सदसत्कर्मसाधारणकारणमेवेति तत्प्रदानतोऽपि तस्य साधारणकारणता । तद्दत्तेन स्वयमार्जितेन जीवस्य किञ्चित्कार्यकर्तृत्वे ईश्वरस्य सर्वकारणता भज्येत, न त्विदानीमिति ज्ञापनार्थमपि **तद्दत्तयैवे**त्युक्तम् । **उत्पादयन् वर्तत** इत्यत्र ज्ञानाद्युत्पत्त्यनुकूलव्यापारान्तरव्यापृत इत्येतावान् अर्थो न विवक्षितः । अतो द्वितीयपादस्य तत्तज्ज्ञानादिकारणं भवति जीव इत्येतावानेवार्थः ।

ननु साधारण्या स्वातन्त्र्यशक्त्या जायमाने ज्ञानादौ विषयविशेषव्यवस्था कथम् ? कथं सर्वेऽप्येकरूपमेव कार्यं न कुर्वन्ति ?॥ सत्यम् ; तद्वैलक्षण्यं **तत्तज्ज्ञाने**ति पदेन दर्शितमेव । तत्संभवस्तु पूर्वकर्मवशादिति चेत्—ईश्वरसंकल्पविशेषादित्युक्तं भवति । एवञ्च तस्य विशेषकारणत्वमप्यस्तीति कथं जीवस्य फलभागितेति चेत्—

अत्र केचिदेवं समादधते—यो यद्विषयकज्ञानचिकीर्षाप्रयत्नवान्, स तत्फलभागिति नियमः कर्षकादिसाधारण्येन सुप्रसिद्धः । शास्त्रफलं प्रयोक्तरीति च मीमांसकाः । तत् ज्ञानादिकं स्वतो वा परतो वा, पराधीनत्वमपि पूर्णतो वा अंशतो वेत्यादिविमर्शो व्यर्थः । लोके सामान्यकारणमात्रेण विशेषकार्यायोगात् तत्तत्कर्मादिरूपे कारणे इष्टे तदधीनेश्वरसंकल्परूपविशेषकारणमपि स्वीकार्यमेव । कथमयं स्वयमेव कारयित्वा स्वयमेव दण्डयतीति चेत्—सिद्धान्ते, 'एष एव साधु कर्म कारयति यमेभ्यो लोकेभ्य उन्निनीषति, एष एवासाधु कर्म कारयति यमधो निनीषति' इति कतिपयसदसत्कर्मविषये भगवतः प्रयोजककर्तृत्वं फलप्रदत्वञ्च कथमिष्टम् ? पूर्वकर्मफलप्रदानरूपत्वात् तत् युक्तमिति चेत्—सर्वत्र तुल्यमिदम् ; एवञ्च यथा कर्माक्षकालप्रकृतिपारवश्यान्मया कृतम्, न तु केवलेन ; अतो नाहं दण्ड्य इति जीवो न विवदितुमर्हति ; पुण्यकर्मफलस्याप्यलाभप्रसंगात्—तथा ईश्वरपारवश्यान्मया कृतमित्युक्त्वा दण्डादात्मानं नापसारयितुमर्हति । यद्येवं सर्वं कर्माधीनम्, किमीश्वरेण ; सर्वं चेदीश्वराधीनम्, किं वा कर्मणेति चेत्—कर्मणामचेतनत्वात् विलम्बेन फलहेतुत्वाच्च चेतनः संकल्परूपद्वारवान्

---

மூன்றும் ஜீவனுக்கு உள. அவன் அசேதநமல்லனே. பெருங்காற்றில், அல்லது பெரும் வெள்ளத்தில் அல்லது பிசாசுபிடித்த ஸமயத்தில் ஜீவனுடைய உடலில் வரும் செயலெல்லாம் ஜீவனுக்குத் தெரியாமலே வருகின்றன. அங்குப் போலன்றி இங்கே ஈச்வரன் அசேதநத்தினின்று வேறுபடுத்த அளித்த சக்தியாலே ஸ்வத்ந்த்ரனாகவே இருக்கிறான், பிறர் ஏவி ஒருவன் வேலை செய்தாலும் செய்கிறவன் மனப் பூர்வமாகச் செய்கிறபடியால் ஸ்வ

**तत्रोपेक्ष्य ततोऽनुमत्य विदधत् तन्निग्रहानुग्रहौ**
**तत्तत्कर्मफलं प्रयच्छति ततः सर्वस्य पुंसो हरिः ॥ ४६ ॥**

---

अपेक्ष्यते । ईश्वरमात्रे कारणे वैषम्यनैर्घृण्ये प्रसज्येयातामिति कर्माप्यपेक्ष्यते । तर्हि कर्मपारवश्यादीश्वरस्य स्वातन्त्र्यं भज्येत ॥ न । अस्य कर्मण एतत्फलमिति व्यवस्थायाः तेनैव स्वातन्त्र्येण कृतत्वात् स्वकृत-व्यवस्थानुसार्येवाहमिति तदध्यवसायस्यापि तत्स्वातन्त्र्यमूलकत्वात् । अव्यवस्थादरणसमर्थोऽपि वात्सल्यात् जनानामक्षोभायैकरूप एवावतिष्ठते । अतः कर्मब्रह्मोभयं प्रमाणशरणैर्ग्रहीतव्यम् । एवं चिन्तितनिमि-षितादिसर्वव्यापारविषयेऽपि तादधीन्ये सत्यपि ज्ञानचिकीर्षाप्रयत्नाश्रयत्वप्रयुक्तस्य फलभागित्वस्य निरोधा-संभवात् कचिदंशे ईश्वरस्य कारणत्वं प्रवर्तकत्वं नेति संकोचनं व्यर्थमेव। अतः कात्स्न्र्येन परायत्त एव सन् पुण्यापुण्यफलभागपीति । अयमेव श्रीदेशिकचरणपक्ष इत्यपि केचिदाशेरते । शांकरभाष्यं प्राय एतत्पक्षेण प्रवृत्तमिति शक्यं वक्तुम् । अत्र तु श्लोके एतत्पक्षमुपेक्ष्य स्वपक्षे वैलक्षण्यं दर्शयतीति ज्ञायते ।

अत्र व्याख्यातारः—**आदौ** सर्गादौ ईश्वरदत्तयेति व्याख्यान्ति । तर्हि पूर्वसर्गे जीवानां स्वात-न्त्र्यशक्तिः किं नास्ति । प्रतिसर्गमादौ दानञ्च किमर्थम् । अतः प्रथमप्रवृत्तौ ईश्वरस्यौदासीन्यं दर्शयितुम् **आदा**विति प्रयोगः । आदौ स्वयमुत्पादयन् वर्तते=जीवः आदिमज्ञानचिकीर्षाप्रयत्नविषये स्वयं कारणमित्यर्थः । ज्ञानश्चेदं मदिष्टसाधनमिदं मत्कृतिं विना न सिध्यतीत्येवंरूपम् । ततश्चिकीर्षा मया कर्तव्यमिति । ततः कृतिः प्रयत्नः । इमानि पूर्णकर्मनिष्पत्तिपर्यन्तमनुवर्तन्ते । पठनपचन-भक्षणादयो हि प्रत्येकं बहुव्यापारसमुदायरूपाः । तत्र प्रथमव्यापारपूर्वभावीनि इमानि ज्ञानचीकीर्षणप्रयत-नानि । **उत्पादयन् वर्तते** इत्यनेन—अनुभवसिद्धस्य प्रयत्नान्तगुणवत्त्वस्यापलापो न शक्य इति, तथा नेयं प्रथमप्रवृत्तिः सर्गारम्भसामयिकप्रवृत्तिरूपा । किंत्विदानीमप्येकैककार्यारम्भे प्रथमभाविनीति च ज्ञाप्यते । ननु कस्यचिज्जीवस्य सद्विषये ज्ञानचिकीर्षाप्रयत्नाः अन्यस्यासद्विषये इति वैषम्यं कुतः । पूर्वकर्मायत्तं तदिति चेत्—तर्हीश्वरसंकल्पाधीनमित्येवोक्तं भवतीति चेत्—पूर्वकर्मवशादेवानेन देहेन्द्रि-यादिकं लब्धम् । इच्छति चेश्वरः, अयमस्मिन् समये एतत्कर्मफलमनुभवत्विति । फलञ्चानुभवरूपं कारणान्तराधीनतत्तद्विषयसंनिधानायत्तम् । नात्र एतदसदर्थरूपविषयानुभव एवास्य भवत्विति विशेष-रूपेणेश्वरेच्छा । यत्र सद्विषये असद्विषये वा ईश्वरस्य विशिष्य प्रवर्तकत्वमिष्टम्, तत्र तथा स्यात् । न सर्वत्र । अतः फललम्भकस्य भगवतो यत्र विशेषरूपः संकल्पो न भवति, तत्र स उदासीनः उपेक्षक इत्युच्यते । यद्यपि पूर्वोक्तरीत्या पूर्वकर्माधीनत्वात् सर्वथा विशेषसंकल्प एवेश्वरस्येति स्वीकारेऽपि नेश्वरे

---

தந்த்ரனே. இதில் வேறு விசேஷமும் பெரும்பாலு முண்டு. ஈச்வரன் அளித்த சக்தி பொதுவாகும், அங்கங்கு எற்படும் சூழ்நிலைக்கு இணங்க ஜீவன் ஒன்றிலிழிகிருன். அப்போது ஈச்வரன் உபேக்ஷகன், அதாவது இதனையே இவன் செய்யவேண்டுமென்று ஸங்கல்ப்பித்தானல்லன், பொது

दोषः, नापि जीवस्यादण्ड्यत्वादि—तथापि लोके प्रेरकस्य क्वचित् विशेषप्रयत्नात्, क्वचित् सामान्यप्रयत्नमात्राच्च विशेषकार्योदयदर्शनात् सेयमुभय्यपि रीतिरीश्वरेऽपि संभवन्ती नैव वारणीया। एवं स्वीकार एवेश्वरस्य क्वचिदुपेक्षकत्वं क्वचिदनुमन्तृत्वं क्वचित् विशिष्य प्रयोजकत्वमिति शास्त्रेषु विभजनं संगच्छते।

या तु—पुरुषप्रथमव्यापारोऽपि सर्वत्रेश्वरीयविशेषसंकल्पादेव। एवं प्रयोजक एव सन् अनुमन्तेत्यप्युच्यते। तस्य पूर्वकर्मफलप्रदानरूपत्वात्। उदासीन इत्यप्युच्यते, प्रतिबन्धकान्तरेण तत्कार्यप्रतिरोधो भवति चेत्, कामं भवत्विति तत्र तस्यानिर्भरताया अवगमादिति निर्वाहप्रक्रिया—सा कार्यव्यक्तिभेदेनोदासीनत्वादिधर्मसमन्वयसामञ्जस्यालाभे अगतिकगत्या स्यादादरणीया। अस्यास्मिन्नवसरे सुन्दरवस्तुसंदर्शनाद्यानन्दो भवत्विति सामान्यसंकल्प एव सति यादृच्छिकवेश्याकुलटादिवीक्षणाद्युपनिपाते ईश्वरस्तत्र साधारण्येनैव हेतुः। तदनन्तरं तस्य प्रयत्नपर्यन्तोत्पत्तिमपेक्ष्य विशिष्य तत्रैवानुमतिं ददाति। तस्य सद्विषयकत्वेऽनुग्रह इवासद्विषयकत्वे निग्रहो युक्तः। एवं प्रथमप्रयत्ने साधारणकारणत्वमात्रेण नास्य कर्मफलत्वभंगः। सामान्यसंकल्पानुकूलकर्ममूलकत्वात्।

अत्र—परमात्मनः सर्वान्तःप्रवेशे सत्यपि तदवच्छेदेन नियन्तृत्वं न स्वीकार्यम्। गुर्वादिवत् शास्त्रमूलोपदेशमात्रं साक्षात् परम्परया वा तत्कार्यं भवतु। 'मत्तः स्मृतिर्ज्ञानमपोहनञ्च' इत्येतदपि तत्तदपेक्षिणां विषये स्यात्। सर्वजननस्वरूपयोग्यतापरं वा। अतः सर्वस्य हिताहितप्रवृत्तिम् अन्तःस्थित्वा जनयतीतीदृशपरायत्तत्वं नांगीकार्यमिति पूर्वपक्षोऽप्यनुपपन्नः। 'बहिः स्थित्वा क्रियमाणस्योपदेशस्याननुवर्तनेऽपि जीवः करिष्यत्येव "ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति भ्रामयन् सर्वभूतानि" इति **गीतायामुक्तेः**, 'अन्तरो यमयति' इति श्रुतेश्चान्तर्नियमनस्य प्रसिद्धत्वात्।

तर्हि ततश्चिन्तितनिमिषितादिसर्वप्रवर्तकत्वं विशिष्यैवास्त्वित्यप्यनुपपन्नम्। पूर्वमेव कर्मसापेक्षत्वं सृष्टेरुक्तवता सूत्रकारेण, 'कृतप्रयत्नापेक्षस्तु' इति विशिष्य प्रयत्नपदघटनात्, 'सापेक्षस्तु' इति पूर्ववदनुक्तेः ईश्वरनिरपेक्षोऽपि प्रयत्नोऽस्तीति ज्ञापनात्। कर्मसापेक्षे तत्र तस्य दुर्वचत्वचिन्तायामपि सामान्यसंकल्पापेक्षत्वं विशेषसंकल्पानपेक्षत्वञ्च लोकरीत्या संभावितमादाय तत्सामञ्जस्यं संपाद्यते। उपेक्षकत्वानुमन्तृत्वादिनिर्वाहार्थमेवैवं सूत्रितत्वात्। अतो नियन्तृत्वश्रुतेः सर्वथा भंगो वा विशेषरूपेणैव सर्वत्र तत्प्रसरो वा न; किंतु यथासंभवं सामान्यतो विशेषतो वा नियमनविषयत्वं भवतीति सर्वत्र विशेषविषयकत्वनिर्बन्धाभावमात्रम्। लोकेऽपि मनुष्याणां प्रवृत्तिः सामान्यतो भवन्त्यपि निर्विशेष–

---

வாகவே ஸங்கல்ப்ப மிருக்க ஜீவன் ஒன்றிலிழிந்ததைக் கண்டு அதில் தொடர்ச்சியாகச்செயலாற்ற அவனுக்கு அனுமதி யளிக்கிறான் அதாவது துணையாகிறான், 'அவன் இஷ்டம்; இதையே செய்யட்டும்' என்று அது விஷயமாகவே ஸங்கல்ப்பித்து வருகிறான், அதன் மூலம் அனுக்ரஹமும் நிக்ரஹமும் அவற்

**दुष्कर्मस्वनिवर्तनानुमनने पुंसः करोत्यच्युतः**
**स्वातन्त्र्येण निरंकुशेन स गुणः श्रुत्या न दोषो हरेः ।**

---

सामान्यायोगात् विशेषे पर्यवस्यति ; तथेश्वरसंकल्पोऽपि क्वचिदिति । एतदनंगीकारे ईश्वरस्य दोषप्राप्तिरिति भयात् एतत्स्वीकार इति तु न ; किंतु शास्त्रपरिशीलने एवं प्रमेयावधारणात् तस्य प्रतिबोधनार्थमेव एवमुक्तिः । सर्वमिदमभिप्रेत्याह **तत्रे**त्युत्तरार्धम् । **तत्र**=आद्यज्ञानचिकीर्षाप्रयत्नेषु **उपेक्ष्य** तदुत्पादनार्थयत्नं निवारणञ्चाकृत्वा **ततः** तदनन्तरं तत्प्रवृत्ति**मनुमत्य**—द्वितीयादिप्रवृत्तौ तत्र सहकारीभूय कर्मणि निष्पन्ने यथायथं निग्रहमनुग्रहं वा विदधत् ततः यदा फलमुत्पादनीयम्, तदा **सदसत्कर्मफलं प्रयच्छति** । सद्विषये प्रवृत्तपुरुषे सहकारित्वानुग्राहकत्वफलप्रदत्वानि न संमन्यन्ते चेत्, ईश्वरत्वभंगो यथा—तथैवासद्विषयेऽपीति ॥ ४६ ॥

47 ननु पूर्वकर्मफलप्रदायित्वात् तस्य विशेषसंकल्पेन यत्र कार्यप्रेरणम्, ततो निवारणं कामं मा भूत् । यत्र तु सामान्यसंकल्पे पुरुषप्रवृत्तेरसदर्थे पर्यवसानावकाशः, तत्र तदभिज्ञो दयालुः किं न निवर्तयेत् ; असत्तो निवर्तने सति सद्विषयप्रवृत्त्या कर्मसाफल्यसंपादनसंभवात् । एवंस्थितेऽनुमननं सुतराम् अयुक्तम् । तदभावेऽपि प्रथमप्रवृत्तिवदेव सर्वप्रवृत्तिसंभवात् । तथासति पश्चाद्दण्डनमप्युचितं भवति । अन्यथा स्वयमेव सहकारितया स्थित्वा कार्यं निर्वर्त्य दण्डयतीत्यनौचित्यम् । एवम्भूतदोषास्पद. श्रौतेश्वरापेक्षया निर्दोषानुमानिकेश्वर एव सहृदयविवेकिनां हृद्य इत्यत्राह **दुष्कर्मस्वि**ति । दुष्कर्मतो न वारयतीति सत्यम् । तन्न दोषाय । एवं सर्वत्र दुष्कर्मप्रवृत्तान् वारयति चेत्, लोके दुष्कर्मोत्पत्तिः प्रागपि न स्थिता स्यादिति सदसत्कर्मविभाग एव न स्यात् । तदनिवारणमिदमभ्युपगम्यैव पुण्यपापविभागः । यदपि अनुमननाभावेऽपि कार्यं भवेदिति—तत्रोच्यते । शत्रुवधरूपाभिचारार्थतया कर्म वेदे विहितम् । तदनुष्ठानस्य सर्वथैवाभावे तद्विधिवैयर्थ्यम् । अनुष्ठिते च तस्मिन् फलप्रदात्रा, कर्ता अभिचरत्वित्यनुमन्तव्यम् । तद्वदेव पूर्वकर्मानुगुण्येन पापरुचीनां सर्वत्रानुमननमिष्टमिति नानौचित्यम् । एवञ्चान्तर्यामितया नियन्तृत्वश्रुतेरत्र विषये संकोचाकारणात् शास्त्रस्याधिकविषयकता । नचायं तस्य दोषः । तल्लक्षणाभावात् । यस्य यत् अनिष्टावहम्, तत् तस्य दोषः । न ह्यनेनेश्वरस्य किञ्चिदनिष्ट-

---

*றின்மூலமான **பலன்**களும் ஏற்படுகின்றன, ஈச்வரன் முதலிலிழிவதற்குக் கூட ப்ரதான காரணமென்றால் கூட, அது பூர்வகர்மாவுக்கு அதீனமாகையால் ஈச்வரனுக்கு தோஷமில்லை யென்றிருக்கிறபோது, பொதுவான ஸங்கல்ப்ப மிருக்குமிடத்தில் என்ன குற்றம் கூறமுடியும், எதுவும் பூர்வகர்மபலன் என்றே நினைக்கவேண்டும். (46)*

*47 கெட்டதைச் செய்ய **இழியும்** போது ஈச்வரன் ஏன் விலக்காமலி ருக்கவேண்டும், ஏன் மேன்மேல் செய்ய அனுமதி யளிக்கவேண்டும், அதனால்*

**दृष्टश्चारिषु निग्रहो गुणतया लोके न दोषात्मना**
**न स्यादाश्रयसिद्धिरौपनिषदं नो चेत् प्रमाणं वचः ॥ ४७ ॥**

---

मापद्यते । तस्य स्वतन्त्रत्वात् शिक्षकान्तराभावात् । तेन तस्य क्रियमाणत्वादेव न तस्य तदनिष्टता । तत्कृत्यमस्माकमनिष्टं स्यात् । तावता स कथं दुष्टः । तदुक्तम्, "स्वानिष्टं नेश्वरे हि प्रसजति न परानिष्टमस्य प्रतीपम्" इति । अतो दुष्टशिक्षणार्थमेवानुमत्य तत्कार्यनिर्वर्तनाद् तत्स्वातन्त्र्यस्य निरंकुशत्वमेव सिध्यतीति गुण एव । चेतनानामनेन भयोत्पादनादप्ययं गुणः ; यद्यस्माभिरीषत् पदमपथि न्यस्यते, तद्व्याजेनानुकूल इव भवन् सोऽतितीव्रं दण्डयेदिति आदित एव जागरूकैर्भाव्यमिति परिशीलनस्येदानीमवकाशसत्त्वात् । एवं श्रुत्या गुणत्वेनाभिमतस्य च नियमनादेर्न दोषत्वप्रसक्तिः । येषां सांकुशमेव स्वातन्त्र्यम् , तेषां लौकिकानामपि चेदृशव्यापारो न दोषो लक्ष्यते, किमुतेश्वरस्येत्याह **दृष्टश्चेति**। दोषः स्यान्निग्रहांशो नियमयितुरिति न ; निग्रहसामान्यस्यादोषत्वात् । अरिनिग्रहस्यादोषताया लोकसिद्धत्वात् ; प्रत्युत गुणत्वमेव । चोरादिरपि प्रजाशत्रुत्वाद् राजशत्रुरेव । चोरत्वनिर्धारणाय राजप्रेरितश्छन्नवेषः चोरत्वाभिमतस्यानुकूल इव भूत्वा चौर्यं स्वसाहाय्यकेन निर्वर्त्य चोरत्वं प्रतिष्ठाप्य दण्डनपाली करोतीति लोके दृश्यते । तथाऽयमनुमन्वानः पापं निर्वर्त्य दण्डयति । ननु तत्र चोरत्वं निरूप्य दण्डः क्रियते ; नैवमत्र दण्डनात् पूर्वं तस्मै तन्निरूपणं भवतीति चेत्—किञ्चिज्ज्ञाः दण्डकाः जातु भ्रान्त्या दण्डयेयुरिति स्वस्य तथात्वाभावज्ञापनाय तन्निरूपणम् । सर्वज्ञविषये संदेहस्यानवसरात् नैव निरूपणस्याऽऽवश्यकता । नरकादिषु प्रबलशिक्षणावसरे तत्प्रतिसंधापनमपि भवत्येव । ननु लोके चौर्ये सहायीभावश्चोरतानिर्धारणाय । अत्र तु तदनुमननं न तदर्थम् । स्वत एव निर्धारितत्वात् । अत ईश्वरो न साधुकर्मा, कारयित्वा दण्डनात् ; ईश्वरो नानुमन्ता निर्दुष्टत्वादित्यनुमीयत इत्यत्राह **न स्यादिति**। ईश्वरः सिद्धो न वा । सिद्धश्चेत् , किं श्रुत्या आहो अनुमानेन । आद्ये धर्मिग्राहकमानेन साधुकर्मत्वेनानुमन्तृत्वेन च सिद्ध इति हेतुर्बाधितः । नान्त्यः ; अनुमानेनेश्वरासिद्धेः प्रपञ्चितत्वात् । तथा चौपनिषदवाक्यस्याप्रमाणत्वे, आश्रयासिद्धतया हेतुराभास इति । अतः श्रुतिप्रतिपन्नरूप एवेश्वरः । नन्वीश्वरः संभावितवैषम्यनैर्घृण्यः निरङ्कुशस्वातन्त्र्यात् । न हि वैषम्यादिर्दोषः । स्वानिष्टं नेश्वरे हि प्रस-

---

ஈச்வரனுக்கு இழுக்கில்லையா என்னவேண்டா. அவன் ஸ்வதந்த்ரனானபடியாலே அப்படியிருப்பது அவன் இஷ்டம். அவனை நாம் கேட்கலாகுமோ. அதனால் அவனுக்கு தோஷமில்லை. அதனால் அவனுக்கு ஏதேனும் அநிஷ்டம் கஷ்டம் விளையுமாகில் தோஷமென்னலாம். அவனுக்கு யார் அதைச் செய்வது. மேலும் அரசன் விரோதிகளை நிக்ரஹிப்பது அவனுக்குக் குற்றமாகுமோ. நன்மையே விளையும் ஈச்வரன் உபேக்ஷகனும் அனுமந்தாவுமாகிறானென்று நமது கல்பனையல்ல ; வேதம் ஓதுகிறது. ஈச்வரனுக்கு

**दुष्कर्मव्यवसायतस्तु विरतो यस्तस्य पुंसः पुरा**
**भूयोजन्मसमार्जितान्यजणितान्यागांस्यनादृत्य यत् ।**
**तस्यानन्तसुखाप्तये च यतते लक्ष्मीसहायः स्वयम्**
**तत् कारुण्यपुरस्सरो गुणगणस्तस्यायमुज्जृम्भते ॥ ४८ ॥**

---

नतीति भवतैवोक्तत्वादिति चेत्—अत्राप्यनुमाने आश्रयासिद्धिः । औपनिषदवचनप्रामाण्ये च, 'समोऽहं सर्वभूतेषु' इत्यादिवचनबाधितमनुमानमिति । व्यासार्यदेशिकसूक्त्यैकरस्यममाभिरन्यत्र प्रपञ्चितम् ॥ ४७ ॥

48 ननु सर्वेषामपराधित्वात् दयादेरवकाश एव नास्तीत्यत्राह **दुष्कर्मे**ति । दयादिगुणानां विषय-दुर्भिक्षं नास्ति, सापराधानामिव अपराधनिवृत्तिव्यवसायिनामपि दर्शनात् । दुष्कर्मविषये यो व्यवसायः= कर्तव्यमेवेदमिति अध्यवसायः, ततो **विरतः** निवृत्तः दयादिगुणपात्रीभवतीत्यर्थः । अन्यत्र तु निग्रह एव गुणः । **पुरा** एतज्जन्मप्राक्काले भूयोभिः अनन्तैर्जन्मभिः समार्जितानि बुद्धिपूर्वकृतान्यपि **आगांसि** अपराधान् । अपराधफलाप्रदानमेको गुणः ; अपरिच्छिन्नसुखप्रापणमन्यो गुणः । **लक्ष्मीसहाय** इति । अपराधसहनम्, अनन्तसुखप्रदानञ्चोभयकार्यम् । 'लक्ष्म्या सह रक्षकः' इति रक्षणरूपकार्ये साहित्यश्रवणात् । सहयोगं विना लक्ष्म्या रक्षक इति श्रवणे रक्षकत्वं लक्ष्म्यधीनमिति पुरुषकारतामात्र-परतयाऽपि योज्येत ; नेदानीम् । लक्ष्म्यास्तत्कारुण्योद्भावकत्वमप्यस्ति । तत्साहित्यसंपत्तये तत्रापि व्यापृतेः । उभयकार्येषु स्वरसप्रवृत्तोऽप्रवृत्तमन्यमप्यधीनयन् साधयतीति लोकदृष्टम् । तदिदं पुरुषकारकृत्यं कारुण्यरूपयेत्यनेन ज्ञापितम् । यत्र क्वचित् लक्ष्म्या अनुक्तावपि 'कृपया पर्यपालयत्' इत्यादावेव कृपापदेनैव लक्ष्मीविवक्षाऽपि मन्तव्येत्यपि तदाशयः । लक्ष्मीसहायः इत्यस्य लक्ष्मीसहधर्मचरीक इत्यर्थः, 'सहधर्मचरी तव' इत्याद्यनुसारेण ग्राह्यः स्यात् । लक्ष्म्याः सहायभूत इति लाघवात् तत्पुरुषे आगसामनादरणे सुखप्रदाने च यतमानायां लक्ष्म्यां तन्मुखोल्लासाय स्वयमपि यतत इत्यर्थः ॥ **तत्** तस्मात् **कारुण्यपुरस्सरः** कारुण्यं पुरस्सरं यस्येति बहुव्रीहिः । कारुण्यादिर्गुणगणः । तथाचान्तर्हितं कारुण्य-

---

அவையில்லை அவன் ஜீவச்செயலில் ஸம்பந்தப்படுவதேயில்லை வெறு மனேயிருக்கிறன் படைப்பதுமட்டும் அவன் செயல். ஜீவன் தானகச் செய்த பிறகு பலன் அளிப்பதுமட்டும் அவன்செயலென்னில், இந்த அனுமானம் ஈச்வரன் ஒருவன் ஏற்பட்டபிறகுப் பேசுவதாம். அவன் இருப்பதை எதனல் அறிவது அனுமாநாதிகள் ப்ரமாணமாகா என்பது முன்னமே மொழியப் பெற்றது. ஆகையால் ஈச்வரனென்ற தர்மியேயில்லையாம். இதே ஆச்ரயா ஸித்தி வேதம் ப்ரமாணமென்னில் வேதத்தில் உபேக்ஷகனகவும் அனுமந் தாவாகவுமே சொல்லியிருப்பதால் வேறுவிதமாகான். (47)

48. தப்பு செய்ய இழியவனைத் தடுக்காமையும் பின்னே அனுமதித் திருப்பதும் தகுமென்றேம். இது நிற்க, அது செய்யத் தகாதென்று விலகின

**आदौ भेदश्रुतीनामनृतविषयता लक्षणा चैक्यवाचाम्**
**दूरेणैव प्रहाणं तदुभयघटनातत्पराणां च वाचाम् ।**

---

मुज्जृम्भते दुष्कर्मव्यवसायविरतेर्लक्ष्म्यधीनाया आश्रिते दर्शनात् । ततः शक्त्यादिगुणा अपि तदानुकूल्यविधानाय भवन्ति । किमिदं कारुण्यं नाम ? परदुःखदुःखित्वमिति केचित् । कस्तदर्थः । परेषां दुःखं दृष्ट्वा तदधीनदुःखवान् भवति भगवानित्याहुः । किमिदं दुःखं नाम ? प्रतिकूलतया कस्यचिद्वेदनमिति । कस्य प्रतिकूलतया, स्वस्य वा जीवानां वा । ईश्वरं प्रति किमपि न प्रतिकूलम् ; तेनैव जीवे तस्य साक्षाद्वा परमुखेन वोत्पाद्यमानत्वात् । जीवदुःखवत्तायास्तदिष्टत्वात् । आश्रितदुःखं न सहते इति चेत्—असहनं न स्वयमपि दुःखवत्त्वम् । किंतु तद्दुःखनिराकरणतीव्रेच्छावत्त्वम् । परदुःखदुःखीत्वस्यापि स्वयं दुःखरहित एव सन् स्वदुःखे प्राप्ते यथा तत्वविहारे यतते, तथा यतते स्वस्मिन् तदारोपेणेत्यर्थ इत्यलम् ॥ ४८ ॥

49 एवं जीवप्रवृत्तेः कात्स्न्र्येन परायत्तत्वं प्रत्यपादि । तेन शरीरात्मभावनिबन्धनमेव सामानाधिकरण्यमीश्वरस्य अचेतनेन जगता, चेतनैः सर्वैः, देवताभिश्चेति सिद्धम् । अभेदं भ्रमश्च समानाधिकरणस्थले वर्णयन्त एतेन निरस्ता इति प्राक् संगृहीतमासीत् । तदेतत् मायावादिमतनिरसनेन विशदयितुमारभते **आदा**विति । **आदा**वित्यनेन अयं दोषः प्रथम इत्युच्यते । तत्र तत्त्वसाधकत्वेन संमतानामन्यथाकल्पनरूपदोषोपन्यासः पूर्वं चतुर्भिः पद्यैः । अथ तन्मतसाधकत्वेन तदभिमतानां दूषणमिति क्रमः । एतदभिप्रायेण **आदा**विति प्रथमांशोपन्यासो ज्ञाप्यते । प्रमाणतर्काभ्यां वस्तुसाधनं सर्वेष्टम् । तत्र प्रमाणानां तर्काः सहकारिणः=इतिकर्तव्यताभूताः । प्रमाणेषु प्रत्यक्षप्राबल्ये संमन्तव्येऽपि श्रुतेरेव प्राबल्यं तैरुक्तम् ।

---

ஜீவனுக்கு அநாதிகாலமாகச் செய்த எண்ணற்ற பாவங்களையும் எண்ணுமல் விட்டிடுவதோடு நிற்காமல், அவன் அளவற்ற ஆனந்தத்தைப் பெறவும் பெருமான் பிராட்டியுடன் சேர்ந்து முயற்சி செய்கிறுன். அப்போது அவனது கருணையை முன்னிட்டு அவன் குணக்குவியல் நன்மைக்குக் கிளர்ந்த வண்ணமிருக்கிறதே. ஆக இவனே ஈச்வரன். (48)

49. உலகோடு ப்ரஹ்மத்திற்கு ஐக்யம் சரீராத்மபாவத்தாலேயென்று வேதத்தில் சொல்லப்படுகிறதென்றேம் இதை விட்டு அத்வைதிகள் சொல்லுவது எல்லா ப்ரமாணங்களுக்கும் யுக்திக்கும் சேராதென்போம். இது **आदौ** முதலில் சொல்லப்படும். பிறகு அவர்கள் யுக்தியைக் கண்டிப்போம். வேதத்தை பேதச்ருதி, அபேதச்ருதி, **घटकश्रुति** என்று மூன்ருகப் பிரிக்கலாம். பேதச்ருதியாவது கர்மகாண்டமும், சேதநம் அசேதநம் ஈச்வரன் என்ற தத்துவங்கள், அவற்றிற்குள்ள வாசிகள் ஸ்ருஷ்டி ஸ்திதி ஸம்ஹாரங்கள் உபாஸனம் பகவானைப்பெற்று கைங்கர்யம் செய்வது என்றெல்லாம்

एवमुक्त्वापि सर्वश्रुत्यन्यथाकरण एव तैर्व्याप्रियते । तदिदमादावुच्यत इत्याशयेनापि प्रथममादावित्युक्तिः । श्रुतयो भेदाभेदघटकार्थपरतया त्रेधा विभक्तुं शक्यन्ते । तत्र भेदश्रुतिरुपक्रमगता । तदप्रामाण्यकल्पनेनाभेदश्रुतिरक्षणप्रयासे उपक्रमाधिकरणविरोधः । असंजातविरोधितया तत्प्राबल्यस्य तदनुरोधेन जघन्यान्याथाकरणस्यैव न्याय्यत्वात् । एवमुपक्रमविरोध इति ज्ञापनार्थमपि आदौ भेदश्रुतीनामिति । तथा च श्लोकचतुष्कमेतच्छ्लोकपूर्वार्धं भेदश्रुतीनामिति पदाञ्च मनसिकृत्य आदाविति प्रयोगः ।- भेदश्रुतयः—कर्मकाण्डः, उपनिषद्गतानि विधिवाक्यानि चिदचिदीश्वरतद्गुणादिद्वैतप्रतिपादकवाक्यानि च । तासामद्वैतश्रुत्या बाधस्य तैरुच्यमानतया असत्यविषयकत्वमेवोक्तं भवति । तथाचाप्रामाण्यापत्तिः । ऐक्यवाचः तत्त्वमसि, अयमात्मा ब्रह्म, सर्वं खल्विदं ब्रह्म, ज्योतींषि विष्णुः भुवनानि विष्णुः इत्यादयः ; पदद्वयोपात्तार्थैक्यबोधकत्वात् । तत्र तदादिपदेन सर्वज्ञत्वबृहत्त्वविष्णुत्वादिविशिष्टे त्वमादिपदेन अभिमुखत्वाज्ञत्वादिविशिष्टे च कथ्यमाने विशेषणविरोधात् विशिष्टैक्यं दुर्वचमिति विचिन्त्य तैः प्रवृत्तिनिमित्तधर्माणां त्यागेन धर्मिमात्रपरता पदद्वयस्यापि वर्णिता, तदा विरोधाभावादैक्यं सुस्थमिति । यादृशाद्वैतवाक्ययथाश्रुतार्थरक्षणायान्यश्रुतीनां कदर्थनम्, तादृशवाक्यानामपि वाच्यार्थप्रहाणात् यथाश्रुतरक्षणं न भवत्येव । विभक्त्यर्थभूतमैक्यं रक्षितं भवतीति चेत्—सर्वेष्वपि मतेषु तद् रक्षितमेव । यदा तु बाधार्थे सामानाधिकरण्यमितीष्यते, तदा तद् ब्रह्मैवास्तीति अन्यन्नास्तीति चार्थ उच्यते ; तदा ऐक्यरूपविभक्त्यर्थत्यागोऽपि, । नञर्थस्यापि विवक्षणात् लक्षणा स्फुटा । घटककवेदवाक्यार्थस्य शरीरात्मभावस्य व्यावहारिकसत्यतयाऽप्यनंगीकारात् तद्वाक्यराशिवैयर्थ्याच्चाह दूरेणैवेति । तासामुभयस्य । वाक्यानन्त्येऽपि भेदवाक्त्वैक्यवाक्त्वरूपधर्मद्वयाभिप्रायेण उभयेत्युक्तम् । तस्य घटना=सामरस्यं तत्संपादनं वा ; तत्पराणाम् तदर्थप्रवृत्तानां, 'यस्य पृथिवी शरीरम्, यस्यात्माशरीरम्' इत्यादीनाम्, दूरेण प्रहाणम् वाच्यार्थस्य फलस्य च सर्वथैव परित्यागः । शरीरलक्षणनिर्वचनकौशलाभावेन तार्किकाद्युक्तशरीरलक्षणाभावमात्रेणौपचारिकत्वाश्रयणात् । कथं शरीरात्मभावस्योभयघटनार्थत्वमिति चेत्—भेदवाक्योपात्तस्य भेदस्याभंगेन ऐक्यवागुपात्तस्य वाच्यार्थैक्यस्य चाभंगेनार्थनिरूपणोपयोगित्वेनेति भाव्यम् । शरीरात्मभावे हि कथ्यमाने लोके जीवतद्देहयोरिव परमात्मतदतिरिक्तयोर्भेदो दृढसिद्धः । अपृथक्सिद्धत्वावगमाच्च तथाभूतधर्मवाचिनां धर्मिपर्यन्तार्थकत्वस्य, अनेनजीवेनेत्यादिवाक्योपस्कृताकृत्यधिकरणसिद्धतया चेतनाचेतनवाचिशब्दानां विशिष्ट-

---

ஓதும் வேதமும். இதில் சொல்லப்பட்டதெல்லாம் பொய்யென்பது ஒரு தவறு. அபேதச்ருதிக்காவது பொருள் சரியா. அதுவுமில்லை. தத்-த்வம் அஸி என்ற விடத்தில் தத் என்று ஸர்வஜ்ஞனாய் ஸர்வசக்தியாய் ஜகத்காரணமான ப்ரஹ்மம் சொல்லப்படுகிறது. த்வம் என்பது ஸம்ஸாரியான ஜீவனைச் சொல்லுகிறது. இப்படிப்பட்ட இரண்டும் ஒன்ருகாதென்று ஆலோசித்து ப்ரஹ்ம

**प्रत्यक्षादिप्रमाणस्वरसगतिहतिस्तर्कबाधश्च भूयान्**
**मायावादे तदेतत् सकलमितरथा लक्ष्मणाचार्यपक्षे ॥ ४९ ॥**

---

परमात्मवाचित्वे स्थिते विभक्त्यैक्यं न तत्त्वत्रयभेदविरोधीति सर्वसामञ्जस्यम् । वेदातिरिक्तप्रमाणान्यथाकरणमप्याह **प्रत्यक्षे**ति । प्रमाणानां **स्वरसगतिः** स्वतः प्रमाभूतज्ञानजनकत्वं भेदविषयकत्वञ्च । अतो ज्ञानोत्पत्तिकाल एव गृहीतस्य स्वतःप्रामाण्यस्य भेदस्य च कुतर्ककल्पितापार्थबलेन हतिरपि दोषः । प्रमाणानुग्राहकतर्काणां बाधोऽपि—ऐक्यवाचां विशिष्टैक्यपरत्वे, घटकश्रुतीनां यथावस्थितशरीरात्मभावबोधकत्वे, नेहनानास्तीत्यादीनां स्वतन्त्रवस्त्वन्तरनिषेधपरत्वे, यदेवेह तदमुत्रेत्यादीनां सर्वदेशसर्वकालव्यापितामात्रपरत्वे, एकमेवाद्वितीयमित्यादीनां नामरूपाभाव-निमित्तकारणान्तराभावादिमात्रपरत्वे च ये तर्काः, तेषां सर्वेषां स्वकल्पिततर्काभासप्रतिहतत्वकल्पना । तर्कबाधे भूयस्त्वोक्त्या पूर्वोक्तवाक्यातिरिक्तवाक्यानामपि ग्रहणमभिमतम् । तेन सर्ववेदपरित्यागसिद्धिः । एवं घटोऽस्तीत्यादौ घटसत्ताग्राहकत्वे तर्कसिद्धे, कुतर्केण ब्रह्मरूपास्तित्वमात्रस्य ग्रहणं, न घटस्येत्यनेन तर्कबाधोऽपि ग्राह्यः । अद्वैतसाधकतर्काणामत्र तर्कपदेन ग्रहणं न युक्तम् । पूर्वोक्तप्रमाणानुग्राहकाणामेव ग्राह्यत्वात् । श्रुतिप्रत्यक्षादिपदैरद्वैतविरोधि प्रमाणानामेव ग्रहणात् तदैकरस्यामायाच्च । मायावादे एतावन्तो दोषाः । स्वमते तदभावमाह **तदि**ति । अत्र **तदिद**मिति अनृतविषयतेत्यादि प्रथमान्तपदोक्तसर्वार्थग्रहणे तेषामभाव एव वक्तव्यः । **इतरथे**ति तेषामन्यथात्वं कथमुच्यत इति शंक्येत । अतो **रत्नसारिण्यां** तत्पदेन श्रुतिप्रत्यक्षादिप्रमाणतर्काणां ग्रहणमिति कृत्वा तत् सर्वमि**तरथा** अद्वैत्युक्तानृतविषयकत्वादिप्रकारविलक्षणप्रकारवदित्यर्थो वर्णितः । **तत्त्वसारास्वादिन्यां** तु तत्पदेन पूर्वोक्तार्थोपसर्जनभूत श्रुत्यादिग्रहणे स्वारस्यभंगमालोच्य अनृतविषयत्वादिदोषाणामेव ग्रहणं कृतम् । **इतरथे**त्यस्येतरथाऽर्थ उक्तः । मायावादे ते दोषाः सन्ति, अस्मन्मते ते इतरथेत्युक्तौ न सन्तीत्येवार्थ इति । तथाचार्थसिद्धप्रमाणतर्काणामबाधितस्वरसार्थविषयकत्वमित्युक्तं भवति । यद्वा अनृतविषयता, लक्षणा, दूरेण प्रहाणं भूयान् तर्कबाधश्चेति तदेतत् सकलं मायावादे । लक्ष्मणाचार्यपक्षे **इतरथा**=प्रकारान्तरम् सत्यविषयत्वादीत्यर्थः ॥ ४९ ॥

---

*குணங்கள் ஜீவதோஷங்களென்றவற்றைப் பொருளாகக் கொள்ளாமல் விட்டு சுத்தமான ஆத்மாவைமட்டும் அச்சொற்களின் பொருளாக்கி அவ்வாத்மா வொன்றுகலாமென்பர். அப்போது பதங்களின் முதற் பொருளை விட்டபடியால் லக்ஷணையென்ற தோஷம். மூன்றுவது* **घटक***ச்ருதி ; அதன் பொருள் உலகுக்கும் ப்ரஹ்மத்திற்கும் சரீராத்மபாவம். அதை அவர்கள் இசையவில்லை. இத்துடன் ப்ரத்யக்ஷ ப்ரமாணம் அனுமான ப்ரமாணம் அதற்குத் துணையா*

न द्वैतं प्रतिपादयन्त्युपनिषद्वाचः प्रसिद्धं हि तत्
किंत्वद्वैतमनन्यगोचरतया तद्वेद्यमास्थीयताम् ।
अप्राप्ते खलु शास्त्रमर्थवदिति व्यर्थः प्रयासो यतः
प्रख्यातादितरस्तु शास्त्रविषयो भेदस्त्वदद्वैतवत् ॥ ५० ॥

50. ननु भेदवाक्यानामनृतविषयकत्वमवश्यमंगीकार्यमिति शांकरशंकामनूद्य निरस्यति **ने**ति । भेदवाक्यानां भेदरूमार्थपरत्वे वैयर्थ्यमेव ; चेतनाचेतनादिभेदस्य प्रत्यक्षादिसिद्धतया तद्विषये अज्ञातज्ञापनायोगात् । तत् त्वमसि, नेह नानास्ति इत्याद्युक्तमद्वैतं तु लोकानवगतम् । अतोऽन्यप्रमाणागोचरतदर्थपरत्वे अस्य प्रमाणान्तराप्राप्तार्थपरत्वेन प्रामाण्यं सिध्येत् । एवमद्वैतवाचां प्रामाण्येऽपि भेदवाक्यवैयर्थ्यपरिहारः कथमिति चेत्—अद्वैतस्य द्वैतप्रतियोगिकतया प्रतियोग्यनुवादपूर्वकमेवाभावस्य कथनीयतया अद्वैतवाक्यैकवाक्यतया प्रामाण्यसिद्धेः । एवमितीत्यनेन तत्पक्षमनूद्य निरस्यति **व्यर्थः प्रयास** इति । द्वयोर्भावो द्विता द्वितैव द्वैतम् । द्वित्वस्य भेदव्याप्यत्वात् द्वैतपदेन भेदो विवक्ष्यते । एवञ्च तत्त्वत्रित्वादिवादस्यापि न द्वैतवादत्वहानिः । द्वैतप्रतियोगिकत्वाद्वैतम् अभेद एव । तदत्र भेदः प्राप्तः अभेदोऽप्राप्त इति अभेदशास्त्रं प्रमाणम् । भेदवाक्यजातमभेदरूपाभावप्रतियोग्यनुवादरूपमिति भवन्मतम् । तत्रोच्यते—लोके कतिपयविषये भेदव्यवहारवत् क्वचिदभेदव्यवहारोऽप्यस्ति, नीलो घटः डित्थः पाचकः इत्यादिदर्शनात् । तत् कथं तस्याप्राप्तत्वम् ? नीलघटाद्यभेदस्य प्राप्तत्वेऽपि जीवपराभेदस्याप्राप्ततया विधेयत्वमिति चेत्—घटमटादिभेदस्य प्राप्तत्वेऽपि प्रकृतिपुरुषेश्वराणां शास्त्रैकगम्यतया तन्मिथो भेदस्यापि लोकतोऽप्राप्ततया विधेयत्वं तुल्यम् । एवमीश्वरतद्गुणतत्सर्वविभूतिविषयेऽपि द्रष्टव्यम् । तदाह **प्रख्याता**दिति । लोकप्रसिद्धादन्य एव भेदः शास्त्रेणोच्यते । यथा त्वत्संमतजीवेश्वराभेद इति न द्वैतवाक्यस्यानुवादरूपता । तर्हि उभयोर्विधाने मिथोविरोध इति चेत्—सत्यम् । तदर्थं किं कर्तव्यम् । अन्यतराप्रामाण्यमगत्या स्वीकर्तव्यमिति चेत्—प्रथमावगतभेदानुसारेण पाश्चात्यवाक्यमेवाप्रमाणं भवितुमर्हति । कथं वेदस्याप्रामाण्यमिति चेत्—तुल्यम् । व्यावहारिकप्रामाण्यं भेदशास्त्रस्यास्त्विति चेत्—

யாவை யுக்திகள் எல்லாம் பேதத்தையே யறிவிக்கின்றன. அவைகளும் முரண்படும். மாயாவாதத்தில் இப்படி . சுவத்ராமாநுஜ மதத்தில் இதற்கு மாறு. சொன்னபடியே இசையப்பெற்றிருப்பதால் தோஷமேயில்லை. (49)

50. பேதமென்பது எல்லோருக்கும் ப்ரஸித்தமாகையால் அதை யறிவிக்க சாஸ்த்ரம் வேண்டுமா. அத்வைதம் = அபேதமென்பது உலகில் அறியப்படாததாகையால் அதே வேதத்தின் பொருள் என்பர். இது வீண் பிரயாசை. இவ்விடங்களில் இதுவும் அதுவுமொன்றென்று அத்வைதம்கூட உலகிற் பிரஸித்தமே அது தெரிந்தாலும், ஜீவப்ரஹ்மைக்யம் தெரியாதே யென்னில்.

**यच्छ्वेताश्वतरश्रुतिर्नृबहुतामेको बहूनामिति**
**ब्रूते ; तत्र विधिर्विशिष्टविषयस्त्वष्टाकपालादिवत् ।**

युष्माकं जीवेश्वरैक्यभ्रान्तेर्वर्तमानतया प्रातिभासिकसत्तावदभेदपरतया स्यादद्वैतवाक्यानां प्रामाण्यम् । बाधितार्थविषये कथं प्रामाण्यमिति चेत्—व्यावहारिकविषयेऽपि तुल्यम् । वस्तुतो लोकदृष्टप्रक्रियया सिंहो माणवकः, राजा पुरोहित इत्यादिवत् पाश्चात्यवाक्यमन्यथा नेयम् । एवंस्थिते यद्यद्वैतवाक्यस्यापि लक्षणां विनैव सुकरो निर्वाहः ; तदा क्व विरोधः । घटकवाक्येन शरीरीरात्मभावे कथिते 'अनेन जीवेन,' 'तदनु प्रविश्य सच्च त्यच्चाभवत्' इत्यादिवाक्यात् आकृत्यधिकरणनयाच्च जीवादिवाचिपदानां विशिष्टपरमात्मपरतया वाच्यार्थाभेद एव वाक्यार्थः भेदशास्त्रप्रमेयप्रतिष्ठापक एव लक्ष्यत इति । नन्वेवमाकृतिनयसिद्धत्वे अभेदस्य प्राप्तत्वात् अत्र कथं तद्विधिरिति चेत्—अद्वैतशास्त्रं विधायकमिति नास्माभिरुच्यते । प्रतिबन्द्यभिप्रायेण **त्वदद्वैतव**दित्युक्तम् । अतो नाभेदो विधेयः । अनुवादता च न लोकप्राप्तस्य, किंतु शास्त्रतर्कप्राप्तस्य । तत्प्रयोजनञ्च, विशिष्टरूपेणैव प्रत्यक्षस्य मुक्तौ भावितया तदनुरोधि विशिष्टानुसंधानमेवोपासने तदर्थमननादौ च कार्यम्, न तु पृथक्सिद्धतया ग्रहणमिति ज्ञापनम् । एवं सदेवेदमित्यैक्यप्रतिपादनं ब्रह्मण उपादानत्वसिद्धये, तत्त्वमसीत्यन्तेनैक्यप्रतिपादनं तदुपपादनायेत्येवं तत्रतत्र द्रष्टव्यम् । अनुवादत्वेऽपि त्वन्मत इव बाधितार्थकत्वरूपाप्रामाण्यस्य न प्रसक्तिः, प्रतिपाद्यस्य यथार्थत्वादिति सुमहद्वैषम्यम् ॥ ५० ॥

51 ननु श्वेताश्वतरोपनिषदि, "नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान्, इति जीवानां बहुत्वं कथितं लोकप्रसिद्धमेव । 'नानाऽऽत्मानो व्यवस्थातः' इति नानात्वं तर्केणापि कणादः स्थापयति । अतो जीवभेदः शास्त्रं विनैव प्राप्तः । जीवेश्वरभेदोऽप्राप्त इति चेत्—ईश्वरस्य शास्त्रैकसमधिगम्यत्वेऽपि ईश्वरे ज्ञाते पश्चात् जीवेषु तद्भेदज्ञानार्थं न शास्त्रापेक्षा । न केवलं युक्त्या । अस्य वाक्यस्य यच्छब्दघटितत्वादपि वाक्यस्यानुवादरूपत्वं ज्ञायते । तथैव लोकप्रसिद्धेः ; 'य एवं विद्वान् पौर्णमासीं' यजते' इत्यादौ मीमांसकोक्तेश्च । 'अतो भेदस्यैवंरूपस्य प्रख्यातत्वमेव । अन्यथा जीवेषु नित्यत्वबहुत्वयोः ईश्वरे इष्टप्रदत्वस्यानेकस्य विधानेऽनेकोद्देशेन विधाने च वाक्यभेदश्चेति शंकायामाह **यदि**ति । अयमर्थः—एको बहूनामिति श्वेताश-

அதுபோல் உலகில் மாடு வேறு மனிதன் வேறு, என்றவாறு வேறுபாடுகள் தெரிந்திருந்தாலும், நித்யவிபூதியுண்டு, ஸ்வர்காதிகள் உண்டு. ஜீவன் வேறு ஈச்வரன் வேறு அவன் இத்தகைய குணங்களும் விபூதிகளும் உடையவனென்று வேதம் தெரிவிக்கும் பேதம் உலகிற் ப்ரஸித்தமல்லவே, அதை வேதம் தெரிவிப்பது நியாயந்தானென்க. (50)

51. ஜீவபேதம் முன்னமே அறியப்படவில்லையாகில் ச்வேதாச்வதரோபநிஷத்து ஜீவபேதத்தையும் ஜீவர்களுக்கு ஈச்வரன் இஷ்டமெல்லாம் அளிப்பதையும் விதிப்பதால் வாக்யபேதமென்கிற தோஷம் மீமாம்ஸாகரீ

**नित्यत्वात्मबहुत्वमत्र निगमादन्यत्र विद्मः कथम्**
**प्रत्यक्त्वेन पराक्तया स्वपरयोर्मुक्तौ च भेदः स्फुटः ॥ ५१ ॥**

---

रोपनिषद्वाक्यं **नृबहुतां** चेतनानां बहुत्वं तत एव तद्भेदं ब्रूते इति यत्, विशिष्टविषयकविधिरेव तत्र—वचनरूपव्यापारे घटकः । **विधिः** अज्ञातज्ञापनरूपो व्यापारः नित्यत्वबहुत्वविशिष्टचेतनसंबन्धिफलविधायित्वविशिष्टनित्यैकचेतनविषयकः । जीवबहुत्वमपि विशिष्टान्तर्गततया विधेयमेवेति यावत् । ननु यच्छब्दोपबन्धोऽस्तीति चेत्—आह **अष्टाकपालादिव**दिति । 'यदाग्नेयोऽष्टाकपालोऽमावास्यायां पौर्णमास्यां चाच्युतो भवति' इति वाक्ये यच्छब्दसत्त्वेऽपि अष्टत्वसंख्याककपालसंस्कृतत्वविशिष्ट. अग्निदेवताक पुरोडाशविशिष्ट.कालविशेषविशिष्टयागविषयकविधिरिति मीमांसायामेवोक्तम्, "तद्गुणास्तु विधीयेरन्" इति । विशिष्टस्यैकत्वात् अनेकविधानरूपदोषो नास्तीति तत्रैवोक्तम् । अन्यथा यच्छब्दोक्तब्रह्मणोऽपि यच्छब्दवाशात् प्राप्तता स्यादिति तदप्यविधेयं स्यात् । ननु प्राप्तत्वाप्राप्तत्वरूपवैषम्यमस्तीत्यत्राह **नित्यत्वे**ति । **निगमादन्यत्र** निगमं विना अत्र=वचनव्यापारविषयभूतमात्मबहुत्वं कथं विद्मः । अप्राप्तमेव तदपि । प्रत्यक्षप्रमाणेन देहबहुत्वमेव वेद्यते, नात्मबहुत्वम् । कणादयुक्त्याऽपि नित्यत्वविशिष्टात्मबहुत्वं न वेद्येत । भवद्भिरेक एवात्मा प्रवाहानादिनानोपाधिबलादनादितया भिन्नोऽस्ति, उपाध्यत्यन्तविलये एकीभवतीत्युक्त्या वाक्यस्वरसावगतं यत् नित्यत्वसमानाधिकरणमात्मबहुत्वं नित्यत्वावच्छिन्ने बहुत्वं बहुत्वावच्छिन्ने च नित्यत्वं तस्याज्ञातत्वात् । नित्यत्वसहितेति मध्यमपदलोपिसमासः । साहित्यस्य बहुत्वे आत्मनि वाऽन्वयः । अथवा नित्यत्वेति थक्त्वप्रत्ययप्रयोगादयमर्थः—नित्यत्वं कस्यापि न लोकसिद्धम् । सर्वेषां दृश्यमानानामनित्यत्वात् नित्यत्वांशस्य प्रत्यक्षानवगम्यत्वात् ; दृष्टविरोधेनानुमानस्याप्यप्रसरात् । एकस्यापि नित्यस्यलोकतोऽसद्भौ न तद्बहुत्वसिद्धिः । नतरामात्मबहुत्वस्य । श्लोके समाहारैकवद्भावः । ननु औपाधिकबहुत्वमेवैतदर्थोऽस्तु ; तत्त्वमसीति श्रवणात् । तत् किमिति भवन्मते नित्यभेदस्वीकार इत्यत्राह **प्रत्यक्त्वेने**ति । यदि मुक्तौ आत्मैक्यम्, सर्वस्याप्यात्मनः प्रत्यक्त्वम्=अहमिति एकेनैव गृह्यमाणत्वं स्यात् ; **पराक्त्वम्**=इदमिति गृह्यमाणता न स्यात् । नतोऽस्मि नित्यसूर्यादिसमेतं भवन्तमिति मुक्तावनुसंदधानः स्वस्याहंत्वमन्येषां पराक्त्वञ्च गृह्णाति । तदुक्तं "नमउक्तिं विधेम", "बद्धाञ्जलिपुटा हृष्टा नम इत्येव वादिनः" इति च । **मुक्तौ चे**ति चकारेण जागरितादिसर्वावस्थास्वपि जीवेश्वरादिभेदः श्रुतिसिद्ध इति ज्ञाप्यते । ननु सगुणब्रह्मस्थले भेद इष्टः, स न नित्य इति चेन्न ; तदतिरिक्ते निर्गुणब्रह्मणि प्रमाणस्यैवाभावात् ॥ ५१ ॥

---

யில் வருமேயென்னில், வாராது. தனித்தனி இரண்டை அந்த வாக்யம் விதிப்ப
தில்லை, நித்யர்களாய் பலரான ஜீவர்களுக்கு எல்லா இஷ்டத்தையுமளிக்கின்
றவன் என்று சேர்த்து ஒரே விஷயம விதிக்கப்படுகிறதென்பதால்: தோஷ
மில்லை ஜீவபேதமும் ஜீவர்களுக்கு நித்யத்வமும் வேதமின்றி உலகில்
அறியப்படமாட்டாது. மோக்ஷத்திற்கூட நான், நீ அவன் என்கிற பேதம்

**सामानाधिकरण्यभागिषु पदस्तोमेषु सर्वेषु किं**
**प्रत्याय्यं व्यतिरिच्यते प्रतिपदम्, वक्तव्यमद्वैतिना ।**
**यद्वा नेति ; न चेत् , अनर्थकतया नैकातिरिक्तं पदं**
**पठ्येत प्रतिवादिनस्त्वितरथा युक्तिः स्वमासीदति ॥ ५२ ॥**

---

52 ननु समानाधिकरणवाक्यानामखण्डब्रह्मपरतया निर्गुणब्रह्मणि प्रामाण्यमस्त्येवेत्यताह **सामा-नेति** । **पदस्तोमेषु,** सत्यं ज्ञानमनन्तं ब्रह्मेत्येकः पदस्तोमः=पदसमुदायः, अयमात्मा ब्रह्म, सर्वं खल्विदं ब्रह्म, सदेवेदम् इत्यादयोऽन्ये । तत्र सत्यत्वादिधर्मविशिष्टमिति धर्माणामप्यर्थे प्रवेशो न भवति । 'एकस्मिन् अर्थे वृत्तिः सामानाधिकरण्यम्' इति एकत्वस्यावश्यकत्वात् . धर्माणां ग्रहणे च धर्मधर्मिभेदादेकता भज्येतेति चेत्—तर्हि सत्यपदेन **प्रत्याय्यात्** ज्ञाप्यात् ज्ञानपदप्रत्याय्यमन्यदिति पदे पदे अर्थभेदोऽस्ति, यद्वा नेति अद्वैतिना वक्तव्यम् । सत्यादिपदभेदेनार्थभेदोऽस्ति वा न वेति विकल्प्य प्रश्ने अद्वैतिनोत्तरं वक्तव्यमित्यर्थः । **न चेत्**—नार्थभेद इत्युत्तरं चेत्—एकमेव पदं पठ्येत ; नाधिकम् , तथासति अनर्थकतया=वैयर्थ्यात् । **इतरथा** अस्तीति पक्षे **प्रतिवादिनो युक्तिः** अद्वैतिदर्शिता एकार्थवाचित्वभंगः स्यादिति युक्तिः **स्वमासीदति** तं प्रत्यपि भवति । स्वेष्टयुक्तिविरोधः स्यादिति यावत् । भिन्नप्रवृत्तिनिमित्तानां शब्दानामेकस्मिन्नर्थे वृत्तिः सामानाधिकरण्यम्" इति शाब्दिकवाक्ये एकपदस्य नैकत्वसंख्याविशिष्टमित्यर्थः नीलाः घटाः इत्यादौ तदभावात् । किंतु अभिन्नेत्यर्थः नीलाभिन्नत्वात् घटानामिति चेत्—तर्हि सत्यत्वादिधर्माणामप्यर्थत्वेऽपि न हानिः । अतो न निर्विशेषसिद्धिः समानधिकरणवाक्यार्थविषये विशिष्टार्थकत्वेऽनुपपत्तयः परोक्ताः, तन्निरासप्रकाराश्चैषामेवाचार्यणां ग्रन्थे **प्रमेयमालायां** द्रष्टव्याः । अन्ववादि च सर्वं श्रुतप्रकाशिकायामपि ॥ ५२ ॥

53 एतावता **आदौ भेदे**त्यारब्धं यत् सर्वसंमतवेदादिसाधकप्रमाणतर्क विरोधानौचित्यम्, तत् विस्तृतम् ; अथ तन्मतसाधकतया तदुपन्यस्तं जगन्मिथ्यात्वसाधकानुमानविशेषरूपं प्रमाणं दूषयति

---

*உண்டு. அங்கும் தன்னை ப்ரக்யக்காயும் மற்றவற்றை. இது இவையென்றும் க்ரஹிக்கிருனே ; அதனின்றே அங்கும் ஜீவர்களின் பேதமிருக்கிறதே. (51)*

*52. தத் த்வம், அயம் ஆத்மா ப்ரஹ்ம, ஸர்வம் ப்ரஹ்ம என்றவாறு ஒரே விபக்தியில் விசேஷணவிசேஷ்யமாக இருக்கும் பதங்களில் ஒவ்வொரு சொல்லுக்கும் பொருள் வேறு உண்டா, அல்லதில்லையா என்றதற்கு அத்வைதி மறுமொழி கூறவேண்டும். இல்லையெனில், ஒரே சொல் போதும். வேறு சொல் படிக்கப்படாது. அன்றுகில்—ஒவ்வொன்றுக்கும் பொருளில் சிறிது வேறுபாடு உண்டாகில் எல்லாம் ஒரே பொருளில் வந்தவை என்கிற நிபந்தனைக்கு பங்கம் அத்வைதி பக்ஷத்திலுமுளதேயாம். (52)*

**दृश्यत्वादनृतं विगीतमिति यत् दृष्टान्तयन्तो जगुः**
**शुक्त्यारोपितरूप्यमत्र कतिचित्, तत्रेदमाचक्ष्महे ।**
**धर्मिग्राहकमानधिक्कृतमिदं ; सोपाधिकत्वं पुनः**
**सौत्रं व्यक्तमभङ्गुरं ; व्यभिचरल्लिंगश्च भंगाय वः ॥ ५३ ॥**

**दृश्यत्वा**दिति । **विगीतं** विवादास्पदं सत्यत्वानृतत्वविवादविषयभूतं जगत् **अनृतं**=मिथ्या दृश्यत्वात्—ज्ञानविषयत्वादिति यत् अनुमानं **जगुः कतिचित्**=मृषावादिनोऽवदन् । ननु व्याप्तिग्राहकदृष्टान्ताभावे कथमनुमानतेत्यत्राह **शुक्त्यारोपितरूप्यमत्र दृष्टान्तयन्त** इति । शुक्तिरूप्यवदिति दृष्टान्तनिर्देशो मृषावादीष्टः । **शुक्त्यारोपिते**त्यस्य शुक्तावध्यस्तेत्यर्थः । तत्रानिर्वचनीयरजतस्य शुक्तावुत्पत्तिस्तदिष्टा । तद्वत् ब्रह्मणि जगदनिर्वचनीयं कल्प्यते तैः । न तु तार्किकमत इवाजातस्यान्यत्र स्थितस्य भानम् ; रजतं चक्षुषा पश्यामीत्यनुभवविरोधादिति तन्मतम् । **अत्रारोपिते**ति प्रयोगः अन्यथाख्यात्यनिर्वचनीय-ख्यातिसाधारण्येनानुमानप्रयोगेऽपि दूषणमस्त्येवेति ज्ञापनार्थः । शुक्तिरूप्येऽप्यनिर्वचनीयत्वस्य सिद्धान्त्य-निष्ठतया तत्सिद्धवत्कारेण प्रयोगायोगेन सामान्यत उक्तावपि दुष्टतैवेत्याशयः । **तत्र** अनुमाने इदं हितैषितया तान् प्रति साक्षादेव ब्रूमः इत्यर्थः । हेतुर्बहुप्रकारेण दुष्ट इत्युच्यते **धर्मी**ति । जगत् धर्मितया निर्दिश्य हि मिथ्यात्वं साधनीयम् । अन्यथा आश्रयासिद्धौ असिद्धत्वदोषापत्तेः । प्रत्यक्षादिप्रसिद्धत्वे तैः प्रमाणैस्तस्यास्तित्वेनैव **ग्रहणात्** ज्ञानस्वतःप्रामाण्याच्च विषयसत्यत्वं धर्मिणा सह ज्ञातमिति तेन प्रमाणेन **धिक्कृतमिदं** लिंगम्=बाधितम् ; निश्चितसाध्याभाववत्पक्षकमिति यावत् । यद्वा **इदं** मिथ्यात्वं धर्मिग्राहकमानेन **बाधितम्** नास्तित्वेनावधृतमित्यर्थः । हेतुदोषस्तु प्रागुक्त एव । इदं 'नाभाव उपलब्धेः' इति सूत्राभिप्रेतम् । 'वैधर्म्याच्च न स्वप्नादिवत्' इति सूत्रे सर्वं ज्ञानं मिथ्यार्थविषयकं ज्ञानत्वात् स्वाप्न-ज्ञानवदित्यनुमानं दूषितम्, दुष्टकारणजन्यत्वं, बाधितार्थविषयकत्वञ्चोपाधिरित्युक्तम् । तद्वदत्र बाधितत्व-मुपाधिः । स्वाप्ना ह्यर्था यद्देशकालावच्छेदेन प्रतीताः, तद्देशकालावच्छेदेन बाध्यन्ते, न तथा जगत् जागरिते गृहीतमिति **सौत्रं**=सूत्रावगमितं हेतोः सोपाधिकत्वमभंगुरत्वेन व्यक्तम् । **पुनश्**शब्दः दोषसमुच्चये । बाधितत्वं सोपाधिकत्वञ्चोक्ते । बाधेन व्यभिचारोन्नयनमपि शक्यम्, परंतु दुष्टत्वावधारणानन्तरं तत् अनपेक्षितम् । सोपाधिकत्वज्ञानं तु व्यभिचरणरूपदोषोन्नयनमुखेनैव दूषकमिति तदुन्नयनमावश्यकम् । उपाधेः सत्प्रतिपक्षविधया दूषकत्वे बाधोन्नायकताऽपि स्यात् । एतावत्प्रयासं विना प्रथमत एव व्यभिचारग्रहणा-

---

53. உலகம் பொய் என்பதற்கு அத்வைதிகள் சொல்லும் அனுமானமாவது—பொய்யா மெய்யா என்ற விவாதத்திற்கு இடமானவை எல்லாம் பொய்யே; ஏன்? அறியப்படுகிறபடியால்; முத்துச்சிப்பியில் ஏறிட்ட வெள்ளிபோல் என்றவாறு. இங்கே கூறுவம்—உலகத்தை யறிவது ப்ரத்யக்ஷமோ, அனுமானமோ அல்லது வேதவாக்யமோ இவற்றால். அவை மூலம்

**मिथ्यात्वं भ्रान्तिसिद्धं यदि खलु जगतः साध्यते सिद्धसाध्यो**
**हेतुः ; सत्यः प्रपञ्चो भवति हि ; यदि वा सत्यम्, अद्वैतहानिः ।**
**साध्यं ब्रह्मस्वरूपं यदि भवति, तदा सिद्धसाध्यत्वमेव**
**स्यादेवञ्च प्रपञ्चव्युदसनसरणिर्दूरतस्ते निरस्ता ॥ ५४ ॥**

---

दपि भंग इत्याह **व्यभिचरद्**इति । दृश्यत्वाभिमते ज्ञाने मिथ्यात्वं न योगाचारेष्टम्, भवताञ्च ब्रह्मणि दृश्ये बाध्यत्वं नेष्टमिति व्यभिचार इति भावः । ब्रह्मणि दृश्यत्वं नास्मदिष्टमिति न वाच्यम् ; 'दृश्यते त्वग्र्यया बुद्ध्या' इति श्रुतिविरोधात् । तत्त्वसाक्षात्कारादेव ह्यविद्यानिवृत्तिः ॥ दृक् ब्रह्म ; तत्संबन्धस्तस्यैव कथमिति चेत्—दृशिधात्वर्थसंबन्धरूपहेतुरेव लोकप्रसिद्धः, न ब्रह्मसंबन्ध इति तदा हेत्वसिद्धिः स्यात् । तथाचेदं लिंगं व्यभिचरञ्च सत् वो भंगाय भवतीति । **वः** इति प्रयोगात् तान् प्रति साक्षादुक्तिरिति ज्ञायते । 'इदं लिंगं धर्मिग्राहकमानधिक्कृतं व्यभिचरञ्च वो भंगाय, सौत्रं व्यक्तमभंगुरं सोपाधिकत्वञ्च वो भंगाय इत्यनुक्त्वा **व्यभिचर**दिति अन्ते घटनम् सोपाधिकत्वेनापि व्यभिचरत्त्वं ज्ञेयमिति ज्ञापनाय ॥ ५३ ॥

**54** साध्यं मिथ्यात्वं द्वेधा विकल्प्यापि हेतोराभासत्वमाह **मिथ्यात्व**मिति । त्वया सिषाधयिषितं मिथ्यात्वमपारमार्थिकं पारमार्थिकं वा, आद्ये भ्रान्तिसिद्धत्वपक्षे **सिद्धसाधनम्**=हेतुः सिद्धसाध्यको भवति । पक्षतावैकल्यमनाकांक्षिताभिधानञ्चेति भावः । अस्मन्मते प्रपञ्चस्य सत्यत्वात् अपारमार्थिकमिथ्यात्वाश्रयत्वं हि सिद्धमेव । द्वितीये आह **यदिवे**ति । जगतः पारमार्थिकं मिथ्यात्वमेव साध्यते चेत्—**अद्वैतहानिः** । ब्रह्म सत्यम्, जगन्मिथ्यात्वञ्च सत्यमिति द्वैतांगीकारात् । ननु मिथ्यात्वं सत्यं सत्यब्रह्मानतिरिक्तम्, अतो न द्वैतमित्यत्राह **साध्य**मिति । साध्यमिदं मिथ्यात्वं ब्रह्मैवेति चेत्—तर्हि जगत् मिथ्येत्यस्य

---

உலகம் அறியப்படும்போது எல்லாம் இருப்பதாகவே=உண்மையாகவே அறியப்படுகிறபோது, அதை மறுக்க முடியாது. நெருப்பு உஷ்ணமாகவே அறியப்பட்டிருக்க, உஷ்ணமன்று என்று அனுமானிக்க முடியுமோ. மேலும் ப்ரஹ்மஸூத்ரத்தில் யோகாசாரனென்ற பௌத்தனை தூஷிக்கும்போது, அறியப்படும் வஸ்து அதே தேசத்தில் அதே காலத்தில், இல்லையென்று பாதிக்கப் பட்டால் பொய்யாம் அவ்வறிவு ப்ராந்தியாம் இல்லையேல் உண்மையே யென்றூர். ஆக அனுமானம் தவறுகும். மேலும் அறியப்படுகை ப்ரஹ்மத்திற்கும் உண்டு அது பொய்யன்றே. அதனுல் அனுமானத்திற்கு அநேகாந்த மென்கிற தோஷமுமாம். (53)

54. உலகம் காண்கிறபடியால் பொய் என்கிறூர்கள். இந்த அனுமானத்தால் பொய்யாம் தன்மையை ஸாதிக்கிறூர்கள். இத்தன்மை பொய்யா மெய்யா. பொய்யென்றதன்மை பொய்யாகில் உலகு மெய்யே யாகும். அத் தன்மை மெய்யாகில், அது ஒன்று, ப்ரஹ்மம் ஒன்று ஆக த்வைதமாம் அத் தன்மையும் ப்ரஹ்மமே என்னில், ப்ரஹ்மம் இருப்பது முன்னமே ஸம்மத

चिन्मात्रव्यतिरेकि वस्तु सकलं मिथ्येति जोघुष्यते
योगाचारमते यत्, औपनिषदीकर्तुं तदाकृष्यते ।
मायावादिभिरप्रतीतनिगमन्यायप्रमाणान्तर—
प्रस्थानैः ; अपहस्तयन्ति हि सह न्यायैः प्रमाणनि तत् ॥ ५५ ॥

---

कोऽर्थः । जगत् ब्रह्मसंबन्धि इति सामान्यत उच्यते चेत्—सिद्धसाधनमेव । अस्माभिरपि ब्रह्मसंबन्धस्येष्टत्वात् । मिथ्यात्वरूपब्रह्मण आश्रय इति साधने बाधः, जगतो ब्रह्मनिरूपिताधारत्वाभावात्, ब्रह्मण्यध्यस्तत्वं साध्यते चेत्—अध्यस्तत्वं सत्यमसत्यं वेति पूर्ववत् अद्वैतहानिसिद्धसाध्यत्वे वक्तव्ये । एवञ्च एतत्पद्योक्तप्रकारेणापि ते मिथ्यात्वानुमानं दूरतो निरस्तमिति ॥ ५४ ॥

55 'सोपाधिकत्वं पुनः सौत्रं सिद्धमभंगुरम्' इति स्वोक्तमुपपादयति **चिन्मात्रे**ति । वैधर्म्याच्चेति सूत्रे, जागरितप्रत्ययो निरालम्बनः प्रत्ययत्वात् स्वप्नादिप्रत्ययवदिति योगाचारानुमाने सोपाधिकत्वं शारीरकोक्तम् । वयं तु जगत् मिथ्या दृश्यत्वादित्यन्यद् ब्रूमः । कथमत्र सोपाधिकत्वम् । अस्मदनुमानं हि उपनिषत्प्रतिपाद्यस्य जगन्मिथ्यात्वस्यानुग्राहकयुक्तिरूपम्, न तु स्वतन्त्रमित्याशंकां परिहरन् धर्मिग्राहकमानधिक्कृतत्वमप्याह **चिन्मात्रे**ति । **चित्** ज्ञानम् । तदेव तन्मात्रम् । तदतिरिक्तं मिथ्येति योगाचारोऽप्याह । ज्ञानानां निरालम्बनत्वं स्वप्नन्यायेन कथयन् हि ज्ञानसत्यत्वं विषयमिथ्यात्वञ्च कथितवान् भवति । अतस्तन्मते मिथ्येति यत् **अ**तिशयेन घुष्यते, तदेव मिथ्यात्वं मायावादिभिराकृष्यते **औपनिषदीकर्तुम्**—उपनिषत्प्रतिपाद्यत्वं तत्रारोपयितुम् । ननु प्रमाणार्थत्वेन तदुपन्यासे क्रियमाणे, तस्यारोपितत्वं कथमित्यत्राह **अप्रतीते**ति । **निगमानां** वेदानां सर्वेषां **न्यायानां** तदनुग्राहकतर्काणां प्रत्यक्षानुमानरूपप्रमाणान्तराणाञ्च **प्रस्थानम्** अर्थबोधकत्वम्, स्वतः प्रामाण्यात् परमार्थतयैव सर्ववस्तुप्रतिपादकत्व**मप्रतीतम**नधिगतं यैस्तैराकृष्यते । भेदश्रुतिभिः कर्मणां तदाराध्यदेवतानां तदीशितुर्विष्णोः तद्गुणविभूत्यादीनां च पारमार्थ्यमवगम्यते । प्रत्यक्षानुमानैश्च प्राकृतप्रपञ्चस्य । सर्वं मिथ्येत्यादिकं च स्वक्रियाव्याघातादिदुस्स्थम् । अतः प्रमाणानि तर्काश्च तत् सर्वमिथ्यात्व**मपह**-

---

*மாகையால் ஸ்த்தாபிப்பதென்ன? ஆகையால் உலகத்தை இல்லையாக்கும் தர்க்கம் விலக்கப்பட்டதாம். (54)*

*55. பௌத்தரிற் சேர்ந்த யோகாசாரனென்பவனின் மதத்தில் ஞானமேயுள்ளது உலகெல்லாம் பொய் என்று பறை சாற்றப்பட்டது. அந்த வேத பாஹ்யமதத்தை வேதாந்த மதமாக்க மாயாவாதிகள் முன் வந்தார்கள். மற்ற வேதவாக்யங்கள், வேறு ப்ரத்யக்ஷாதி ப்ரமாணங்கள், யுக்திகள் இவையெல்லாம் வஸ்துக்களைக் காண்பிப்பது ஸ்ப்ஷ்டமாயிருக்க இவற்றின் நோக்கை யறியாமையே இதற்குக் காரணம். அக்கொள்கையை எல்லா ப்ரமாணங்களும் தள்ளும். (55)*

**नानात्वक्षणिकत्वयोरुपगतेरेकत्वनित्यत्वयो-**
**रप्येकत्र मते परत्र च धियो वैषम्यमस्तीति चेत् ।**
**मायावादिमतस्य सौगतमतादेतन्न, यत् तात्त्विको**
**धर्मस्तत्र मतद्वयेऽपि न धियः कश्चित् स्वरूपादृते ॥ ५६ ॥**

---

**स्तयन्ति**—निष्कासयन्ति, । उपनिषदि जगन्मिथ्यात्वं कुत्रापि नोक्तम् । स्वयंप्रकाशस्य ब्रह्मणो वेदबोध्यत्वायोगे वेदवैयर्थ्यशंकायाम् तदतिरिक्ताभाव उपनिषदर्थ इति भवद्भिरुत्प्रेक्ष्यते, स्वयंप्रकाशब्रह्म-संबन्धिगुणविभूतिविस्तारस्थापनार्था श्रुतिरित्येव स्यात् । तथासति सर्वाविरोधात् । अत्र चतुर्थपादेन शारीरके योगाचारमां भवद्भिर्यैः प्रमाणैर्न्यायैश्च निरासि ; तेषामेव भवन्मतनिरासे जागरूकत्वात् न भवन्मतसिद्धिरित्यप्युक्तम् ॥ ५५ ॥

56 ननु योगाचारमतैक्यमस्मन्मतस्य न भवति, तन्मते **धियः**=ज्ञानस्य क्षणिकत्वस्यात एव नानात्वस्य चोपगमात्, अस्मन्मते ज्ञानं नित्यम् अत एवैकञ्चेत्युपगमात् वैषम्यमस्ति हीति शंकते **नानात्वे**ति । **एकत्र मते**—योगाचारमते नानात्वक्षणिकत्वयोः, **परत्र मते** शांकरे एकत्वनित्यत्वयोः । **धिय** इति पूर्वपादेऽन्वेति । **इतिचे**दिति पूर्वपक्षसमाप्त्यनन्तरं **माये**त्यादिपदद्वयसत्त्वेऽपि, "यस्य येनास्ति संबन्धो दूरस्थस्यापि तस्य सः । अर्थतो ह्यसमर्थानामानन्तर्यमकारणम्" इति न्यायेन पूर्वमेवान्वयः । मायावादिमतस्य सौगतमताद्वैषम्यमित्यन्वयार्थः । **एतन्ने**ति तन्निरसनारम्भः । यद्वा इति चेदित्यतः प्रागेव शंकासमाप्तिः । निरसनारम्भो **माये**ति । **एतत्** वैषम्यं मायावादिमतनिष्ठमपि न भवति ; सौगतमतप्रतियोगिकमपि न भवति । वैषम्यमिदं धर्मधर्मिभेदस्वीकारिमतद्वये वक्तव्यम्, न त्विहेति भावः । हेतुमाह **यदि**ति । यस्मात् कारणात् तत्र योगाचारमायावादिमतरूपे मतद्वयेऽपि धर्मिस्वरूपात् **ऋते**=तदतिरिक्तः कश्चिदपि धर्मः पारमार्थिको नास्ति । स्वरूपं तूभयोरविशिष्टम् । ततः किमभ्युपगम्य किं निरस्यते इति ॥ ५६ ॥

57 अथ मुखान्तरेण मिथ्यात्वानुमानदूषणम्—प्रमाणतर्कसद्भावेऽपि योगाचारवत् जगन्मिथ्यात्वे ब्रह्मणोऽपि दृश्यत्वहेतुना मिथ्यात्वापत्तिः । अधिष्ठानाभावे कथं कल्पनेति चेत्—दोषाभावे कथं

---

*56. யோகாசாரமதத்தில் ஜ்ஞானங்கள் க்ஷணந்தோறும் அழிகின்றன. மேன்மேல் உண்டாகின்றன. எங்கள் மதத்தில் ஞானமாவது ப்ரஹ்மம்; அது ஒன்றே ; என்று முளதுமாம் ஆகையால் இரு மதங்களு மொன்ருகா என்று மாயாவாதி கேட்கிருர். அவர்கள் இசைந்தது, பன்மையும் க்ஷணிகத்வமும் ; நீங்கள் இசைந்தது ஒருமையும் அழிவின்மையும். இந்த தர்மங்கள் ஞானத் திற்கு உண்மையா யிருக்குமாகில் ஞானம் ஸவிசேஷமாகும். நிர்விசேஷம் ; அதற்கு ஜ்ஞேயம் கிடையாதென்பார்க்கு இந்த தர்மங்கள் இல்லை; பேச்சு மட்டுமே. ஆகையால் இருமதமும் ஒருமதமேயாகும். (56)*

**स्वरूपानादित्व.स्वपरघटने दुर्घटनता**
**प्रवाहानादित्वं पुनरिति चतस्रो हि गतयः ।**

---

कल्पनेति सोऽपि सत्यः स्यात् । अथ दोष आवश्यक एव परंतु मिथ्याभूतदोष एवालमिति ब्रूम इति चेत्—अधिष्ठानमप्यसदेवालमिति माध्यमिको विजयेत । अधिष्ठानस्यासत्यत्वे तस्याधिष्ठानान्तरे कल्प्यत्वात्, तस्याप्यसत्यत्वादनवस्थापातात् तदयुक्तमिति चेत्—दोषस्यासत्यत्वेऽपि तस्य दोषान्तराधीनतया अनवस्थापत्तिस्तुल्या । अथ तत्परिहारं चतुरा भूत्वा चतुर्धा ब्रूम इति चेत्—चातुर्यमिदमधिष्ठानासत्यत्वपक्षेऽपि प्रदर्श्यतामित्याह **स्वरूपे**ति । पद्यमिदं श्रुतप्रकाशिकायामपि विवृतम् । दोषस्य मिथ्यात्वे उपर्युपरि दोषकल्पनयाऽनवस्था स्यादिति चेत्—अत्राद्वैतिनः—अविद्याया अनादित्वान्न कल्पकापेक्षेति । अनादित्वमविद्याया एकस्या एव स्वरूपतः । यद्वाऽनेकाविद्यांगीकारात् बीजांकुरन्यायेनानवस्था न दोषाय । तत्र ब्रह्माज्ञानपक्षे एकैवाविद्या स्वरूपेणानादिर्ब्रह्माश्रिता । जीवाज्ञानपक्षे ब्रह्मणो नाश्रयत्वम्, अपित्वविद्यारूपाज्ञानविषयत्वमात्रं तस्य । तत्रानादिनानाजीवाश्रिताः नानाविद्या अनादय इति पक्षेऽपि स्वरूपानादित्वमेव । यदा तु मिथ्याभूतस्य कल्पनाधीनत्वात् स्वरूपानादिता न भवतीति मन्यते, तदा अविद्यातो जीवभावः, जीवकल्पिता चान्याविद्या, तया ततो जीवभाव इति बीजांकुरन्यायः । तदा प्रवाहानादिता । स्वपूर्वकालव्यापकस्वसजातीयकत्वं प्रवाहानादित्वम् । पुनःपदं पूर्वोक्तानादित्वैकविषयकत्वात् । अथवा कल्पकान्तरानपेक्षा भवत्वविद्या; स्वपरनिर्वाहकत्वस्वीकारात् । घटादिपरप्रत्यक्षनिर्वाहकस्य रूपस्य रूपान्तरानपेक्षया स्वनिर्वाहकत्वस्वीकारवत् । **स्वपरघटने**त्यस्य स्वपरनिर्वाहकत्वेत्यर्थः । स्वरूपानादित्वं स्वपरघटनश्चेति द्वन्द्वसमासे द्विवचनम् । यद्वा अविद्याविषयेऽनुपपत्तिः कापि न भवति । उपपत्तिसापेक्षत्वाभावात् । **दुर्घटनता**=दुर्घटत्वस्येष्टता । दुर्घटत्वस्य अनुपपद्यमानत्वस्य मिथ्यात्वसाधकतया भूषणत्वात् । अतोऽनुकूलतया नाविद्यानिरासप्रसक्तिः । असत्यभूताया अविद्याया अनवस्थाप्राप्तौ, तत्परिहारमार्गाः **इति**=एवं चतुर्विधा **गदितुं मताः**=विवक्षिताः

---

57. கயிற்றிலே தோஷத்தாலே பாம்பு என்ற கற்பனைபோல் ப்ரஹ்மத்திலே அவித்யையென்கிற தோஷத்தினாலே இவ்வுலகக் கல்பனையாம். அதனால் உலகம் பொய் அதற்குக் காரணமான தோஷமும் பொய். அன்றில், த்வைதமாகுமே என்கிறார்கள் மாயாவாதிகள். அவித்யைக்குக் கல்ப்பனை யென்றால், எதைக்கொண்டு கல்ப்பனையோ, அதொன்றை இசையவேண்டும். அதுவும் பொய்யாகில் மேன்மேல் தோஷகல்ப்பனைக்கு முடிவில்லையாகையால் **அனவஸ்தா** என்கிற தோஷம் வருமென்கிறோம் இதனைப் பரிஹரிக்க நாலு வழிகள் அவர்கள் கொள்வது—அவித்யை ஒன்றே. அசன் ஸ்வரூபம் அநாதி; அநாதிக்குக் காரணம் வேண்டா. (2) ப்ரபஞ்ச கல்ப்பனைக்கான அவித்யை தன் கல்ப்பனையையும் நிர்வஹிக்கும். இதை ஸ்வபரநிர்வாஹகமென்பது. நிறமுள்ள வஸ்துவைக் கண்ணாற் காண்கிறோம். நிறத்தைக் காண வேறு

**असत्याविद्याया गदितुमनवस्थापरिहृतौ**
**मतास्त्वेतास्तुल्याः स्फुटमसदधिष्ठानसरणौ ॥ ५७ ॥**
**रेरे खण्डनकार ! खण्डय ; भवत्पक्षः प्रतिक्षिप्यते**
**तर्कैस्त्वत्कथितैः ; ततः किमिति चेत्, अस्मन्मतं तिष्ठति ।**

---

अद्वैतिभिः । एताः गतयः **असदधिष्ठानसरणौ** अधिष्ठानमपि मिथ्याभूतमेव माध्यमिकपक्ष इवास्तु इत्यापादनपक्षे भवन्तु । अधिष्ठानान्तरापेक्षयाऽनवस्था स्वरूपानादित्वेन प्रवाहानादित्वेन स्वपरनिर्वाहकत्वेन दुर्घटत्वसंमत्या वा परिहर्तुं शक्यता तुल्या । अतः शून्यवाद एव । तथा च 'सर्वथाऽनुपपत्तेश्च' इति शून्यवादनिरसनमप्यनुपपत्तिमूलकं न शक्यं कर्तुम् अनुपपत्तेर्भूषणत्वादिति ॥ ५७ ॥

58 ननु अनवस्थादिकतिपयानुपपत्तिबलेनाविद्यानंगीकारो यदीष्यते, जगत्पारमार्थ्यवादे अनन्ता अनुपपत्तयः खण्डनकारेण मया श्रीहर्षेण दर्शिता इति सुतरां परमार्थप्रपञ्चानंगीकार एवेति शंकायां तं निरस्यन् अधिष्ठानापारमार्थ्येऽपि तुल्यमिति वक्तुं शून्यवादस्थापने तात्पर्यम्, तत्खण्डनार्थप्रयास एव त्वत्खण्डनायापि भवतीति ज्ञापन एवेति प्रकृतश्लोकपरमतात्पर्यं दर्शयति **रेरे** इति । स्वपक्षस्थापनं विना परपक्षविदलनमात्रव्यापृततया वैतण्डिक इति निकर्षं तदुक्तमार्गेण तत्पक्षनिरसनापातानालोचनरूपनिकर्षञ्च मनसि निधाय **रेरे** इति । खण्डनखण्डखाद्येति ग्रन्थनाम । खण्डनेत्येव प्रसिद्धिः ।

---

*நிறம் வேண்டுமா. இல்லை அது ஸ்வபர நிர்வாஹகம். அது போலாம் (3) கல்ப்பிக்கும் வஸ்து இராமல் அவித்யை எப்படிவரக்கூடுமென்று இது சேராது = பொருந்தாதென்பீர். பொய்யான வஸ்துவுக்குப் பொருந்தாமை என்பது அலங்காரமே. அதனால் குற்றமில்லை (4) அவித்யைக்கு வேறொன்றால் கல்ப்பனையென்றே கொள்வோம் மேன்மேல் வஸ்துகல்ப்பனையாமென்னில் ஆகுக. बीजांकुर ந்யாயம் உண்டே, விதையினின்று முளை; முளையினின்று விதை. இங்குப்போல் அநவஸ்த்தை தோஷமாகாது என்றவாறு. இப்படி உரைக்கும் அத்வைதிகளைக் கேட்போம். தோஷம்போலே ப்ரஹ்மமென்கிற अधिष्ठानமும் (கல்பிக்குமிடமும்) பொய்யாகட்டுமே. அப்போது மேன்மேல் அதிஷ்ட்டான கற்பனையென்னும் அநவஸ்த்தை வருமேயென்னில், அதற்கும் நீங்கள் சொன்ன நாலுவழிகளில் ஒன்றைக்கொள்ளலாமே. அப்போது ப்ரஹ்மமும் பொய்யாய் சூன்யவாதியான பௌத்தனின் மதமாம் (57)*

*58. மாயாத்வைதி மதஸ்த்தாபனத்திற்காக खण्डनम् = खण्डनखण्डखाद्यமென்றொரு க்ரந்தம் எழுதிய ச்ரீஹர்ஷனென்னும் அரசனே! ஒன்றையும் நிரூபிக்க முடியாதென்று காரணத்வம் கார்யத்வமெல்லாம் நிராகரிக்கும் நீ இஷ்டப்படி கண்டனம் செய். அது நீ சொன்ன குதர்க்கங்களைக் கொண்டு*

**यद्वन्माध्यमिकोक्तचिद्व्युदसनप्रत्यासतस्त्वन्मतं**
**तिष्ठत्येव, यथा च बाधकहतौ लोके स्वरूपस्थितिः ॥ ५८ ॥**

---

खण्डय। **न तु ते** किञ्चित्साधने प्रवृत्तिः। खण्डनग्रन्थमितोऽप्यधिकं विरचय। परपक्षखण्डनहेतोः स्वपक्षखण्डकत्वमस्तीति त्वत्पक्षासिद्धिरूपास्मदभीष्टसिद्ध्या त्वत्खण्डनमनुमन्यामहे। एतदाशयेनाह **भवदि**ति। अयं भावः—अविद्याशबलितात् ब्रह्मणोऽनिर्वचनीयजगदुत्पत्त्या ब्रह्मणो जगत्कारणत्वं जगतः कार्यत्वञ्च अद्वैतीष्टम्। अन्यथाख्यातिपक्षविलक्षणतया शुक्तिकायां रजतोत्पत्तिस्वीकारात्। एवमिच्छता यदि त्वया, **अन्तर्भावितसत्त्व**मित्यादिना कारणमसदिति स्थाप्यते, तर्हि कारणासत्त्वे ब्रह्मासत्त्वं स्यात्। कार्यकारणभावासत्त्वे अनिर्वचनीयोत्पत्त्यादि न स्यात्। कार्यस्यासत्त्वे कार्यस्य सदसदनिर्वचनीयता न स्यात्। अतस्त्वन्मतमपि क्षिप्तं भवति। अस्तु तर्हि द्वन्द्वयुद्धे मिथो द्वयोस्तत्तत्प्रहितेन शस्त्रेणेव द्वयोर्वध इत्याशयेन पृच्छति **ततः किमि**ति। प्रत्याह **अस्मदि**ति। त्वदुपन्यस्तहेतूनां साधकत्वमस्ति, न वा। अस्ति चेत् त्वत्पक्षोऽपि क्षिप्तः। सर्वापलापे हेतुगतसिद्धिकारणत्वस्यापि भंगात् साधकत्वाभावे अस्मत्पक्षबाधकाभावेऽस्मत्पक्षः सिद्ध एव। तर्ह्यनृतं जगदित्यस्मत्पक्षोऽपि सिध्यत्वित्यत्र प्रतिवदन् पूर्वश्लोके **अधिष्ठानसरणौ तुल्या** इत्युक्तिपर्यवसानमपि दर्शयति यद्वदिति। कारणत्वादिकं खण्डयता त्वया त्वदुक्ततर्काणां सिद्धिप्रयोजकत्वमपि खण्डितं भविष्यति। तथाचानिरस्तेऽस्मन्मतेऽस्य मायावादिमतस्य च मध्ये कतरत् ग्राह्यमिति चिन्तायाम् माध्यमिकेन जगत इव ज्ञानस्याप्यपलापमिच्छता चिद्व्युदसनं यादृशमुपन्यस्तम्, तादृशस्य तस्य **प्रत्यासतः**=निरासात् त्वन्मतं यथा तिष्ठति, तथा ज्ञानातिरिक्तवस्तुव्युदसनस्यापि योगाचारमतस्य प्रत्यासतोऽस्मन्मतं तिष्ठत्येवेति। एकनिरासे अपरस्थितिः कथमित्यत्राह **यथा** चेति। लोके बाधके निरस्ते बाध्यवस्तुनो बाधाभावात् स्थितिरिष्टा। अतः सिद्धिरिति। ननु साधकाभावे कथं बाधकाभावमात्रेण सिद्धिः। अभावसाधकाभावमात्रेण भावसिद्धिरित्यपि **न** सुवचम्; भावस्यासिद्धौ तदभावसाधकोपन्यासस्यैवासंभवादिति चेत्—तर्हि अधिष्ठानब्रह्मसिद्धिः कथम्। साधकांगीकारे सिद्धिविषयतया दृश्यत्वापत्त्या मिथ्यात्वापत्तेः। स्वयंप्रकाशत्वान्न साधकापेक्षेति चेत्—तद्धर्मस्वीकारे सविशेषता स्यात्। स्वयंप्रकाशत्वमेव च कथम्। ग्राहकान्तराभावेऽपि तद्विषयकव्यवहारादिति चेत्—तर्हि व्यवहारो व्यवह्रियमाणमिव व्यवहर्तारं व्यवहारकारकाणि च सर्वाणि साधयेत्, न ब्रह्ममात्रम्। व्यवहारविषयत्वे च त्वद्रीत्या मिथ्यात्वमेव स्यात्। प्रकाशरूपधर्मस्वीकारे द्वैतापत्तिश्च। तथाच प्रमाणाभावात् किमपि नास्तीति वदन् माध्यमिकः प्रमाणाभावरूपसाधकहेतुमभ्युपैति चेत्, न शून्यवाद इतिवत्, ब्रह्मसाधकप्रमाणस्वीकारे द्वैतापत्तिः, तदस्वीकारे ब्रह्मासिद्धिरिति त्वन्मतनिरास एव। तन्मिथ्यात्वे

---

உனது மதத்தின் கண்டனத்திற்கேயாம். ப்ரபஞ்ச காரணம் ப்ரஹ்மம்; தத்துவ ஸாக்ஷாத்காரம் மோக்ஷகாரண மென்பதெல்லாம் கண்டிக்கப்படுமே அது போல் உங்கள் மதமும் இதனால் அழியுமேயென்னில், அழியாது எங்கள் மதம் நிற்கும். நீங்கள் உலகில்லை, சைதன்யமென்பதொன்று உண்டென்கிறீர்கள்.

अधीत्वं वेद्यत्वे प्रसजति धियः कुम्भवदिति
स्वसिद्धिः सा धीत्वादिति यदिह कोऽप्याह, तदसत् ।
स्वसिद्धिः स्वाधारं प्रति हि, न परं प्रत्यपि नरम् ;
परज्ञेया सेयं ; तदपि न मतित्वं विघटते ॥ ५९ ॥

च ब्रह्मसिद्धिरेव । किञ्च ब्रह्मसिद्धिरित्यस्य कोऽर्थः । ब्रह्मसत्तेति चेत् , तस्याः न मानाधीनता । ब्रह्मज्ञप्तिरिति चेत्—वेद्यत्वमवर्जनीयमित्यलम् ॥ ५८ ॥

59 त एवाऽऽहुः—अनुभूतिरननुभाव्या अनुभूतित्वादिति । तत्र तदिष्टस्तर्कः, यद्यनुभाव्या स्यात् , अननुभूतिरेव भवेदिति । तत् प्रत्यस्यति अधीत्वमिति । धियः अनुभूतेः वेद्यत्वे अनुभाव्यत्वे दृश्यत्वे इष्टे कुम्भवत् घटस्येव अधीत्वमननुभूतित्वं प्रसजति=स्यात् इति तर्कोपस्कृतम् , सा धीः स्वसिद्धिः स्वाधीनप्रकाशा अननुभाव्या धीत्वात् अनुभूतित्वादिति यत् अनुमानं इह ब्रह्मविषये कोऽपि अद्वैती आह, तत् अनुमानमसत् । हेतुमाह स्वेति । इदमनुमानं त्वया किमर्थं प्रयुज्यते । प्रतिवादिनः प्रतिबोधनार्थमिति चेत्—तर्हि एतद्वाक्यजन्यानुभवगोचरत्वमनुभूतेरायातम् । तथाच तस्या अनुभूतित्वं त्वयैव निराकृतं स्यात् । यदि तत्तत्पुरुषीयानुभूतेस्तदन्यपुरुषानुभाव्यत्वेऽपि स्वस्वसमवेतानुभूत्यन्तरगोचरत्वं नेष्यते स्वयंप्रकाशत्वादित्युच्यते, तदा स्वाधारं स्वाश्रयं प्रति स्वसिद्धिः स्वयंप्रकाशा, न तु परं नरं प्रतीति हि सिध्यति । एवं परानुभाव्यत्वेऽपि नानुभूतित्वहानिः । एवमेवानुभूतेर्वर्तमानदशायां स्वप्रकाशत्वेऽपि कालान्तरे स्वकीयानुभवान्तरगोचरत्वेऽपि न मतित्वं विघटत इति मन्यतामिति । तथाच त्वदुक्तस्तर्कः अनुमानञ्च अप्रयोजकशंकया भग्नव्याप्तिके भवतः । अनुमानं केवलव्यतिरेक्येव वाच्यम् । तत्राप्यप्रयोजकशंकैव केवलव्यतिरेकि विस्तरेण पूर्वैः प्रतिक्षिप्तञ्च ॥ ५९ ॥

அதையும் இல்லையென்கிறான் மாத்யமிகன் பௌத்தன். அவனுடைய தூஷணத்தை தூஷித்ததாலே சைதன்ய பக்ஷம ஸித்தித்துவிடுகிறதென்கிறீர்கள். சைதன்ய ஸ்தாபனத்திற்காகத் தனி ப்ரயத்னம் செய்வதில்லை. அதனால் பாதிக்குமதை பாதித்துவிட்டால்வஸ்து நிலைப்படுதென்கிறீர்கள். அதுபோல் உங்கள் மதம் கழிந்தால் உலகில் ப்ரஸித்தமெளங்கள் மதம் நிலைப்படுதேயாம். (58)

59. அறிவென்பது தானேதோன்றும், வேறொன்றால் அறியப்படாது. அவ்வாறுகில் அறிவாகாதொழியுமென்கிறான் ஒரு பொய்யன். அது தவறு. அறிவு உண்டானவுடன் எந்த ஆத்மாவில் உண்டாகிறதோ அந்த ஆத்மாவுக்குதான் அது தானுகவே தோன்றும்; வேறு அறிவு வேண்டா. ஒருவனின் அறிவு மற்றொருவனுக்குத் தோற்றுவது அவன்தன் அறிவினுல் அதைக் காணும் போதேயாம். அப்படி அறியப்பட்டதற்காக அதற்கு இயற்கையாயுள்ள அறிவாந்தன்மை அழியாது. (59)

तथा हि प्रत्यक्षप्रभृतिमितिवर्गप्रकटितः
स्वभावो भावानामपसरति, वेद्यास्त इति, किम् ।
स्वभावप्रत्यासो यदि भवति वेद्यत्ववशतः
पटस्य ज्ञेयत्वे घटवदपटत्वं प्रसजति ।। ६० ।।
प्रकाशः कुम्भादौ जडिमवति तद्गोचरमिति-

---

60 यदि अनुभाव्या स्यात् अननुभूतिः स्यात् इति व्याप्तिरियं विशेषरूपा वा सामान्यमुखी वेति विकल्पं हृदि निधाय दूषयति **तथाहीति**। अनुभाव्यत्वं यत्र तत्राननुभूतित्वमिति विशेषव्याप्तिर्न भवति; अनुभाव्यत्वमस्तु, अननुभूतित्वं मास्त्वित्यप्रयोजकशंकासंभवात्। अनुभूत्यसाधारणधर्मस्यानुभूतित्वस्यानुभाव्यत्वमात्रेणापसरणायोगात्। तदपसरणेष्टौ यदि किञ्चिदनुभाव्यं स्यात्, तत् तदीयासाधारणधर्मविकलं स्यादिति सामान्यव्याप्तिरुक्ता भवति। इदमयुक्तम्—प्रत्यक्षादिप्रमाभूतज्ञानबलेन तत्र तत्र प्रकटितः तत्तत्पदार्थस्यासाधारणधर्मो यः, सः ते पदार्थाः **वेद्याः** प्रत्यक्षादिप्रमाणविषया इत्येतावता अपसरति किम्—न हि हीयते। यया प्रमित्या यदसाधारणधर्मवत्वेन यत् ज्ञातम्, तत्प्रमितिविषयत्वादेव तदसाधारणधर्मरहितं तदिति को ब्रूयात्। यदि वेद्यत्वमात्रेण तत्तत्स्वभावस्य **प्रत्यासः** निरासः, तर्हि पटस्य पटत्वेन ज्ञाने सति वेद्यत्वात् पटत्वरूपासाधारणधर्मराहित्यं स्यात्। अतः सामान्यव्याप्तिरपि **न** भवतीति। तर्हि अननुभूतित्वे किं प्रयोजकम्? घटादयोऽप्यनुभूतयः अनुभाव्यत्वादित्यनुमानं कुतो न भवतीति चेत्—घटोऽपि पटः अनुभाव्यत्वादिति कुतो न भवति। वस्तुतः किमिदमनुभूतित्वम्। किञ्चित्प्रकाशकत्वमिति चेत्—तर्हि किञ्चित्संबन्धिप्रकाशकारणत्वं यस्य नास्ति तस्य नानुभूतित्वमित्यस्तु। किञ्चित्प्रकाशकारणत्वं नाम किञ्चिद्विषयकाज्ञानविरोधित्वम्। अत एव भाषितम्—"एवं तर्ह्यज्ञानाविरोधित्वमेवाननुभूतित्वनिबन्धनम्; नानुभाव्यत्वमित्यास्थीयताम्" इति ।। ६० ।।

61 ब्रह्मणोऽनुभाव्यत्वेऽननुभूतित्वं स्यादिति परोक्तं दूषितम्; अथानुभाव्यत्वास्वीकारे तिरोधानानुपपत्त्या त्वदिष्टं न सिध्यतीत्याह **प्रकाश इति**। **जडिमा** जडत्वं परैकप्रकाश्यत्वम्; तद्वति

---

*60. அறிவு அறியப்பட்டால் அதன் தன்மையான அறிவென்கை தொலையுமென்றால் அதன் கருத்தென்ன? அறியப்படும் வஸ்து ஒவ்வொன்றுக்கும் ஒவ்வொரு தன்மையுளது. குடம் குடமாகிறது; அக்னி அக்னியாகிறது, மண் மண்ணுகிறதென்றவாறு அவற்றையறிந்துதான் அந்த இயற்கைகளை இசைகிறோம். அறியப்பட்டதால் வஸ்துக்களுக்கு இயற்கையான தர்மம் போகுமென்றால், படம் (துணி) அறியப்பட்டபோது குடம்போலே படமும் படத் தன்மையற்றதாக வேண்டியிருக்கும். ஆகையால் இது தவறு. (60)*

*61 குடம்முதலான வஸ்துக்கள் ஜடம் = ஸ்வயம்ப்ரகாசமாகாதவை. அவற்றிற்கு ப்ரகாசமாவது ஞானத்தைக்கொண்டு அறியப்படுகை.*

स्तिरोधिश्चैतस्या विरतिः, अजडे ब्रह्मणि पुनः ।
स्वरूपं चिन्मात्रं स्फुरणमपिधिश्च स्वनिधनं
जडं वा ब्रह्म स्यादपिधिविधुरं वाप्यपरथा ॥ ६१ ॥
पुरोवर्तिद्रव्यस्फुरणमपि रूप्यभ्रमसहं

कुम्भादौ घटादिपदार्थे कदाचित् प्रकाशः अन्यदा तिरोधिश्च दृश्यते । स च **प्रकाशः तद्गोचरमितिरेव**—तद्विषयकात्मनिष्ठं ज्ञानमेव । तद्विषयत्वमिति यावत् । **तिरोधिश्च** अप्रकाशश्च **एतस्याः** मितेः **विरतिः**=अभावः तत्प्रागभावो वा तद्ध्वंसो वा । ततः किमित्यत्राह **अजडे** इति । अजडे **पुनः** स्वयंप्रकाशे तु ब्रह्मणि मितिविषयत्वास्वीकारे प्रकाशो नाम **स्फुरणं**—न ज्ञानान्तरम् । तदपि ब्रह्मस्वरूपमेव । तदाह **चिन्मात्र**मिति । निर्विशेषचिद्रूपत्वादित्यर्थः । एवम् **अपिधिश्च** तिरोधिश्चोक्तप्रकाशाभावरूपत्वात् **स्वनिधनम्**—स्वरूपनाश एव स्यात् । न स्वरूपातिरिक्तधर्मनाशः, धर्मास्वीकारात्; नापि प्रकाशप्रागभावः, प्रकाशस्य स्थितत्वात् । तथाच ब्रह्मनाश एव स्यात् । तर्हि मित्यन्तरविषयत्वं स्वीकुर्म इत्यत्राह **जडमिति** । **अपरथा** कुम्भादिवत् मितिविषयत्वे ब्रह्म जडमस्वयम्प्रकाशं स्यात् । तथा त्वदुक्तेः । ननु सिद्धान्त इव स्वयम्प्रकाशत्वं ज्ञानान्तरवेद्यत्वञ्चेत्युभयमस्त्वित्यत्राह **अपिधी**ति । स्वरूपप्रकाशस्य धर्मत्वे स्वरूपत्वे वा तस्य सार्वकालिकत्वात् **अपिधिविधुरम्** तिरोधानानास्पदमेव स्यादित्यर्थः ॥ ६१ ॥

62 **ननु** रूप्याध्यासे पुरोवर्तिद्रव्यस्यापि भानवत् जगदध्यासे ब्रह्मस्फुरणस्याप्यावश्यकत्वात् तत् स्फुरदेवातिरोहितमेवास्त्वित्यत्र वैषम्यं दर्शयति **पुर** इति । अध्यासस्थले धर्मिस्फुरणमिष्टम्, विशेषधर्माग्रहणरूपतिरोधानञ्चापेक्षितमिति व्युत्पादनमिह चिकीर्षितम् । पुरोवर्तिनो द्रव्यस्य इदमर्थस्य **स्फुरणं** प्रकाशः । इदमिति ग्रहणमिति यावत् । शुक्तिकाया इदन्त्वेन ग्रहणं **रूप्यभ्रमसहम्** रजतमिति भ्रान्तिनिवारकं न भवति, तत्सहभाव्येव । **अपि**शब्दः विरोधिधर्माश्रयविषयकत्वेऽपीत्यर्थकः ।

*அவை ப்ரகாசிக்காமையாவது அவை விஷயமாக அறிவின்மையாம். ப்ரஹ்மமென்பது ஜடமன்று; ஸ்வயம்ப்ரகாசம், அதற்கு ப்ரகாசமும் அறிவென்று அத்வைதிகள் இசையவில்லை. ப்ரகாசம் என்ற தனிப்பட்ட தர்மமுமில்லையென்பர். அப்போது அதன் ப்ரகாசமாவது அதுவேதான். ஆயின் அவித்யையினால் அது மறைக்கப்படுகிறதென்றால் அதன் ப்ரகாசம் போயிற்றென்றதாம். அதுவும் ப்ரகாசமுமொன்றாகையாலே அந்த ப்ரஹ்மம் போயிற்றென்றே சொன்னதாகும். அது வேறு, ப்ரகாசமென்ற அறிவு வேறென்றால் அறிவுக்கு அது விஷயமாகில் ஜடமாகும். அல்லது அதுவே அறிவாகில் மறைக்கப்படாமலே யிருப்பதாகவாவது கொள்ளவேண்டும். (61)*

*62. ப்ரஹ்மம் நிர்விசேஷமென்பவரால் ஸம்ஸார மோக்ஷங்கள் இரண்டையும் ஸ்தாபிக்கமுடியாது, எதிரில் தோன்றும் வஸ்து ஒன்றை அதாவது*

न शुक्तित्वस्फूर्तिर्भ्रमविहतये या प्रभवति ।
यदि ब्रह्म प्राग्वत्, न खलु जगदध्यासविरतिः ;
क्व सिध्येदध्यासो यदि भवति शुक्तित्वसदृशम् ॥ ६२ ॥
इदं मायावादे विविधमुदितं दूषणमिह(व ?)
स्वयंज्योतिर्ब्रह्म व्यपगतविशेषं यदि, कथम् ।
मते तस्मिन्नस्मद्दृशि तु सविशेषः पुरुष इ-
त्यतद्रूपारोपस्तदुपरतिरित्यादि घटते ॥ ६३ ॥

---

अथवा **रजतभ्रमसहमपी**त्यन्वयात् रजतनिषेधबुद्धिसाधारणश्चेत्यर्थकः । **नेत्या**दि । इदं पुरोवर्तिद्रव्यग्रहणम् भ्रमविहतिफलकशुक्तित्वस्फूर्तिरूपं न भवतीत्यर्थः । दृष्टान्ते साधारणधर्मातिरिक्तो विशेषधर्मोऽस्तीत्युक्तं भवति । प्रकृते वैषम्यं व्युत्पादयति **यदी**ति । नित्यस्फुरत् ब्रह्म यदि **प्राग्वत्** प्रथमोक्तपुरोवर्तिद्रव्यरूपसामान्याकारतुल्यं चेत्, ब्रह्मज्ञानं मोक्षहेतुरित्यस्य दुर्वचत्वात् इदानीमिव वेदान्तश्रवणाद्यनन्तरमपि जगदध्यासोऽनुवृत्त एव स्यात् ; न तु तस्य **विरतिः** भंगः । यदि तद् स्फुरत् ब्रह्म **शुक्तित्वसदृशम्** विशेषाकारतुल्यम्, तदा जगत्कल्पनारूपो विक्षेपः **क्व ?** कदापि न स्यादिति भावः ॥ ६२ ॥

63 अध्यासो द्विविधः जडाध्यासः चेतनाध्यासश्चेति । पूर्वो निरस्तः ; उत्तरं निरस्यति **इद**मिति । यद्वा धर्म्यध्यासः धर्माध्यास इति द्विविधोऽध्यासः, यथा इदं रजतमिति, शंखः पीत इति च । तत्रोत्तरं निरस्यति । अथवा अहमितिग्राह्यस्वात्मभिन्नत्वेऽपि ब्रह्मणि जगदध्यासो न भवतीत्युक्तम् । अहमित्यनेनैक्यात् तस्मिन् देहात्माध्यासभोक्तृत्वाध्यासादिकं न भवतीत्याह । **इह मायावादे विविधं दूषणमिदमुदितमासीत्** । अन्यत् दूषणं ज्ञापयितुं पृच्छति **स्वय**मिति । ब्रह्मणि स्वप्रकाशत्वनिर्विशेषत्वयोः स्वीकारे कथं तस्मिन् मते **इदं घटते** । किमिति चेत्—तदाह **अस्म**दिति । **अस्मद्दृशि** अहमिति स्फुरणरूपे

---

முத்துச்சிப்பியை-முத்துச்சிப்பியென்ற விசேஷத்துடன் க்ரஹித்தால் வெள்ளியென்னும் ப்ராந்தி வாராது. பொதுவாக இது என்றுமட்டும் க்ரஹித்தால் வெள்ளியென்கிற ப்ராந்தியும் வரலாம். வராமலுமிருக்கலாம். ப்ரஹ்மத்திலே உலகென்பது ப்ரமம் = கல்ப்பனையென்கிறீர்களே. அது நிர்விசேஷமாயிற்றே. அந்த ப்ரம்ம ஸ்வரூபம் இது என்ற அம்சத்தோடொக்குமா, முத்துச்சிப்பி என்கிற விசேஷத்தோடா; முதற்பக்ஷமாகில் ப்ரஹ்மஜ்ஞானம் வந்தபிறகுகூட உலகத்தோற்றம் நீங்காது. இரண்டாவது பக்ஷமாகில் விசேஷம் அறியப்பட்டிருப்பதால் உலகத்தோற்றம் உண்டாக இடமேயில்லையாம். (62)

63. மாயாவாதத்தில் பல தோஷங்களைப் பணித்தோம். இனி இதுவும் தோஷணமாம். ப்ரஹ்மம் ஸ்வயம்ப்ரகாசமாய் நிர்விசேஷமாயிருக்குமாகில்,

**अधिष्ठाने पुंसि स्वयमहमिति स्फूर्जति वपुः-**
**प्रकाराध्यारोपः पशुरहमहं मानुष इति ।**

---

ब्रह्मणि तत्र विशेषान्तराभावेन तस्यैव विशेषस्फुरणरूपतया निर्विशेषतत्स्फुरणबाध्यः धर्माधर्मसुखदुःखकाम-क्रोधाद्यनन्तविशेषविशिष्टपुरुषत्वरूपः सर्वज्ञत्वसर्वशक्तित्वादिविशेषविशिष्टेश्वरत्वरूपश्चातद्रूपारोपः कथम्? यदि अहमिति ब्रह्मस्फुरणं भ्रमसहम्, तदा प्राप्तारोपोपरतिरेव न स्यात्। ब्रह्मज्ञानस्य तावन्मात्ररूपतया निवर्तकत्वायोगात्। अतो निवर्तकानुपपत्तिनिवृत्त्यनुपपत्त्यादिकमपि भाव्यम्। तथाच अहमिति ब्रह्मणि भासमाने देहात्मभ्रमादेर्नैवावकाश इति ॥ अत्र **दूषणमिहे**त्यत्र **दूषणमि**वेति पाठसत्त्वे तु उदितविविध-दूषणवदिदं वक्ष्यमाणमपीत्युक्त्वा द्वितीयपादादिना तद्विवरणमिति सुवचम्। **इहे**त्यस्य व्यर्थत्वाच्चैवम्। **इहे**त्यस्य **मते** इत्यत्रान्वयं **तस्मिन्** इत्यस्य च ब्रह्मणीत्यर्थमुक्त्वा **अस्मद्दृशि** अस्मत्प्रत्ययरूपे ब्रह्मणि इत्यप्यर्थमाहुः। **इहे**त्यारभ्य **घटत** इत्यनेनोक्तमर्थमपि पूर्वश्लोकैरुक्तदूषणैः सह संमेल्य पश्चात् प्रथमपादा-न्वयकल्पनया इदं विविधं दूषणं मायावादे उक्तमिति निगमयन्ति च व्याख्याने। अत्रान्योऽप्यन्वयो भाति—मायावादे पूर्वोदितदूषणमिवेदमपि। ब्रह्म स्वयंज्योतिर्निर्विशेषञ्च यदि, तस्मिन् मते कथमिदमिति वाक्यसमाप्तिः। अथ स्वयतम्—**अस्मद्दृशि तु** अस्मद्दर्शने तु पुरुषस्य सविशेषत्वात् अतद्रूपारोपतन्नि-वृत्त्यादिकं घटते ; न तु तस्मिन् मते इति। एतद्विवरणमुत्तरश्लोके ॥ ६३ ॥

64 ननु वस्तूनां सविशेषत्ववादिभवन्मतेऽपि देहात्मभ्रमः कथम्। तत्र किं देहे आत्मभ्रमः, आत्मनि देहभ्रमो वा। 'अनात्मन्यात्मबुद्धिर्या' इति पराशरोक्त्या देहे अहमित्यात्मभ्रमरूप आद्यः पक्ष इति चेन्न ; देहगतविशेषाणां सर्वेषामेव ज्ञाततया तदापि भ्रमांगीकारे पश्चादपि तन्निवृत्त्ययोगात्। नान्त्यः ; अहन्त्वस्यासाधारणस्य गृहीतत्वात्। शुक्तिरजतयोः प्राक् भेदग्रहणवत् आत्मदेहयोर्भेदस्य कदाप्यगृहीतत्वाच्चेत्यत्र स्वपक्षे भ्रममुपपादयति **अधिष्ठान** इति। अस्मदर्थे आत्मनि अधिष्ठाने वपुःप्रकाराणां पशुत्व-नरत्वस्थूलत्वनीलत्वादीनामारोपाः अहं पशुः अहं नर इत्यादयो भवितुमर्हन्ति ; पशुत्वादिव्यावर्तकधर्माणा-

---

*நானென்று அது ப்ரகாசிக்கிறபோது அந்த ப்ரகாசமே விபரீத ஞானத்திற்கு விரோதியாகையாலே ஜீவனென்றும் ஈச்வரனென்றும் விசேஷகல்ப்பனை வாரா. வருமாகில் விலக வழியில்லையாகையாலே தீரா. (63)*

*64. த்வைதமதத்தில் ஆத்மாவில் பல விசேஷங்களை யிசைந்திருப்பதால் ஆத்மா அஹம் (நான்) என்று தோன்றினாலும் அதற்கு வேதத்தில் ஓதப்பெற்ற அணுத்வம், நித்யத்வம், நிரவயவத்வமென்கிற விசேஷங்கள் அறியப்படாதவரையில் தேஹத்திற்கேயான பசுவாகை, மனிதனாகை போன்ற தர்மங்கள் ஆத்மாவில் ஏறிடப்படுகின்றன. அதனால் நான் ம்ருகம், நான் மனிதன் என்று அந்தந்தப் பிறவியில் புத்தி உண்டாகிறது. தேஹத்*

अणुत्वादौ देहव्यतिकरविदूरे च विहिते (पिहिते?)
तिरोधिः संकोचो ननु भवति तद्गोचरधियः ॥ ६४ ॥

अहंत्वज्ञातृत्वे ननु पुरुषधर्मौ न तु वपु-
र्गुणौ वस्तुस्थित्या ; तदपि न तथात्वं ननु तयोः ।

मात्मनिष्ठानां शास्त्रैकवेद्यानामणुत्वनित्यत्वादीनामगृहीतत्वात् । अहंत्वं तु वस्तुतोऽसाधारणमपि देहव्यावृत्ततया न गृहीतम् । यः प्रत्यक् सोऽहमर्थ इति निश्चयात् देहे स्वविषयकज्ञानाश्रयत्वरूपप्रत्यक्त्वे विमर्शास्पदे अहमर्थत्वस्यापि तत्र संभवपरामर्शात् । अतः अहमिति स्फूर्जति=प्रकाशमान एव तत्र पुंसि आत्मन्यध्यासो युज्यते । तृतीयपादस्य द्वितीयपादे अध्यारोप इत्यत्रान्वयः । विहिते इत्यत्र पिहिते इति पाठो युक्तः ग्रन्थाक्षरादिलिपौ वपयोरनतिभेदात् वकारः प्राप्तः । अणुत्वनित्यत्वनिरवयवत्वादिर्धर्मः देहव्यतिकरविदूरः देहसंबन्धानर्हः देहानां महत्त्वानित्यत्वसावयवत्वादिमत्तायाः प्रत्यक्षत्वात् । यद्वा देहव्यतिकरः देहात्मभ्रमः । व्यतीति प्रयोगात् देहे आत्मभ्रमः आत्मनि देहभ्रम इत्युभयमपि संभवतीति सूच्यते । पराशरोक्तरीत्या तस्यापीष्टत्वात् ॥ अत एव यथा रज्जौ सर्पाध्यासे सति तदवयवेषु इदं सर्पस्य शिरः, सर्पस्य पुच्छमिति सर्पोल्लेखः—तथा देहे अहमर्थाध्यासात् देहानुबन्धिषु गृहादिषु मम गृहमित्येवं ममकारः । अहंकारशब्दश्च देहे अहमिति भ्रमं दर्शयति । देहगतसर्वविशेषग्रहणे सत्यपि आत्मगतदेहव्यावृत्ताणुत्वादिविशेषाग्रहणादैक्ये लाघवादात्मारोपसंभवात् । तत् व्यतिकरविदूरत्वं नाम भ्रमसमानकालागृह्यमाणत्वम् । तादृशे धर्मे कर्मणा पिहिते सति अध्यारोपो घटत इति । ननु पिधानं तिरोधानमेव । स चाप्रकाशः स्वरूपनाश इति त्वत्पक्षेऽपि किं नेत्यत्राह तिरोधिरिति । स्वरूपस्फुरणस्य स्वाभाविकस्याभाव इत्युक्तौ प्रकाशनाशः स्यात् । तदापि तस्य धर्मरूपत्वे धर्मिस्वरूपनाशस्य न प्रसक्तिः । त्वन्मते धर्मतया प्रकाशस्यास्वीकारात् स दोषः । प्रकृते तु अणुत्वादीनां स्वयमस्फुरतां धर्मज्ञानैकवेद्यतया तद्विषयकधियः तिरोधानं नाम ज्ञानविकासाभावः विकासप्रागभावः संकोचरूपज्ञानावस्थाविशेषः । जातस्याणुत्वादिज्ञानस्य विस्मरणे तु प्रकाशनाशरूपः संकोच इति निरवद्यम् ॥ ६४ ॥

65 यत्तु अहंत्वादेरसाधारणधर्मत्वात् तद्ग्रहणे सति अणुत्वादिज्ञानाभावेऽपि भ्रमो न भवतीति, तत्र प्रत्याह अहंत्वेति । देहादेरचेतनत्वात् ज्ञानाश्रयत्वमेव नास्ति स्वविषयकज्ञानाश्रयत्वरूपप्रत्यक्त्वात्मकमहन्त्वं तु नतराम् । वस्तुस्थितिरियमेव । तदपि=तथापि तयोः अहंत्वज्ञातृत्वयोः तथात्वं=वपुर्गुणत्वाभावः नावगतं

திற்கு ஸம்பந்தப்படாத அணுத்வாதி தர்மங்கள் அறியப்படாதபோதாம் இது. ஆத்மா வேறு ஞானத்திஞல் அறியப்படுமென்று எமது ஸித்தாந்த மாலையால் ஆத்மாவிற்கு மறைவு = அப்ரகாசமாவது அது விஷயத்தில் அறிவு பரவாமை. சுருங்கியிருத்தல். இந்த ஞானம் வேறு. அந்தந்த ஆத்மா தானே ப்ரகாசிப்பதும் உண்டு. அந்த ப்ரகாசம் அணுத்வாதி தர்மங்களுக்கு ப்ரகாசமாவதில்லை. (64)

अनादेरध्यासादवगतम् ; इदानीं श्रुतिनय-
स्वयोगाद्यैरन्यः स्फुरति वपुरादेस्तु पुरुषः ॥ ६५ ॥
जीवन्मुक्तिमतं न जीवति यतः शस्त्रेण शास्त्रात्मना

---

**ननु**=न ज्ञातं किल । तत्र हेतुमाह **अनादेरध्यासा**दिति । ज्ञानाश्रयत्वं देहस्य न भवितुमर्हतीति बाधकज्ञानस्याजाततया अहंत्वज्ञातृत्वाश्रये देहाकाराध्यासोऽनादिरनुवर्तत इति साम्प्रतिकाध्यासे पूर्वाध्यासजनितवासनैव कारणमिति । तन्निवृत्तिश्च युक्ता, **इदानीम्** अस्मिन् जन्मनि बाधकज्ञानहेतुश्रुतिभिर्ज्ञाताभिः तदनुकूलतार्किकाद्युक्तैस्तर्कैः तन्मूलानुष्ठितेन योगेन तदनन्तरप्रत्यक्षेण च अहमर्थो देहेन्द्रियमनःप्राणधीभ्योऽन्यतया प्रकाशते । तथा **चात्मसिद्धिः**, "एवमात्मा स्वतःसिध्यन् आगमेनानुमानतः । योगाभ्यासभुवा स्पष्टं प्रत्यक्षेण प्रकाशते" इति । एवमहंत्वस्यासाधारण्ये गृहीते ततोऽपि देहादिभ्रमो न भवेत् । अहमर्थस्फुरणं तु नासाधारणतया तदवगाहि । तद्वत् भवद्भिरपि अहमर्थब्रह्मणि सत्यत्वादिधर्माङ्गीकारे भ्रमबाधौ सूपपादौ, नान्यथेति निगमनीयम् ; अद्वैतमतनिरसनशेषत्वात् स्वमतप्रस्तावस्य ॥ ६५ ॥

66 "यदि ब्रह्म प्राग्वत्" (62) इत्यत्राद्वैतमते भोगमोक्षयोरन्यतर एव स्यात्, नोभयमित्युक्तम् । तत्र निदानं ब्रह्मणो निर्विशेषत्वमिति च तत्र तदनन्तरपद्ये चादर्शि । तत्र साम्प्रतं संसारस्य प्रत्यक्षसिद्धत्वात् अपलापायोगात् मुक्तेर्नावकाश इत्यत्रैव तदुक्तिः पर्यवस्यति । एवं पश्चादपि मुक्तेस्तन्मतरीत्याऽनवकाशे सति, संसारकाल एव मुक्तिमपि यत् तन्मतैकदेशिनः तत्त्वज्ञानानन्तरभावितया कथयन्ति, तन्नूनं निषिद्धानुष्ठाने निर्बाधप्रवृत्त्यर्थकल्पितमित्यास्तिका आतिष्ठन्ते । तत्र वेदलोकस्मृतिविरुद्धतामप्याह जीवदिति । जीवन्मुक्तिपक्षस्य स्थिरजीवित्वे ते जीवन्मुक्ताः स्युः । तस्य क्षणैकजीवनस्यापि नावकाश इत्याह न **जीवती**ति । तत्पक्षपातिनि तस्य मतस्य सत्यपि जीवने परैरपि स्वीकारसंभावनावकाशे सत्येव जीवतीति

---

*65. ஆனாலும் நானென்ற தன்மையும் அறிவுடைமையும் ஆத்மாவுக்கு மட்டுமேயுள்ள தர்மமல்லவா, தேஹத்திற்காகவே, அவை தோன்றும்போது தேஹாத்ம ப்ரமம் எவ்வாறு கூடுமென்னில், இது உண்மை. ஆனாலும் தேஹத்தைவிடவேறான ஆத்மாவை அநாதி ஸம்ஸாரத்தில் வேறாகவே க்ரிஹிக்காமல் ப்ரமமே தொடர்ந்துவருவதால் அஹந்த்வம் அறிவுடைமை என்பவை தேஹத்திற்குக் கூடாதவை என்ற பகுத்தறிவு ஏற்படவில்லை. அதற்குக் காரணம் தேஹதர்மங்களுக்கும் அஹந்த்வாதிகளுக்கும் விரோதம் க்ரஹிக்கப் படாமையே. வேதத்தினின்று இவை இதற்குத் தகா என்று உணர்ந்தபிறகு தான் தேஹாத்ம ப்ரமம் போம். (65)*

*66. நமது ஸித்தாந்தத்தில் ஸம்ஸாரம் மோக்ஷம் இரண்டும் கூடும், அத்வைதிபக்ஷத்தில் கூடா என்றோம் இதுவே தடுமாற்றத்திலிருக்க. जीवन्मुक्ति*

लूनं लोकविरुद्धसिद्धि च यतस्तेनेदमादावपि ।
आपस्तम्बनिरस्तमौपनिषदं प्रस्थानमातस्थुषा-
माचार्योऽपि निराचकार खलु तत् द्वैपायनाख्यो मुनिः ॥ ६६ ॥

---

क्तं युक्तम् । अयमंशस्तु न तथेति भावः । प्रमाणतर्कपराहतत्वमस्याऽऽपस्तम्बोक्तमित्याह **यत** इत्या-
दिना । **यतः** यस्मात् कारणात् शास्त्ररूपैः **शस्त्रैः** आयुधैरिदं मतं **लूनं** छिन्नम् । शास्त्राणि हि,
'तस्य तावदेव चिरं यावन्न विमोक्ष्ये अथ संपत्स्ये' इति कृतकृत्यस्य चरमशरीरवियोगानन्तरमेव, तत्रापि
"आत्मा निष्क्रामति", "शतं चैका च हृदयस्य नाड्यः," 'तेऽर्चिषमेवाभिसंभवन्ति' ; 'तत् पुरुषोऽमानवः
स एनान् ब्रह्म गमयति' इति परमपदे परब्रह्मप्राप्तिपर्यन्तं मोक्षाभावञ्च स्पष्टं श्रावयन्ति । तर्कश्च,
बुद्धे चेत् क्षेपप्रापणम्—उत्पन्नज्ञाने जीवत्येव पुरुषे मोक्षस्य प्राप्तिर्यदि, स बुद्धः इह जन्मनि दुःखानुभवरहितः
स्यात् । तापत्रयाभिहतिरेव हि तस्यापि प्रत्यक्षमीक्ष्यते । अत इदं **लोकविरुद्धसिद्धि** । एतन्मतसिद्धिः
प्रत्यक्षविरुद्धा । **लोकविरुद्धे**त्यनेन जीवत्वमुक्तत्वयोर्मिथोविरोधादनन्वितमिदं पदमित्यपि दर्श्यते । **तेन** यत
एवम् यतश्चैवम्, तत एवेदं मतम् **आदावपि** द्वैताद्वैतयोः कतरत् साधीय इति विचारात् प्रागपि आपस्तम्बेन
महर्षिणा निरस्तम् । यद्वा **आदावपि** द्वैतपक्षेऽपि । आजन्मगृहीतत्वात् द्वैतं पूर्वम् ; अद्वैतमनन्तर-
कल्पितम् । द्वैतिभिरपि कैश्चित् जीवन्मुक्तिरिष्यते, 'चक्रभ्रमवत् धृतशरीरः' इति सांख्यकारिकास्वप्यन्ते
उक्तत्वात् । ननु किमर्थमिदं पदम् ; एतदभावेऽपि वाक्यपूर्तेरिति चेत्, आपस्तम्बेन जीवन्मुक्तिमात्र-
निराकरणात् अद्वैतमतानिरासादद्वैतमेव तन्मतमिति कश्चिन्मन्येत ; तन्निरासार्थम् । जीवन्मुक्तेः
द्वैतिष्वपि कैश्चित् स्वीकारात् तन्निरासो द्वैतांगीकारे न न घटत इति नेदमुपपन्नमिति समाधिः
आदावित्यत्र विवक्षित इति । **अपि**शब्दस्य **निरस्त**मित्यत्रान्वयेन, आपस्तम्बनिरस्तञ्च शारीरकाचार्य-
निरस्तञ्चेतीदृशसमुच्चयार्थकत्वञ्चाहुः । न चाद्वैतमापस्तम्बेष्टम्, 'पूः प्राणिनस्तस्य गुहाशयस्याहन्यमा-
नस्य विकल्मषस्य" इति जीवानां परमात्मशरीरत्वोक्त्या जीवपरयोः शरीरात्मभावस्यैव तदिष्टत्वावधारणात् ।
अथ सूत्रमपि निरासकमित्याह **औपनिषद**मिति । उपनिषदो येन प्रकारेण ब्रह्म प्रतिपादयन्ति, तं प्रकारम्
आतस्थुषाम्=उत्तरमीमांसया तत्त्वहितपुमर्थबोधनेन आदृतवतां द्वैताद्वैतविशिष्टाद्वैतसर्वमतप्रवर्तकानामाचार्यो
द्वैपायनाख्यः भगवान् बादरायणोऽपि निराचकारेदं मतम् । "तदापीतेः संसारव्यपदेशात्" इति सूत्रेण ।
आपीतेः ब्रह्मणि लयरूपमोक्षप्राप्तिपर्यन्तं संसारसद्भावोक्त्या तस्य जीवत्त्वमेव ; न तु मुक्तत्वमिति हि
ज्ञापितम् । सर्वाचार्यत्वोक्तिः अद्वैतिमतेऽपि एतत्सूत्रस्येदृशाभिप्रायदर्शित्वमस्तीति ज्ञापयति । ननु तत्र न

---

யென்றென்றைக் கட்டுகிறார்கள். ஆத்மா உடலை விடுவது புறப்படுவது அர்ச்சிராதிமார்கமாய் ப்ரஹ்ம ப்ராப்தி பிறகு மோக்ஷமென்று சாஸ்த்ரங்கள் சொல்லாநிற்க, யுக்திக்கும் பொருந்தாமலிருக்க இது எங்ஙனே கூடுமென்று ஆபஸ்தம்பர் ஆதியிலே இதை தூஷித்திருக்கிறார். வ்யாஸபகவானும்

क्व वेदान्ताः क्कामी निहितमतयः शंकरमते
वदन्तः प्रामाण्यं भ्रमविलसितं वेदवचसाम् ।
अहो यद्वत् बुद्धग्रथितफणितीनामथ च ते

---

जीवन्मुक्तिप्रस्तावः ; किंतु तत्त्वज्ञानिनां देशान्तरगमनं विनाऽत्रैव ब्रह्मतापत्तिरिति सिद्धान्तविरोधि स्थलान्तरं गते अमृतत्वश्रवणमिति शंकायां तत् अमृतत्वं अनुपोष्य=अदग्ध्वा संसारं यत् प्राप्यं फलम्, सगुणब्रह्मप्राप्तिरूपं तदेव। तदानीमपीतिः=ब्रह्मणि लयो नास्ति। लयपर्यन्तं संसारव्यपदेश एव, सगुणप्राप्तिरपि संसार एवेत्यर्थो विवक्षितः। अत्रैव तु निर्विशेषतत्त्वज्ञाने देहवियोगानन्तरं मुख्यमुक्तिः ; ततः प्राक् च जीवन्मुक्तिः। नैतत्प्रस्तावस्तत्रेति चेत्—सर्वमिदं निर्गुणब्रह्मरूपतत्त्व.तज्ज्ञानरूपोपाय.तत्फलरूपमोक्षसत्त्वे। तस्याप्रामाणिकत्वात्तु सूत्राणामस्मदिष्ट एवार्थः। किञ्च चतुर्थाध्याये सूत्रकारेण उपासन-उत्क्रमण-अर्चिरादिगमन-भोगसाम्यरूपार्थानामेवोक्तत्वात्, वाक्यार्थप्रत्यक्ष-अनुत्क्रमण-ब्रह्मैक्यरूपाद्वैतार्थानुक्तेः तादृशमुक्तेरेवाभावे जीवन्मुक्त्यभावोऽप्यर्थसिद्धः। जीवन्मुक्तौ हि कतिपयाविद्यांशाविनाशस्तदिष्टः। न च तत्त्वज्ञानान्मिथ्याभूतवस्तुलये सावशेषलयः कुत्रापि दृष्टः। अतो जीवत्त्वे सति मुक्तिर्निरवशेषा सावशेषा च न संभवत्येव। ननु 'विमुक्तश्च विमुच्यते' इति मुक्तिद्वयनिर्वाहः कथमिति चेत्—'यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि स्थिताः' इति वैराग्यरूपामुख्यार्थः विमुक्त इति प्रथमपदस्यास्तु। ईदृशमेव भवदिष्टश्चेत्, भवन्मते विलक्षण-जीवन्मुक्तिस्थापन.प्रतिषेधकोलाहलः कथं प्राप्त इत्यलं बहुना। **द्वैपायनेति**। "द्वीपे बदरिकामिश्रे बादरायणमच्युतम्। पराशरात् सत्यवती पुत्रं लेभे परन्तपम्" इति बादरायणत्वं द्वैपायनत्वञ्च ॥ ६६ ॥

67 ननु अपच्छेदनयात् निर्विशेषतत्त्वमेव शास्त्रार्थ इति निर्णये सिद्धे तदनुसारेणैव हितपुरुषार्थस्वरूपनिरूपणं कार्यम्। तत्रेदं निष्कृष्टं ब्रूमः—नोपासननिरपेक्षात् तत्सापेक्षाद्वा तत्त्वज्ञानान्मुक्तिः। नित्यमुक्तत्वाद् ब्रह्मणः। तच्च वस्तुतो जगदभावात्। अतो न मुक्त्यर्थं प्रयासः कार्य इत्येव श्रुतिविवक्षितमिति प्रत्यवतिष्ठमानं प्रतिरोद्धुं अपच्छेदनय—उपक्रमनय—उत्सर्गापवादनय.सामान्यविशेषनय-वैशद्यविधित्सया प्रवृत्तः अद्वैतिमतापच्छेदनयादरणे भवन्महदनिष्टं दर्शयति क्वेति। वेदान्ता वेदार्थनिर्णयार्थं प्रवृत्ताः, न पुनर्वेदानामन्तं विनाशं विधातुम्। शङ्करमते जगन्मिथ्यात्वादौ निहितमतयस्तु वेदवाक्यानां तात्त्विकं प्रामाण्यं नास्ति, तत्त्वज्ञानबाध्यार्थविषयकत्वात्। अतः प्रामाण्यभ्रान्तिरेवेत्याहुः। तर्हि बुद्धेन स्वबुद्ध्या ग्रथिताः याः **फणितयः** वाचः अप्रामाणिकार्थपरत्वेन वैदिकैर्निर्धारिताः,

---

மோக்ஷம் பெறும்வரையில் ஸம்ஸாரமே இரண்டும் சேரா என்று அருளினார். ஆகையால் இது பொருந்தாது. (66)

67. வேதாந்த வாக்யங்கள் கம்பீரமானவை. கர்மகாண்டத்துடன் கூடி விளங்குமவை. அவையெங்கே? சங்கராசார்ய மதத்தைத் தழுவி வேத வாக்யமெல்லாம் அப்ரமாணமென்று வாதிக்கும் இவ் வாதிகள் எங்கே? பௌத்தன் கல்பித்துப் பேசிய பேச்சுக்கும் வேதத்திற்கும் ஸாம்யம்தானே

कलिग्राहग्रस्तैरगणिषत वेदान्तिन इति ॥ ६७ ॥
यत् सामान्यविशेषवर्त्मसु गुणप्रत्यास-विध्यात्मसु
त्रय्यन्तेषु जनार्दनप्रणयिषु प्राबल्यदौर्बल्ययोः ।

तासां वेदवचसाञ्चाविशेष इति बाह्यमतप्रवृत्ता न तैर्वेदान्तिभिर्वारणीयाः, न च वैदिकसनातनधर्मस्थापने प्रयतितव्यम् । एवंवादनिष्ठान् वेदान्तित्वेन यद् गणयन्ति, तत्र नूनं जनानां कलिरूपेण ग्राहेण ग्रस्तत्वमेव कारणम् । अतः शंकरमतवचसामेवाप्रामाण्यम् । मोहनार्थप्रवृत्ते मते प्रामाणिकत्वभ्रान्त्या पश्चात्तैः प्रवृत्तम् । तदत्र वेदवचसां कार्त्स्न्येन प्रामाण्यं यथा स्यात्, तथा वक्ष्याम इति पीठिका ॥ ६७ ॥

68 द्वैतशास्त्राणामप्रामाण्यस्वीकारोऽनुचित इत्यत्राद्वैतिभिरुक्तम्, सति विरोधे वेदवाक्येऽप्य-प्रामाण्यस्वीकारः पूर्वमीमांसकैरेवापच्छेदाधिकरणे दर्शित इति नायं दोष इति । तदिदं तन्नयव्याजीकरणं वैष-म्यात् तन्न्यायाप्रवृत्तिमभिसंधाय निराकरोति **यदिति** । **त्रय्यन्तेषु** वेदान्तवाक्येषु । कीदृशेषु ? **सामान्य-विशेषवर्त्मसु**—सामान्यरूपविशेषरूपार्थसञ्चारगोचरेषु; सामान्यविशेषविषयकेष्विति यावत् । तेषां विधिनिषे-धोभयरूपत्वमाह **गुणे**ति । गुणेत्युपलक्षणम्, 'यद् ब्रह्मणो गुणविकारशरीर' इति श्लोकोक्तानामन्येषाम् । गुणादीनां **प्रत्यासाः** निषेधाः तथा विधयश्च सन्तीति तद्रूपेषु । गुणादिसामान्यनिषेधरूपाः तद्विशेष-निषेधरूपाः तथा तत्सामान्यविधिरूपाः तद्विशेषविधिरूपाश्च वेदान्ताः सन्ति—निर्गुणं निष्कलम् इति, अपहतपाप्मा विजरः इति, नान्तं गुणानां गच्छन्ति तेनानन्तोऽयमुच्यते इति, यः सर्वज्ञः, सत्यकामः सत्यसंकल्प इत्येवमादयः । ते सर्वे **जनार्दनप्रणयिनः** विष्णुरूपसविशेषब्रह्मतत्पराः । न च सगुणो-पासनस्य तत्सायुज्यादिफलकस्य न मोक्षहेतुत्वमिति शंक्यम्; तस्य जनार्दनत्वात् । **जनः** उपजनः जन्म ; **तमर्दयति** निवर्तयतीति पुनर्जन्मनिवर्तकत्वात् । सविशेषोपासनमेव मुक्तिहेतुः, सविशेषसायुज्य-मेव मुक्तिः ; अन्यदप्रामाणिकमिति सिद्धान्तप्रदर्शनाय **जनार्दन**पदप्रयोगः । उक्तवेदान्तवाक्यानां **सर्वेषां** सविशेषब्रह्मपरत्वमेव । अत्र सामान्यविशेषन्यायस्योत्सर्गापवादन्यायस्य च यथायथं प्रवृत्तिः ; नापच्छेद-

இவர்கள் மதத்தில் ஸித்திக்கிறது. இவர்களை வேதாந்திகளென்பது கலிபுருஷ னென்ற முதலையானது பிடித்து ஸம்ஸார ஸமுத்ரத்தில் அழுத்திவிட்டதால் வந்த கேடாம். (67)

68. அத்வைதிகள் நிர்விசேஷப்ரஹ்மமொன்றென்று அத்வைதத்தை ஸ்தா பிப்பதற்காக பூர்வமீமாம்ஸையில் சொன்ன **अपच्छेदन्याय**த்தைக் காண்பித்து அங்குப்போல் வேறு வேதவாக்யம் அப்ரமாணமாகலாம். ஆகையால் உலகம் கர்ம, பகவத்குணங்கள் முதலான எந்த பேதத்தைச் சொல்லும் வேதமும் அப்ரமாணமே அத்வைத வேதமொன்றே ப்ரமாணம் என்கிறார்கள். இது தவறு என்கிறார். வேதங்களில் பகவானுக்குப் பொதுவாக அளவற்ற குணங் களை விதிக்கும் வாக்யமும் நிர்குணமென்று பொதுவாக குணங்களை நிஷே

**प्रस्तावं प्रतिपेदिरे कतिचनापच्छेदनीतिच्छलात्,**
**मीमांसापदवीपरिश्रमकथादूरेषु तच्छोभते ॥ ६८ ॥**

---

न्यायस्येति भावः । एवञ्च विरोधाभावात् प्राबल्यदौर्बल्यविचारस्य नावकाशः । एवंस्थिते प्राबल्य-दौर्बल्यप्रस्तावमभ्युपयन्तीति यत्, तत् मीमांसापरिज्ञानविधुरगोष्ठ्यां शोभेत, नास्मत्सविधे । तत्प्रस्तावस्तदिष्ट इति कथं ज्ञायत इति चेत्, आह **अपच्छेदनीतिच्छलादिति** । **प्रतिपेदिरे** इत्यत्रान्वयः । अपच्छेद-न्यायमत्रातिदिशन्ति हि ते । तद् व्याजमात्रम् । एतन्न्यायाभावेऽपि स्वाभिमतमप्रामाण्यं न त्यक्ष्यन्ति । यद्वा **छलं** नाम न्यायदर्शनोक्तमर्थान्तरकल्पनारूपम्, अपच्छेदन्यायस्यापार्थकल्पना तैः कृतेति ॥

अत्रेदमद्वैतिविशिष्टाद्वैतिविवक्षितमवधेयम्—तत्राद्वैतिनः—अपच्छेदाधिकरणे, "अध्वर्युं विनिष्क्रा-मन्तं प्रस्तोता संतनुयात् । तं प्रतिहर्ता, तमुद्गाता तं यजमानः, तं प्रशास्ता" इति अध्वर्युप्रभृतिस्पर्शपूर्वकं=तत्कच्छग्रहणरूपान्वारम्भपूर्वकं बहिष्पवमानस्तोत्रार्थं प्रस्तोत्रादीनां गमनं विहितम् । तत्र च मध्येऽन्वारम्भ-विच्छेदे उद्गातृगणान्तर्गतव्यक्तिभेदेन प्रायश्चित्तमाम्नातम्, "यदि प्रस्तोताऽपच्छिन्द्यात्, ब्रह्मणे वरं दद्यात् । यदि प्रतिहर्ता, सर्ववेदसं दद्यात् । यद्युद्गाता, अदक्षिणं तं यज्ञमिष्ट्वा तेन पुनर्यजेत; तत्र तद् दद्यात् यत् पूर्वस्मिन् दास्यन् स्यात्" इति । तत्रैकैकापच्छेदे तत्तन्निमित्तकं प्रायश्चित्तम-संदिग्धम् । यत्र चोभाभ्यां युगपद्विच्छेदः, तत्र नैमित्तिकद्वयानुष्ठानस्य शक्यत्वे विरोधाभावान्न कस्यचिद् बाधः । यत्र तु विरोधः, यथोद्गातृप्रतिहर्त्रपच्छेदयौगपद्ये, तत्र युगपदेव नैमित्तिकवाक्यद्वयप्रवृत्तेः अवि-शेषात् विकल्पः । यत्र त्वपच्छेदयोस्तयोः क्रमेण प्रवृत्तिः, तत्र विरोधात् कस्यचिदेवानुष्ठाने कर्तव्ये

---

திக்கும் வாக்யமும் அதுபோல் **सर्वज्ञः सर्वशक्तिः,** என்று சிற்சில குணங்களை விதிக்கும் வாக்யமும், **'अपहतपाप्मा विजरः"** என்று சிற்சில குணங்களை நிஷே திக்கும் வாக்யமும் உள. ஆக ஸாமாந்யவிதியும் ஸாமாந்யநிஷேதமும் விசேஷவிதியும் விசேஷநிஷேதமும் உள என்றதாயிற்று. எல்லாம் **जनार्दन** என்கிற ஸகுண ப்ரஹ்மமான விஷ்ணுவுக்கு அந்வயிப்பதாயிருக்க அதை விட்டு ஒன்றோடு மற்றொன்றுக்கு விரோதமிருப்பதாகக் கூறி ப்ரபல துர்பல விசாரத்திற்கு இடம் கொடுத்து **अपच्छेदाधिकरण**த்தில், **'पूर्वशास्त्र**ம் **दुर्बल**ம் ஆகையால் அப்ரமாணம் **उत्तरशास्त्र**ம் **प्रबल**மாய் **प्रमाण**ம்' என்று முடிவு செய் திருப்பதால் இங்கும் குணவிதிவாக்யம் அப்ரமாணம். குணநிஷேதவாக்யம் ப்ரமாணம். ஏனெனில், குணங்களை யறிந்தபிறகுதானே, இல்லை எனக் கூடும். ஆக குணங்களையறிவிக்கும் வாக்யம் பூர்வம். குணங்களையில்லை என்கிற வாக்யம் உத்தரம். ஆகையால் நிர்குண ப்ரஹ்மஸித்தி என்கிறார்கள்.

இந்த வாதம் மீமாம்ஸாசாஸ்தரத்தில் பரிச்ரமப் படாதவர்களிடத் தில் சோபிக்கலாம். அதில் பரிச்ரமப்பட்டவர்களுக்கு அந்த ந்யாயம் இங்கே வாராது என்று தெளிவாகும் என்றபடி. **अपच्छेदन्याय**மாவது — யாகத்தில் ஸ்தோத்ர விசேஷத்தைச் சொல்லுவதற்காகப் போகும்போது

कतरस्येति चिन्ता । तत्रोपक्रमाधिकरणनयेन पूर्वापच्छेदप्रायश्चित्तशास्त्रार्थानुष्ठानमिति पूर्वपक्षः । उत्तरापच्छेदज्ञानाधीनं यत् प्रायश्चित्तज्ञानम्, तस्य पूर्वापच्छेदप्रायश्चित्तज्ञानबाधेनैवोदितत्वात् पूर्वस्य बाध इति सिद्धान्तः । तथा च सूत्रम्, "पौर्वापर्ये पूर्वदौर्बल्यं प्रकृतिवत्" इति । एवमुत्तरशास्त्रार्थज्ञानस्य पूर्वशास्त्रबाधकताया उक्तत्वात् पूर्वशास्त्रमप्रमाणमिति सिद्धम् । तद्वदिह गुणविधायकवाक्यानां तन्निषेधवाक्यानाञ्च प्रतियोगितदभावविषयकत्वात् अभावज्ञाने प्रतियोगिज्ञानस्य कारणत्वात् प्रतियोगिविषयकशास्त्रं पूर्वम्, तदभावविषयकशास्त्रमुत्तरमिति निर्विशेषवाक्येन प्रबलेन सविशेषवाक्यस्य पूर्वस्य बाध इति ।

अत्र विशिष्टाद्वैतिनः—पूर्वमीमांसकैरेवापच्छेदाधिकरणे उपक्रमनयापच्छेदनययोर्मध्ये कतरस्य कुत्र प्रवृत्तिरिति विचारेऽवतीर्य, "पूर्वात् परबलीयस्त्वं तत्र नाम प्रतीयताम् । अन्योन्यनिरपेक्षाणां यत्र जन्म धियां भवेत्" इत्युक्तम् । मिथो निरपेक्षवाक्यद्वयस्थले उत्तरशास्त्रार्थज्ञानेन पूर्वशास्त्रार्थज्ञानबाधः । उपक्रमाधिकरणविषयवाक्येषु च, 'अग्नेः ऋग्वेदः', 'उच्चैः ऋचा' इत्यादिषु पूर्वोत्तरवाक्ययोरर्थवादविधिवाक्यरूपतयैकवाक्यत्वात् मिथस्सापेक्षत्वात् असंजातविरोधितया पूर्वज्ञानमेव प्रबलमिति तदनुसारेणोत्तरं नेयमिति तदर्थः । प्रकृते प्रतियोगिसमर्पकवाक्यसापेक्षत्वं निषेधवाक्येषु भवत्स्वीकृतमिति गुणादिविधिवाक्याविरोधेनैव निषेधवाक्यार्थवर्णनं कार्यम् । अतो न सर्वगुणादिनिषेधः । किञ्च यत्र विरोधो न नियतः, पौर्वापर्यञ्चानियतम्, तत्रापच्छेदनयः । उद्गातृप्रतिहर्त्रपच्छेदयोर्यौगपद्ये हि शास्त्रयोर्विरोधः, न त्वयौगपद्ये । पौर्वापर्यञ्चानियतम्, कदाचित् प्रतिहर्ताऽपि पूर्वमपच्छिन्द्यात्, पश्चादुद्गातेति । प्रकृते तु गुणादिविधिवाक्यस्य निषेधवाक्यस्य च विरोधः पौर्वापर्यञ्च नियमेनास्ति । अत एव तत्र प्रायश्चित्तयोर्मध्ये

---

யஜமாநனும் ருத்விக்குகளும் ஒருவரை யொருவர் தொட்டுக்கொண்டு விடாத படி பிடித்துப் போகவேண்டுமென்று ஒரு விதியுண்டு. அத்வர்யுமுதற் கொண்டு அவர்களை வரிசைப்படுத்திச் சொல்லியிருக்கிறது. அதில் பிடித்தவர்கள் பிடியை விட்டுவிட்டால் அப்போது இன்னார் விட்டால் இன்னவித ப்ராயச் சித்தமென்று சிலபேர் விஷயத்தில் விதித்திருக்கிறது அங்கு அந்த ப்ராயச் சித்தங்களுக்கு ஒன்றுக்கொன்று விரோதமிருக்கிறது ஒருவன்மட்டும் விட்டால் ஒரே ப்ராயச்சித்தம்; இரண்டு பேர் ஒரே ஸமயத்தில்விட்டால் விரோதமிராமலிருந்தால் இரண்டு ப்ராயச்சித்தமும் செய்வதாம். விரோத முண்டாகில் இஷ்டப்படி ஏதேனும் ஒன்றையே செய்வதாகும். இவ்வாறின்றி ஒருவர் முன்னும் மற்றொருவர் பின்னுமாக விட்டால் அந்த ப்ராயச்சித்தங் களுக்கு விரோதமுண்டானால் எதைச் செய்வது எதைவிடுவது என்கிற விசாரத்தில் அவ்வதிகரணத்தில் சொன்னதாவது-முதலில் எந்த ப்ராயச்சித்த ஜ்ஞாநம் வந்ததோ அதைச் செய்வது என்ற उपक्रमन्याय த்தை விட்டு, பின்னால் தோன்றிய ப்ராயச்சித்த ஜ்ஞாநமானது முன்ப்ராயச்சித்த ஜ்ஞாநத்தை மெறித்துக்கொண்டு வந்திருப்பதால் உத்தர சாஸ்த்ரார்த்தமே அநுஷ்டிக்கத்

**यद् ब्रह्मणो गुणशरीरविकारजन्म(भेद) कर्मादिगोचरविधिप्रतिषेधवाचः ।**

कस्यचित् कदाचिदननुष्ठानेऽप्यन्यदाऽनुष्ठीयमानतया तच्छास्त्रस्याप्रामाण्यं नापतति । अननुष्ठानलक्षणमप्रामाण्यमपि कदाचिदेव । अत्र तु निर्गुणवाक्येन सर्वथा बाधात् विधिवाक्यस्याप्रामाण्यमेव नियतम् । किञ्च भावाभावयोर्मिथोविरोधात् अभावस्य भाव इव भावस्याभावोऽपि प्रतियोगीति अभावशास्त्रं प्रतियोगिसमर्पकम्, भावशास्त्रं तदभावसमर्पकमित्युक्तिसंभवात् विधिवाक्यानामेव परत्वं किं न स्यात् । वस्तुतो विरोधे सत्येव प्राबल्यदौर्बल्यविचारः । अविरोधेनैवोपपद्यमानेषु नेयं चिन्तेति उत्सर्गापवादादिनयव्युत्पादनेन वक्ष्याम इति ॥ ६८ ॥

69 भिन्नविषयकत्वादविरोधमेव सर्वत्र दर्शयति **यदिति** । ब्रह्मणो गुणादिविषये **विधिवाचः** सद्भावपराणि वाक्यानि, **निषेधवाचः** अभावपराणि च वाक्यानि सन्ति । यथा नान्तं गुणानां गच्छन्ति

---

தக்கது என்றவாறும். இவ்வுதாஹரணத்திற்கும் ப்ரக்ருதவிஷயத்திற்கும் வாசியுண்டு. அங்கே யாகாநுஷ்டான காலத்தில் ஒரு ஸமயம் முன்னால் விட்டவன் மற்றொரு ஸமயம் பின்னால் விட்டவனாகலாம். அப்போது முன் விடப்பட்ட சாஸ்த்ரத்தையே பின்னால் அநுஷ்டாநத்திற்குக் கொண்டு வருகிறபடியாலும், ஒவ்வொருவன்மட்டும் விடும்போது ஒவ்வொரு ப்ராயச்சித்த சாஸ்தரமும் ஆதரிக்கப்படுகிறபடியாலும் ஒன்றும் அப்ரமாணமாகாது. சில காரணத்தால் சில ஸமயமநுஷ்டிக்கவில்லை என்பதற்காக சாஸ்த்ரத்திற்கு அப்ராமாண்யம் வந்துவிடாது. இங்கே குணநிஷேத வாக்யமே ஆதரிக்கப்பட்டு குணவிதிவாக்யத்தை யடியோடு விட்டால் அது அப்ரமாணமே யாகிறது. மேலும் யார்முன்னே விடுவது: யார் பின்னே? எந்த சாஸ்த்ரம் முன்னதாகும் ; எந்த சாஸ்தரம் பின்னதாகும் என்கிற பௌர்வாபர்யவ்யவஸ்த்தை யில்லை. இரண்டும் சேராமலுமிருக்குமாகையால் விரோதம் வந்தே தீரும் என்பதுமில்லை. இப்படி அவ்யயவஸ்தையான இடத்தில்தான் அந்த ந்யாயம் வருமென்று மீமாம்ஸகர்களே சொன்னார்கள். மேலும் ஒரு வாக்யத்துக்கும் மற்றொரு வாக்யத்திற்கும் ஒன்றோடொன்று ஆகாங்க்ஷை, ஸம்பந்தமிருக்குமிடத்தில் அந்த ந்யாயம் வாராது. உபக்ரமந்யாயமே வரும். அங்கே ஒரு ப்ராயச்சித்த வாக்யத்திற்கும் மற்றொரு ப்ராயச்சித்த வாக்யத்திற்கும் ஒன்றோடொன்று ஸம்பந்தமில்லை. இங்கு அதற்கு நேர்மாறாக குணத்தை விதிக்கும் வாக்யத்தை அபேக்ஷித்திருந்து அதை அறிந்த பிறகே குணத்தை நிஷேதிக்கும் வாக்யம் அர்த்தத்தைக் கூறுகிறபடியால் பரஸ்பரம் ஸம்பந்தமிருக்கிறது. அதனால் உபக்ரமந்யாயமே வருவதால் குணத்தை விதிக்கும் வாக்யத்தாலே குணங்கள் அறியப்பட்டிருப்பதால் அதற்கு விரோதமிராதபடி நிஷேத வாக்யத்திற்குப் பொருள் கொள்ள வேண்டும் என்றவாறு ஆராய்க. (68)

69. பரப்ரஹ்மத்திற்கு குணங்கள், விகாரங்கள் (அவஸ்த்தைகள்—மாறுதல்கள்) சரீரம், பிறவி அல்லது பேதம், செயல் இவை முதலானவை

अन्योन्यभिन्नविषया न विरोधगन्धमर्हन्ति तत्र विधयः प्रतिषेधबाध्याः ॥ ६९ ॥
अग्नीषोमीयहिंसा निजविधिविहिता किं निषिद्धा 'न हिंस्यात्

निर्गुणमिति गुणविषये । तन्नामरूपाभ्यां व्याक्रियत, तदात्मानं स्वयमकुरुत, ते यदन्तरा, अविकाराय शुद्धाय इति विकारविषये । यस्य पृथिवी शरीरम्, तस्यैष एव शारीर आत्मा, अकायमव्रणम्, न तस्य प्राकृता मूर्तिः इति शरीरविषये । बहुधा विजायते, अजायमानः इति जन्मविषये । जन्मशब्दस्थाने भेदशब्दोऽपि श्लोके इष्टः, तदा पृथगात्मानम्, क्षरात्मानावीशते देव एकः, तत् त्वमसि, सर्वं खल्विदं ब्रह्म इति भेदविषये । जन्म कर्म च मे दिव्यम्, स्वाभाविकी ज्ञानबलक्रिया च, निष्क्रियम्, न मे पार्थास्ति कर्तव्यम्, तदेजति, तदुनैजति इति कर्मविषये । आदिपदेन 'न ते रूपं न चाऽऽकारो नायुधानि न चास्पदम् । तथापि पुरुषाकारः' इत्याद्युक्तांशान्तरग्रहणम् । एता वाचः विरुद्धवदवभासमानाः वस्तुतो न विरुद्धाः भिन्नविषयकत्वात् । यथा गुणादिविधयः कल्याणगुणादिपराः, निषेधाः हेयगुणादिविषयकाः । प्रकृतिपरमात्मविचारे प्रकृतेरिव सत्त्वादिगुणानाश्रयत्वेन तस्य निर्गुणत्वमुच्यते ; जीवात्मपरमात्मप्रस्तावे च रागद्वेषसुखदुःखाद्यपुरुषार्थानाश्रयत्वेन निर्गुणत्वमुच्यत इति प्रकरणानुगुण्येनार्थनिर्णयोऽनायासेन भवतीति न विरोधस्य गन्धं लेशमपि यत्=यस्मात् नार्हन्ति । तत्=तस्मात् विधयः सद्भावपरवाक्यानि न प्रतिषेधैः अभावपरवाक्यैर्बाधनीया इति । निर्गुणत्वनिर्विशेषत्वादिकं ब्रह्मणो वक्तुमशक्यञ्च—"अदृश्यत्वादिगुणको धर्मोक्तेः" इति सूत्रकारः अद्रेश्यमग्राह्यमित्यादीनां गुणत्वमाह । न हि तार्किकपरिभाषित एव गुणो गुणशब्दमुख्यार्थः । अदृश्यत्वादिरूपविशेषे सति च निर्विशेषत्वं कथम् । अतः सामान्यस्य विशेषे संकोच आवश्यक इति स्थिते गुणविशेषविधायकवाक्याविरोधेन तद्व्यतिरिक्तविषयकत्वं सुगममित्यलम् ॥ ६९ ॥

70 अत्रोत्सर्गापवादनय—सामान्यविशेषनययोः प्रवृत्तिं दर्शयति अग्नीति । अग्नीषोमदेवताकपशुहिंसनं 'अग्नीषोमीयं पशुमालभेत' इति निजेन स्वविषयकेण विधिना विहितम् । 'न हिंस्यात् सर्वा भूतानि' इति निषेधवाक्यस्य सामान्यविषयकत्वात् तयोक्त्या अग्नीषोमीयहिंसापि निषिद्धा भवति किम् । तत्र विधिवाक्यस्य प्रतियोगिविषयकत्वादप्रामाण्यं निषेधवाक्यप्रामाण्यञ्च किं नेष्यते । तद्वदत्र गुणादिविधिवाक्यविहितगुणादिव्यतिरिक्तविषयकत्वमेव निषेधवाक्यानामिति क्व विरोधः । एवं सामान्यविशेष-

உண்டென்றும் இல்லையென்றும் சொல்லும் வசனங்கள் இருக்கின்றன. எதை உண்டென்கிறதோ அதையே இல்லையென்றும் சொல்லுமா. உண்டென்றது சிறந்த கல்யாண குணவிகாராதிகளைப்பற்ற; இல்லையென்றது ஹேயமான குணதிகள் சேதநாசேதநங்களுக்குப்போல் இதற்கில்லையென்பதைப்பற்ற. ஆக முரண்பாட்டுக்கிடமில்லையாகையால் ஏன் அபச்சேத ந்யாயத்தைக்கொண்டு அப்ரமாணமாக்கவேண்டும். (69)

70. ஒரு ஜந்துவையும் ஹிம்ஸிக்கலாகாதென்கிறது வேதம். அதே அக்னீஷோமீயாகத்தில் ஆட்டை ஹிம்ஸிப்பதென்றது தகுமா என்னில். சாஸ்த்ரம் இசைந்த ஹிம்ஸை தவிர வேறு ஹிம்ஸையைத்தான் சாஸ்த்ரம் தடுக்கு

भूतानी' त्येतयोक्त्या ; पशुपदविषयश्छाग एव न्यरूपि ।
छागो वा मन्त्रवर्णादिति च ; तदुभयन्यायतो हेयधर्म-
क्षेपार्था निर्गुणोक्तिः श्रुतशुभगुणके निर्मले ब्रह्मणि स्यात् ॥ ७० ॥

---

न्यायोऽपि । अग्नीषोमीयं पशुमालभेतेति पशुत्वेन सामान्यतो द्रव्यविधानेऽपि, 'छागस्य वपाया मेदसोऽनुब्रूहि' इति मन्त्रे विशिष्य च्छागनिर्देशात् छागरूपपशुपर्यवसानमेव निर्धारितं मीमांसायां 'छागो वा मन्त्रवर्णात्' इति सूत्रे । अतो न पश्वन्तरालम्भप्रसक्तिः । तद्वत् 'समस्तकल्याणगुणात्मकोऽसौ' इत्याद्यनुसारेण गुणशरीरादिविशेषविधायकशास्त्रार्थे सामान्यविधायकशास्त्राणां पर्यवसानात् सामान्यनिषेधवत् सामान्यविधिरपि विशेषविषयक एवेति निगमयति **तदिति** । **तत्** तस्मात् **उभयन्यायतः** अग्नीषोमीयाद्यपवादछागादिविशेषविषयकन्यायानुरोधेन । निर्गुणोक्तिः सामान्यनिषेधवचनं विहितविशेषव्यतिरिक्तविषयकमुत्सर्गापवादनयात् । हेयरूपविशेषनिषेधे संकुचितश्च सामान्यनिषेधः विशेषनिषेधबलात् । तेन निर्गुणत्वादिकं निर्मलत्वरूप विशेषाभावपरम् । तदाह **निर्मले** इति । एवञ्च सगुणब्रह्मैकविषयकमेव निर्गुणादिवाक्यमपीति न तदन्यब्रह्मसिद्धिप्रसक्तिः । अधिकमत्र प्राच्यग्रन्थेषु अस्मदीय**परमार्थभूषणादौ** च द्रष्टव्यम् ॥ ननु अग्नीषोमीयहिंसायाः सिद्धान्ते हिंसात्वमेव नेष्यत इति कथमुत्सर्गापवादविषयतेति चेत्—अस्मत्सिद्धान्ते तथात्वेऽपि मीमांसकैस्तथाऽनुक्तेः "व्यवहारे भट्टनयः" इति भट्टनयस्यैवाद्वैतिभिरादरणात् तदनुसारेणैव तत्समाधानं कृतम् । नोदाहरणमादर्तव्यम् । उत्सर्गापवादन्यायस्त्ववश्यमेवांगीकार्यः यत्र क्वापि । सा रीतिः प्रकृतेपीति विवक्षितम् । यदाहवनीये जुहोति, पदे जुहोति इति विधिवाक्ययोरपि उत्सर्गापवादनयप्रवृत्तिरस्ति । आहवनीयहोमविधेः पदहोमव्यतिरिक्तविषयकत्वस्वीकारात् । पदस्याहवनीयस्य च भिन्नत्वात् नात्र सामान्यविशेषन्यायः । सामान्यनिषेधस्याविशेषात् सर्वविषयकत्वं युक्तमिति चेत्—अत्र वक्तव्यं सर्वं **परमार्थभूषणे** सगुणनिर्गुणवादे द्रष्टव्यम् इति मायावादनिरास इति सिद्धं सविभूतिकस्य सगुणस्यैव ब्रह्मत्वम् ॥ ७० ॥

71 अस्मिन् ग्रन्थे तत्त्वसारे परतत्त्वं पुण्डरीकाक्ष इति निरूपणं परमोद्देश्यम् । तत् प्राक् **कप्यास**शब्दार्थशोधनापदेशेन अन्तरधिकरणार्थज्ञापनेन सूचितमेव । उपसंहारे च (97) कमलदृश इति

---

*மென்றனர். அதுபோல் சாஸ்த்ரம் ப்ரஹ்மத்திற்குக் கூறிய குணங்கள் தவிர மற்ற குணங்கள் துர்குணங்கள் இல்லையென்பதே ந்யாயமாகும். அக்னிஷோமீய யாகத்தில் நாலுகால் ஜந்துவே தேவதைக்கு அளிக்கவேண்டும் ஹவிஸ்ஸு என்றது; மந்த்ரத்திலோ ஆடு என்று விசேஷமாகக் கூறப்பட்டிருக்கிறது. இந்த விசேஷத்தைக்கொண்டு அந்த யாகத்திற்கு ஆடுதான் த்ரவ்யமென்பர். அதுபோல் பொதுவாக குணமுண்டு என்பதற்கு நல்ல குணமுண்டு என்றும், குணமில்லையென்பதற்கு கெட்ட குணமில்லையென்றும் பொருள் எனிதிலறியப் படும். ஆகையால் முரண்பாடு சிறிதுமில்லை. மாயாவாத விமர்சம் முற்றும் (70)*

**कस्त्वं ; तत्त्वविदस्मि ; वस्तु परमं किं तर्हि ; विष्णुः ; कथम् ;**
**तत्त्वेदम्परतैत्तिरीयकमुखत्रय्यन्तसंदर्शनात् ।**

---

प्रयोगः । तत्र क्रमेण निर्विशेषब्रह्मवादपर्यन्ते व्युदस्ते मूर्तिमत्या देवताया एव ब्रह्मत्वे सिद्धे रुद्रादि-व्युदसनेन तस्यैव तत् विस्तरेण स्थापयन् वक्ष्यमाणसर्वश्लोकार्थसंग्रहात्मकमेकं श्लोकमादौ निर्माति कस्त्वमिति । वैष्णवतदितरयोरुक्तिप्रत्युक्तिपरम्परारूपमिदं पद्यम् । कस्यचित् जिज्ञासोः प्रश्नो वैष्णवं प्रति **कस्त्व**मिति । **तत्त्वविदस्मी**ति वैष्णवकृतमुत्तरम् । एवमुपर्यपि । कस्त्वमित्यनेन, विद्यास्थानेषु विविधेषु कुत्र विशिष्याधीती भवानिति प्रश्नः । तत्त्वविदस्मीत्यनेन वेदान्तप्रमेयभूतपरतत्त्वनिर्णयवानस्मी-त्युत्तरम् । **वस्तु परमं किं तर्हि ।** तर्हि=तत्त्ववित्त्वे परमं तत्त्वं प्रमाणसिद्धं किं स्यादिति पृच्छामीत्यर्थः । वैष्णव आह **विष्णु**रिति । 'अग्निरवमो देवतानां विष्णुः परमः' इति श्रुत्या भूलोकवर्तिनमग्निमारभ्य मध्यलोक-गता अन्या देवता इति ता उल्लंघ्य 'सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम्' इत्युक्ततम.पारवर्ति-वैकुण्ठलोकाधिपतेर्विष्णोरेव देवतायाः पारम्यकीर्तनात् स एव पर इति वैष्णवस्य भावः । पुनः पृच्छति **कथ**मिति । कर्मकाण्डे यत्र यस्या देवतायाः प्रशस्तिश्चिकीर्षिता, तत्र तस्याः सर्वतोऽतिशयः कथ्यते । 'नकिरिन्द्र त्वदुत्तरः' इति इन्द्रादयोऽपि स्तूयन्ते । कथं तत्र तत्त्वनिश्चयः स्यादिति भावः । उत्तरमाह **तत्त्वे**ति । परतत्त्वस्य वेदापेक्षया वेदान्त एव विदीप्तत्वात् त्रय्यन्ता एव गृह्यन्ताम् । तत्र तैत्तिरीयकादिकं मुख्यम्, **तत्त्वेदम्परत्वात्** । **इदं** प्रमेयं **परं** विवक्षितं येषां ते त्रयन्ताः इदम्पराः । **तत्त्वे** अबाधितार्थे परतत्त्वे इदम्पराः तत्त्वेदम्पराः=तत्त्वतात्पर्यकाः । आरोपात्मकोपासनाविषयत्वप्रयुक्तविवादानास्पदवास्तवार्थाभि-प्रायकत्वात् । तत्र हि आनन्दवल्ल्यामानन्दमयब्रह्म निरूप्य चतुर्मुखातिशयितानवधिकातिशयानन्दवत्त्वमुक्त्वा तत्प्राप्त्या तादृशानन्दलाभमपि श्रोत्रिये उपवर्ण्य भृगुवल्ल्यां 'स यश्चायं पुरुषे यश्चासावादित्ये स एकः' इति तस्यादित्यमण्डलान्तवर्तिपुरुषैक्यकथनात् आदित्यान्तःस्थस्य च पुण्डरीकाक्षत्वात् तत्प्राप्तिरूपवास्तवप्रमेय-हेतुतदुपासनविषयस्यापि तस्य वास्तवत्वावधारणात् तत्त्वमेव तत्रोच्यमानम् । अथानन्तरप्रश्ने च अम्भस्यपारे इत्यारभ्य समुद्रशायित्वनाकनिविष्टत्वादिधर्मविशिष्टः, ब्रह्म परमं, इष्टापूर्तं बहुधा जातम्, तदेवाग्निः, सर्वे निमेषा जज्ञिरे, न तस्येशे कश्चन इत्यादिदर्शितमहिमा अद्भ्यः संभूत इत्यादिक्रोडीकारेण लक्ष्मीपतित्वेन ज्ञापितः । अपिचायं भागस्तत्त्वेदम्परः, नोपासनशेषभूतः । अथ नारायणानुवाके सर्वपरविद्योपास्यं तत्त्वं नारायण

---

71. இனி பரதேவதை எந்த மூர்த்தி என்னும் ஆராய்ச்சி விரிவாக மேலே பல் பத்யங்களால் விரித்துரைக்கப்போவதன் சுருக்கமாம் முதற் பத்யம். தத்துவம் தெளிய விரும்பி யவருக்கும் வைஷ்ணவருக்கும் ஸம்பாஷணை - "நீர் யார் உமக்கு எந்த சாஸ்த்ரஞானம் சிறப்பாயுளது" 'நான் தத்துவங்களைப்பற்றிய தெளிவுடையவன்' 'ஆகில் பரதத்துவம் எது." "விஷ்ணுவே" "எப்படி"; தத்வத்தையுணர்த்துவதற்கே ஏற்பட்ட தைத்திரீயம் முதலான

**अन्यास्तर्हि गिरः कथम् ; गुणवशात् ; अत्राह रुद्रः कथम् ;**
**तद्दृष्ट्या ; कथमुद्भवत्यवतरत्यन्यत् कथं ; नीयताम् ॥ ७१ ॥**

---

एवेति निर्धारितम् । मोक्षार्थोपासनञ्च तत्क्रतुन्यायेन तथाविधवास्तवफलहेतुत्वात् तत्त्वार्थविषयकमेवेति नारायणपारम्यं ततो निश्चीयते । एवमन्ते आदित्यमण्डलान्तर्वर्त्युपासनादिकमपि तत्रोक्तम् । श्लोके **मुख**शब्देन महोपनिषत्सुबालोपनिषत्कौषीतकिब्राह्मणादिकमभिप्रेतमिति व्यक्तीभविष्यति । पुनः पृच्छति **अन्यास्तर्हि गिरः कथ**मिति । प्राणाकाशादीनामपि जगत्कारणत्वं श्रूयते । दहरोऽस्मिन्नन्तराकाशस्तस्मिन् यदन्तरिति परब्रह्मातिरिक्तं परं तत्त्वं श्रूयते । ततो यदुत्तरतरमिति च । न सन्न चासत् शिव एव केवल इति शिवपारम्यं स्पष्टमवगम्यते । ईदृशीनां गिरां कथं निर्वाह इति प्रश्नः । **गुणवशा**दित्युत्तरम् । प्राणनकर्तृत्व-निरतिशयप्रकाशवत्त्व मंगलत्वादिगुणाभिप्रायेण तथा प्रयोगः । तदन्वेष्टव्यमित्यत्रापि परमात्मनिष्ठापहतपाप्मत्वादि**गुणवशात्** तद्गुणतात्पर्येणैव तथोक्तिरिति । पुनः पृच्छति **अत्राह रुद्रः कथ**मिति । **अत्र** परतत्त्वविषये रुद्रः कथं स्वात्मानं निर्दिशति । तथा हि **अथर्वशिरसि**, 'अहमेव प्रथममासं वर्तामि च भविष्यामि च' इति स्वस्यैव सार्वकालिकत्वं स्वातिरिक्तस्यातथात्वञ्च तेनोक्तम् । न चायं रुद्रो विष्णुरेव भवितुमर्हति ; उपक्रमे, 'ते रुद्रमपृच्छन्' इत्यत्र रूढ्यर्थत्यागे कारणाभावात् । उपरि 'यो वै रुद्रः स भगवान्' इत्यावर्त्य, यश्च ब्रह्मा....यश्च विष्णुरित्यादिना रुद्रातिरिक्तविष्ण्वादिनिर्देशात् तावद्व्यक्त्यतिरिक्तत्वस्य रुद्र एव संभवेनान्यग्रहणायोगाच्च ; रुद्रासाधारणभस्मधारणोक्तेरुपरि दर्शनाच्चेति प्रष्टुराशयः । अतोत्तरम् **तद्दृष्ट्ये**ति । तस्य विष्णोः स्वान्तरात्मत्वेन शास्त्रदृष्ट्या दर्शनादेवमाहेत्यर्थः । पुनः पृच्छति **कथमुद्भवती**ति । अथर्वशिखायाम्, 'ब्रह्मविष्णुरुद्रेन्द्रास्ते सर्वे संप्रसूयन्ते' इति विष्णोरप्यन्याविशेषेणोत्पत्तिः श्रूयते । कारणभूतः कथमुद्भवेदित्यभिप्रायः । समाधत्ते **अवतर**तीति । अजायमानस्यापि स्वेच्छया बहुधा जायमानताऽस्तीति । ननु हिरण्यगर्भादिरपि परत्वेन कीर्त्यते । विष्णुसेव्यत्वतद्वरप्रदत्व दिकमपि शिवेपुराणादौ ; त्रिमूर्तिसाम्यादि चेति पृच्छति **अन्यत् कथ**मिति । तत्रोत्तरम् **नीयता**मिति । तद्वाक्यजातमन्यार्थकतया अन्याभिप्रायकतया अप्रमाणतयाऽपि वा नेयमित्यर्थः । ए मेवैतदर्थ इत्युपरिष्टात् व्यक्तीभविष्यति ॥ ७१॥

---

*வேதாந்தவாக்யங்கள் அறிவிப்பதால். "வேறுவிஷயமாகச் சொல்லும் வாக்யங்கள் உளவே". "அவையும் விஷ்ணுவையே சில குணமுகமாகக் கூறும்". "அப்படியானல் அதர்வசிரஸ்ஸில் ருத்ரன் தன்னையே பரதேவதையாகப் பேசினது எங்ஙனே". "ருத்ரன் தன்னோடு நிற்காமல் தனக்கு அந்தர்யாமியான பரமாத்மாவைப் பொருளாகக் கொண்டதாலென்க". "விஷ்ணுவை ஸமமாகவும் கிழ்ப்பட்டவனுகவும் கூறும் வாக்யங்கள் உளவே". "அவற்றிற்கு அவ்வாறே பொருளாகில் அப்ரமாணமேயாமென்று தக்கவாறு அங்கங்குக் கருத்து உரைக்கவேண்டும்," (71)*

य उक्तो याज्ञिक्यामुपनिषदि निस्सीममहिमा स उक्तः पुंसूक्ते परमपुरुषः कारणतया।
पुनः सौबालिक्यामुपनिषदि माहोपनिषदी गतिश्चैवं तद्वत् कलय कठवल्लीप्रभृतयः॥७२
व्याजह्रे जगदेककारणतया साकूतमेकोहवा
इत्यारम्भवता महोपनिषदुद्घोषेण नारायणः।

72 तैत्तिरीयकमुखेति प्रागुक्तं विवृणोति य इति। याज्ञिक्यामुपनिषदि 'अम्भस्य-पारे' इति प्रश्ने यः समुद्रशायी नित्यसूरिनिबिडपरपदस्थितः सर्वकारणं श्रीपतिरित्येवं प्राग्दर्शितरीत्या निरवधिकमाहात्म्यत्वेनोक्तः, स एव पुंसूक्ते=पुरुषसूक्ते तैत्तिरीयकान्तर्गते अनन्तर्गते च सर्ववेदपठिते 'वेदाहमेतं पुरुषं महान्तम्' इति सर्वकारणमहापुरुषत्वेनोक्तः। उत्तरनारायणेन तस्य परमपुरुषस्य लक्ष्मीपति-त्वमवगमितम्। तस्य भागस्य याज्ञिक्यामुपनिषद्यपि 'अद्भ्यः संभूतः' इत्यनुवादात् लक्ष्मीपतित्वावगमनात् उभयत्रैक एवोक्त इति स्पष्टम्। सुबालाख्येतृसंबन्धिन्यामुपनिषदि च सर्वान्तर्यामित्वप्रयुक्तसर्वतादात्म्यं नारा-यणस्येति निपुणं न्यगादि। 'अपहतपाप्मा दिव्यो देव एको नारायणः' इति तस्यैव दिव्यदेवत्वश्चेति स एवोक्तः। माहोपनिषदी महोपनिषत्संबन्धिनी गतिः=प्रतिपादनप्रकारश्च एवं नारायणविषयिण्येव, "एको ह वै नारायण आसीत्। न ब्रह्मा, नेशानः" इत्येवोपक्रमात्। हे जिज्ञासो त्वं कलय परिशीलय; कठवल्लीप्रभृतयोऽपि तद्वत् तत्तुल्या एव भवन्ति। 'सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम्' इति कठवल्ली। 'अथ पुरुषो ह वै नारायणोऽकामयत' इति, ओमित्यग्रे व्याहरेत्....नारायणायेत्युपरिष्टात् इति च नारायणोपनिषत्। 'स आगच्छति विरजां नदीम्....स आगच्छत्यमितौजसं पर्यङ्कम्.... श्रीरुपबर्हणम्। तस्मिन् ब्रह्माऽऽस्ते' इति कौषीतकिब्राह्मणम्। "तद् ब्रह्माहम्....तदस्म्यहं वासुदेवः" इति ब्रह्मबिन्दुः। अत एव, 'सौबालब्रह्मबिन्दुप्रभृतिकमपि' इत्याचार्याः॥ ७२॥

73 माहोपनिषदी गतिश्चैवमित्युक्तं विवृणोति व्याजह्रे इति। एको ह वा इत्यारम्भवता एको ह वै नारायण आसीत् इत्युपक्रान्तेन महोपनिषदुद्घोषेण=तद्गतस्पष्टशब्दराशिना नारायण एव जगदेककारणत्वेन ब्रह्मरुद्राद्यशेषजगन्निमित्तोपादानकारणत्वेन साकूतं साभिप्रायम्=इतरव्यावृत्तये एक-शब्दे नारायणशब्दे चार्थविशेषमभिप्रेत्य व्याजह्रे व्याहृतोऽस्ति। न केवलमेतावत्; उपरि, 'न ब्रह्मा नेशानः'

*72 யாஜ்ஞிகி உபநிஷத்து என்ற தைத்திரீயோபநிஷத்தின் இரண்டாம் ப்ரச்னத்தில் அளவற்ற மேன்மையுடன் பரமபுருஷன் நாராயணன் காரண மாகக் கூறப்பட்டிருக்கிறான். புருஷஸூக்தத்திலும் ஸுபாலோபநிஷத்திலும் அப்படியே. மஹோபநிஷத்தின் நடையும் அவ்வாறே. கவனித்துக்காண், கடோபநிஷத்து முதலானவையும் அவைபோலவேயாகின்றன. (72)*

*73 மஹோபநிஷத்தால் "ஏகோ ஹவை" என்று தொடங்கி ஸ்பஷ்ட மாக தேவதாந்தரப்ரமத்தை நீக்கும் கருத்துடன் நாராயணனே நிமித்*

ब्रह्मेश.द्यु.वसुन्धरोडु. सलिल. स्वाहेश.सोमांशुम-
त्पूर्वाशेषजगत्प्रणाशयति(वति?)! यः काले समुन्मीलति ।। ७३ ।।
अप्राप्तत्वान्महत्यामुपनिषदि जगत्कारणस्यानुवादो
न स्यादेकोहवा इत्युपरि हि देवेभ्य इत्यादिनीत्या'।

इत्यादिना ब्रह्मा रुद्रः द्युलोकः भूमिः नक्षत्राणि आपः स्वाहाख्यभार्येशः=अग्निः, सोमः, अंशुमान्=सूर्यः एतत्पूर्वस्य=एतदादिकस्याशेषस्य जगतः प्रणाशवति=प्रलयवति काले यः समुन्मीलति=जागर्ति, तादृशो नारायण उक्तः । सर्वप्रलयवति काले स्थितत्वेन तस्यैव कारणत्वार्हतोक्ता । अथ, 'तस्मिन् पुरुषाश्चतुर्दश जायन्ते....तस्य ध्यानान्तःस्थस्य ललाटात् त्र्यक्षः शूलपाणिः पुरुषो जायते....तस्य ललाटात् स्वेदोऽजायत....तत् तेजो हिरण्मयमण्डम् । तत्र ब्रह्मा चतुर्मुखोऽजायत' इत्यादिविस्तरेण च कारणत्वं सर्वनिरूपितं स्पष्टमुद्घुष्टम् । अत्र महोपनिषदि कोशभेदेन पाठभेदोऽस्ति । भूमिका द्रष्टव्या । **द्युवसुन्धरोडु** इत्यादिकं, 'नेमे द्यावापृथिवी न नक्षत्राणि' इत्यादिपाठभेदवत्कोशानुरोधेनोक्तम् । ब्रह्मरुद्रयोः प्रलयेऽभावः पश्चात् नारायणादुद्भवश्च सर्वपाठसाधारणः ।। अत्र **प्रणाशवती**ति पाठो युक्त इति कृत्वा व्याख्यातम् । **प्रणाशयती**ति पाठमादृत्य **समुन्मीलती**त्येतत् सप्तम्यन्तं कालविशेषणं कृत्वा तादृशकाले य एतज्जगत् प्रणाशयति स इति व्याख्यातम् । श्रुतिस्वारस्यं पूर्वपाठे । प्रणाशयितृत्वानवगमात् ; पूर्वाशेषजगदिति समासौचित्याच्च । वाक्यान्ते श्रुतस्य क्रियापदत्वौचित्याच्च ।। ७३ ।।

74 नन्विदं महोपनिषद्वाक्यं जगत्कारणत्वस्य नारायणे प्रतिपादकं न भवति ; हवैशब्दघटितत्वेनानुवादरूपत्वात् । आकाशाधिकरणे, 'सर्वाणि ह वा इमानि भूतानि आकाशादेव समुत्पद्यन्ते आकाशं प्रत्यस्तं यन्ति' इति वाक्यस्य हवैशब्दघटिततयाऽनुवादत्वावगमात् अनुवादस्य पुरोवादिवाक्यप्रतीतार्थाविरोधेनैव निर्णेयार्थतया पुरोवादिनः सदेव सोम्येदमित्यादिवाक्यतः सर्वज्ञसर्वशक्तिसर्वान्तर्यामिकारणकत्वावगमात् आकाशपदरूढ्यर्थस्य गगनस्य महाभूतस्य न कारणत्वावगमसंभव इति ह्युक्तम् । तथैवेहापि । न च सर्वज्ञत्वादिविशिष्टतया प्रतीतपुरोवादिवाक्यार्थाविरोधात् नारायणग्रहणं युज्यत इति

தோபாத்தாநஸர்வகாரணமாக கோஷிக்கப்பட்டான். பிரமன் ருத்ரன் ஸுவர்க்கம் பூமி நக்ஷத்ரம் ஜலம் அக்னி சந்த்ரன் சூர்யன் முதலான எல்லா உலகும் அழிந்த காலத்தில் அவனே விளங்கினனென்றதே; ருத்ரன் எவ்வாறு காரணமாவான்? (73)

74 **हवै** என்ற சொல்லால் வேறு வாக்யத்தால் முன்னமே அறியப்பட்ட காரணத்தையே இந்த மஹோபநிஷத்வாக்யம் சொல்வதாகத் தெரிகிறதே, ஆகையால் நாராயணனே காரணமென்று விதிக்கலாகாதே என்னவேண்டா. பூர்வமீமாம்ஸையில் **उपरि हि देवेभ्यो धारयति** என்கிற வாக்யத்திலே **हि** என்ற சப்

वाक्यस्वारस्यतो हि व्यगणि भगवतः कारणत्वं परेषां
कार्यत्वञ्चाविरुद्धं तदपि न परमस्त्यत्र किञ्चित् विधेयम् ॥ ७४ ॥

वाच्यम्, सदेवेत्यादिवाक्यवत् 'न सन्न चासत् शिव एव केवलः' इति वाक्यस्यापि अनुवादलिंगाभावात् 'तद्वृत्तमेवकारश्च स्यादुपादेयलक्षणम्' इत्येवकारघटिततया विधायकत्वप्रतीतेश्च शिवस्य कारणत्वेऽवधृते, अस्य वाक्यस्यान्यथैव नेयत्वादित्यत्राह अप्राप्तत्वादिति । महोपनिषदि 'एको ह वा' इत्ययमुद्घोषो जगत्कारणानुवादरूपो न स्यात्; अप्राप्तत्वात् नारायणकारणत्वस्याज्ञातत्वात् । ज्ञातस्य ह्यनुवादः । न च हवैपदश्रवणं विधायकत्ववारकम्, 'उपरि हि देवेभ्यो धारयति' इति वाक्यं घृताग्निहोत्रे, 'अधस्तात् समिधं धारयन् अनुद्रवेत्' इति जुह्वा अधस्तात् समिद्धारणविधायकवाक्यार्थवादरूपमित्याशंक्य हिशब्द-श्रवणेऽप्यप्राप्तत्वात् उपरिसमिद्धारणविधायकमेवेति पूर्वमीमांसोक्तं "विधिर्वा धारणवत्" इत्यनूदितमस्ति । तद्वदत्रापि विधिरेव । किंविधिरिति चेत्—अस्तु कारणत्वविशिष्टनारायणविधिः । यद्वा; सदेवेत्यादि-प्राप्तजगत्कारणैकव्यक्त्युद्देशेन नारायणत्वविधिरस्तु । तदिदमाह वाक्येति । हवैशब्दघटिततया किञ्चिदंशानुवादत्वावगमात् एकशब्दोपरि तत्स्थित्या कारणभूतैकव्यक्तिप्राप्तत्वावगमात् स्वारस्यात् कारणत्वं भगवतः नारायणस्य व्यगणि विशिष्य ज्ञापितम् । नारायणोद्देशेन कारणत्वविधानेऽपि कारणवस्तु-सामान्यप्रापकत्वं सदेवेत्यादिवाक्यस्याक्षतम् । न च शिव एवेति वाक्यविरोधोऽस्य । अत्र विशिष्य, 'न ब्रह्मा नेशानः' इति चतुर्मुखद्यावापृथिव्याद्यविशेषेणेशानशब्दरूढ्यर्थस्य रुद्रस्य प्रलयकालवृत्तिनिषेधात् तद्विरोधेन तत्र शिवसद्भावविधानायोगात्, शिवशब्दस्य नानार्थरूढतया मंगलभूतवस्तुसद्भावपर-तयैवोपपत्तेः । एवकारस्यापि न सन्नचासदिति तत्रत्यविवरणानुसारेण कार्यभूतचेतनाचेतननिषेधपरतया विशिष्य नारायणनिषेधकत्वासंभवात् । वाक्यस्य एवकारे नैर्भर्यात् शिवशब्दोक्तमंगलरूपार्थानुरोधेन एव-कारस्य हेयनिषेधकतया हेयप्रत्यनीकस्यैव कारणत्वं तत्र बोध्यमित्यविरोधाच्च । परेषामिति । एवं सति परेषां=रुद्रब्रह्मादीनां कार्यत्वञ्चात्र महोपनिषदि श्रूयमाणमविरुद्धमित्यर्थः । शिवस्य कारणत्वे तु विरुद्धं स्यात् । परेषां कार्यत्वं च व्यगणि । तदप्यविरुद्धमिति वाऽन्वयः । तर्हि नारायणकारणत्वानुवादः परकार्यत्वमात्रविधिरित्यस्तु । तत्राऽऽह तदपीति (नेति) । तदपि—तथापि अत्र प्रथमवाक्ये परं विधेयं न दृश्यते । तावता न स्वदिष्टसिद्धिः रुद्रकार्यत्वस्य स्पष्टं विधेः, । नारायणकारणत्व-विधायिवाक्यान्तरतुल्ययोगक्षेमतया विनिगमनाविरहेणास्यापि विधायकत्वसंभवात् नारायणकारणत्वमेव विधेयमिति वाऽर्थः ॥ ७४ ॥

---

தமிருப்பதால் வேறு விதம் அறியப்பட்டதே அங்குச் சொல்லப்படவேணும்; அவ்வாக்யத்தில் ஒன்றுக்கும் விதியில்லை யென்று கேட்டு, இங்குச் சொன்ன விஷயம் புதிதாயிருப்பதால் விதிவாக்யமே இது என்று ஸித்தாந்தம் செய்யப்பெற்றது. அதே ந்யாயமிங்குமென்க. வாக்யஸ்வாரஸ்யத்தாலே நாரா

यत् संज्ञामूर्तिकर्तुः परमपुरुषतः किञ्चिदाकाशनाम्नो
हृत्पद्मे स्था(ग्रस्था?)दुपास्यं श्रुतिशिरसि परं सामगानामगायि ।
तत्र प्रश्नोत्तराभ्यामघविहतिमुखान् सत्यसंकल्पतान्तान्
अष्टौ शिष्टांस्तदीयान् अनिदमुदयिनस्तद्गुणान् उद्गृणन्ति ॥ ७५ ॥

---

75 **अन्यास्तर्हि गिरः कथ**मित्येतद् विवरीतुमारभते **यदि**ति । भवतु सर्वकारणं नारायणः । तमिमं 'दहरोऽस्मिन्नन्तराकाशः' इत्यनूद्य, 'तस्मिन् यदन्तस्तदन्वेष्टव्यम्' इति उपास्यान्तरोपदेशात् तदेव परं तत्त्वमित्याशंकायामिदं प्रवृत्तम् । आकाशशब्देन भूताकाशग्रहणेन तदन्तर्वर्तितया नारायण एवोच्यतामिति शंकां परिहरति **संज्ञामूर्तिकर्तु**रिति । दहरप्रकरणानन्तरं 'आकाशो ह वै नाम नामरूपयोर्निर्वहिता' इति वाक्ये आकाशस्य नामरूपनिर्वोढृत्वकण्ठोक्त्या आकाशो जगत्कारणमेवेति दहराकाशोऽपि स एव । युक्त्यन्तराणि दहराधिकरणे द्रष्टव्यानि । तथा च नामरूपव्याकर्तुः आकाशनामकात् हृदयपुण्डरीकगतात् परमपुरुषात् **परम्** अन्यत् यत् **सामगानां श्रुतिशिरसि** तण्डिशाखान्ते छान्दोग्ये **अगायि** निरदेशि, तत्रेत्यन्वयार्थः । अन्यदन्तर्वर्तीति सत्यम् । तत्तु नारायणगुणजातमेवेत्याहोत्तरार्धेन । **'तत्र प्रश्नोत्तराभ्यां** तद्विषयकप्रश्नसमाधानवाक्याभ्याम्,' 'किं तदत्र विद्यते यदन्वेष्टव्यम्,' 'तस्मिन् कामाः समाहिताः' इत्येताभ्यां **अघविहतिमुखान्** अपहतपाप्मत्वादीन् सत्यसंकल्पत्वपर्यन्तान् **अनिदमुदयिनः** एवम्भूतोदयरहितान् बद्धजीवानामिव किञ्चित्कालतिरोभावपश्चात्तनाविर्भावरूपोदयरहितान् सत्यान् कामान् नित्याविर्भूतान् तत्रैव **शिष्टान्**—विशिष्योपदिष्टान् उपास्यगुणतया विहितान् **तदीयान्** दहराकाशीयान् **अष्टौ गुणानेवोद्गृणन्ति** विशिष्य वदन्ति "तस्मिन् यदन्तरिति कामव्यपदेशः" इति **वाक्यकारः**; "उभे अस्मिन् द्यावापृथिवी अन्तरेव समाहिते" इत्यादिपठितानां न तत्र ग्रहणम्, किंतु काममात्रस्येति **श्रीभाष्यकारैश्च** निरधारि । 'कामादीतरत्र तत्र चायतनादिभ्यः' इति च सूत्रकारः । तद्गुणानित्यत्र तदिति पृथक्पदम् । पूर्वार्धोक्तयच्छब्दप्रतिसंबन्धितच्छब्दद्वयम् **तत्रे**ति **तदि**ति च । यत् अगायि

---

யணன் காரணமென்பது ஸ்பஷ்டம். ப்ரஹ்மருத்ராதிகள் இவனிடம் உண்டாகின்றார்களென்று மேலே சொன்னதும் முரண்படாமல் சேரும். வேறு விதிக்கவேண்டிய விஷயமில்லையாகையால் நாராயணனென்றறிவிப்பதே வாக்யத்தின் கார்யமாகும். (74)

75 சாந்தோக்யத்தில் ஆகாசமென்பது உலகுக்கு நாமரூபங்களை நிர்வஹிக்குமென்று மேலே சொன்ன ஆகாசமென்ற புருஷனே: दहर வித்யையின் தொடக்கத்திலே ஒவ்வொருவருடைய, உடலிலும் ஹ்ருதயகமலத்தில் இருப்பதாகச் சொல்லி அதனுள் இருக்கும் வஸ்து உபாஸிக்கப்படவேண்டுமென்றதால் ஆகாசமென்ற நாராயணனுக்குமேலாகவும் பரம் பொருள் ஒன்று உண்டு என்னவாகாது. அதன் மேல் அங்கேயே, என்ன அதனுள்

**प्रस्तुत्यामृतसेतुमादिपुरुषं न्यक्कृत्य मार्गान्तरं**
**तस्यैतद्घटनाय निष्प्रतिभटामुद्घुष्य सार्वेश्वरीम् ।**
**उक्तिस्तत्र ततो यदुत्तरतरं तन्मुक्तिदायीति या**

---

तत् तद्विषयकप्रश्नोत्तरवाक्यवशात् दहराकाशगुणत्वेनोद्गृणन्तीत्यर्थः ॥ अतो नात्रान्यत् परं तत्त्वमुच्यत इति ॥ द्वितीयपादे 'हृत्पद्मे स्यात्' इत्येव पाठो दृश्यते । **स्या**दिति न संभावना ; अनन्वयात् । 'अतो विधानपरमेव । उपास्यमित्यनेन तत्सिद्धेर्न तत् अपेक्षितम् ; अतो **हृत्पद्मस्था**दिति पाठो युक्तः ॥ ७५ ॥

76 अथ **अन्यास्तर्हि** इत्यत्र विवक्षितं वाक्यान्तरमपि प्रदर्श्य निर्वहति **प्रस्तुत्ये**ति । श्वेताश्वतरे, 'वृक्ष इव स्तब्धो दिवि तिष्ठत्येकस्तेनेदं पूर्णं पुरुषेण सर्वम्' इति सर्वव्यापिनं पुरुषं प्रस्तुत्य, 'ततो यदुत्तरतरं तदरूपमनामयम् । य एतद्विदुरमृतास्ते भवन्ति' इति तदधिकस्य तत्त्वस्य प्राप्यतया कथनात् नारायणाधिकमपि किञ्चित् तत्त्वमस्तीति व्योमातीतवादिनः । तदयुक्तम् । प्रथममुक्तस्य पुरुषस्य तत्प्राक्स्थितेन वाक्येन, वेदाहमेतं....तमेवं विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय इति मृत्युतरणहेतुत्वं प्रस्तुतम् । तत्प्राक्तने च मन्त्रे, ततः परं ब्रह्मेत्यारभ्य, 'ईशं तं ज्ञात्वाऽमृता भवन्ति' इति तस्यैवामृतत्वहेतुत्वमुक्तम् । 'नान्यः पन्था विद्यतेऽयनाय', इति उपायान्तरं **न्यक्कृतम्**–निषिद्धम् । अथ **तस्य आदिपुरुषस्य एतद्घटनाय**–अमृतहेतुत्वोपपत्तये **तस्य सार्वेश्वरी** सर्वेश्वरता **निष्प्रतिभटा**=प्रतिघातकरहिता, 'यस्मात् परं नापरमस्ति' इति वाक्येनोद्घुष्टा । एवं तदतिशयितवस्त्वभावमुद्घुष्य, अथ, ततो यदुत्तरतरमिति वाक्येन तदतिशयितवस्तुसद्भावः, 'य एतद्विदुरमृतास्ते भवन्ति' इति एतस्यैवामृतत्वहेतुता च कथमुच्येत ? अतः, 'यदुत्तरतरं तत् मुक्तिदायि' इति येयमुक्तिः, तत् श्वेताश्वतरागमे पूर्वं प्रोक्तस्य

---

*இருக்கிறதென்று கேள்வியும் அதனுள் அபஹதபாப்மத்வம் முதலாக ஸத்ய ஸங்கல்பத்வம்வரையிலான எட்டு கல்யாணகுணங்களும் (மற்ற குணங்களும்) உள என்று மறுமாற்றமுமிருப்பதால் பகவானுக்குமேல் பரம்பொருள் அங்கே சொல்லப்படவில்லையென்று உரையாளரான முன்னோர்கள் விளக்கி யுள்ளார்களே. (75)*

*76 ச்வேதாச்வதரோபநிஷத்தில் முதலில் பரமபுருஷனைப் பணித்த பிறகு* **ततो यदुत्तरतरं** *என்று அதன்மேலும் ஒன்று உளது. அதனையுபாஸித்து மோக்ஷம் பெறுவரென்றதால் நாராயணனுக்கும் மேம்பட்ட பொருள் உண்டென்ன வேண்டா. கீழே உலகுக்கு ஆதியான மஹாபுருஷனை மோக்ஷகாரணமென்று கூறி, மோக்ஷத்திற்கு வேறு வழியில்லை யென்று வேறொன்றைக் கழித்து. அதனை ஸ்தாபிக்க* **यस्मात् परं नापरम्** *என்று அவனுக்கு எதிரில்லாத ஸர்வேச்வரத்வத்தையும் பறை சாற்றியபிறகு அதற்கு முரண்படும்படி 'அவனுக்கு மேலும் ஒன்று உண்டு: அதுதான் மோக்ஷகாரணம் என்று மொழியுமா?*

तच्छ्वेताश्वतरागमे निगमनं प्रोक्तस्य हेतूक्तिमत् ॥ ७६ ॥

यच्छ्वेताश्वतरागमो भगवति स्पष्टप्रयोगान्तरं
तस्मिन्निर्दिशति ध्रुवं शिवपदं प्रक्रान्तमुक्तिप्रदे ।
सर्वव्यापिनि सर्वतोमुखशिरोग्रीवे ; स एव प्रभुः
सत्त्वस्यैष महान् प्रवर्तक इति व्यक्तः पुनः पूरुषः ॥ ७७ ॥

---

निगमनमात्रम् । तरप्श्रवणात् तत इति पञ्चम्या तदपेक्षितावधिवचनात् यच्छब्दस्य पुरुषपरत्वात् पूर्वोक्तपुरुषावधिकातिशयविशिष्टवस्तु प्रतीयते हीति चेन्न—तत इत्यस्य हेतूक्तिरूपत्वात् । अतस्तद्वाक्यं हेतूक्तिमत् । **ततः** तस्मात् पूर्वोक्तब्रह्मणः पुरुषस्य सर्वातिशायित्वात् तस्यैव मुक्तिप्रदत्वाच्च, य एतद् ब्रह्म विदुरमृतास्ते भवन्तीत्यर्थः । यदुत्तरतरं तदरूपमनामयमिति किमर्थमिति चेत्—किञ्चिदाशंकापरिहारार्थम् । पुरुषं महान्तमादित्यवर्णमिति सहस्रशीर्षत्वाद्याकृतिरूपयुक्ततया । आमयादिहेयाकारसंभावनया न मुक्तिहेतुतेति मन्वानं प्रत्युच्यते । अतिशयितोत्कर्षवत्त्वेनोक्तं यत् तत् खल्वप्राकृतरूपयुक्तं प्राकृतहेयरूपरहितत्वात् आमयादिप्रसक्तिरहितम् । अतस्तद्वेदनमेव मुक्तिहेतुः । तदन्यतो मुक्तिरिति मन्वानास्तु दुःखमेवापियन्तीति उक्तार्थनिगमनत्वं सुदृढमिति ॥ ७६ ॥

77 ननु 'ततो यदुत्तरतरम्' इति मन्त्रानन्तरम्, "सर्वाननशिरोग्रीवः सर्वभूतगुहाशयः । सर्वव्यापी स भगवान् तस्मात् सर्वगतः शिवः" इति शिवपदप्रयोगात् त्वदिष्टनारायणव्यतिरिक्तमुत्तरतरं तत्त्वमिति प्रतीयत इत्यत्र तत् शिवपदं नारायणपरमेवेत्याह **यदि**ति । अत्र वाक्ये आगमः कर्ता, शिवपदं कर्म, निर्दिशतीति क्रियेति स्पष्टम् । यत् शिवपदमिति यच्छब्दप्रतिसंबन्धी तच्छब्दोऽध्याहार्यः ; उत्तरार्धे तदध्याहारेणान्वयस्य दुर्वचत्वात् व्याख्यातारः पूर्वार्धमेव पदव्यत्यासेन द्वेधा विभज्य, यत् शिवपदं श्वेताश्वतरागमः निर्दिशति, तत् तस्मिन् भगवति निर्दिशतीत्यर्थमाहुः । **यदि**त्यस्य यस्मादित्यर्थ इष्यताम्, तदा न वाक्यभेदः । यस्मात् शिवपदं नामसहस्रादौ भगवति स्पष्टप्रयोगान्तरं तस्मिन् भगवत्येव मुक्तिप्रदत्वादिविशेषणत्रयविशिष्टे निर्दिशति, तस्मादेव तन्निर्देशकत्वादेव स एव पुनरपि प्रभुत्वादिविशिष्ट उपरि व्यक्त इति सर्वमेकं वाक्यम् । भगवति शिवपदप्रयोगः स्पष्टो नारायणानुवाकेऽपि, 'शाश्वतं शिवमच्युतम्, नारायणं महाज्ञेयम्' इति । रुद्रः सामान्यतः शिवः । नारायणः शाश्वतशिवः । मंगलत्वं शाश्वतमस्य । रुद्रस्तु, 'तत्पादोदकेन

---

ஆகையால், அங்கே **ततः** என்பதற்கு 'அவனைவிட' என்ற பொருளில்லை. **ततः** ஆகையால் = பரமபுருஷனே **उत्तरतर**ம் = மிகச் சிறந்தவனாய் ஹேயகுண மற்றவனாயிருப்பதால் அவனாலேயே மோக்ஷமென்று **ततः** என்றசொல்லானது கீழ்க் கூறியதை மேற் கூறுவதற்குக் காரணமாகக் காட்டுமென்க. (76)

77 ச்வேதாச்வதரத்திலேயே **सर्वाननशिरोग्रीवः...तस्मात् सर्वगतः शिवः** என்று சிவனென்று சொல்லுகிறதே யென்னில்—அச் சொல் தைத்திரீயத்திலும் ஸஹஸ்ரநாமத்திலும் பகவானிடத்திலும் ப்ரயோகிக்கப்பட்டிருக்கிறது. கீழ்

**यच्छ्वेताश्वतरश्रुतिः शिवपदं वक्ति प्रयुक्तं हरौ**
**अग्रे जाग्रति विश्वकारणपरं तत्रैव युक्तं हि तत् ।**

स शिवः स्वशिरोधृतेन'। **तस्मिन्** भगवत्येव तत् पदं निर्दिशति अत्रापि, 'स भगवान् तस्मात् सर्वगतः शिवः' इति भगवच्छब्दस्य प्रथमं प्रयोगात् । भगवच्छब्दो विष्णौ रूढ इति व्यक्तं विष्णुपुराणादिषु । प्रक्रान्ता या मुक्तिः तत्प्रदत्वं तस्यैव वेदाहमिति मन्त्रे पूर्वं व्यक्तम् । सर्वव्यापित्वमत्रोक्तं, तेनेदं पूर्णं पुरुषेण सर्वमिति प्रागुक्तम् , सर्वाननशिरोग्रीव इतीदं सहस्रशीर्षा पुरुष इत्यादिना विवरिष्यतेऽत्रैव । तस्य, सर्वत्राऽऽननशिरोग्रीवाधीनकार्यकरणदक्ष इत्यर्थः । सर्वशब्दस्य सर्वत इत्यर्थ इति उपरि 'सर्वतः पाणिपादं तत्' इति अत्रैव प्रयोगात् अवसीयते । 'तदर्थश्च गीताभाष्ये पूर्वोक्तरूपो व्यक्तः । अत्रापि, अपाणिपादो जवन इत्यादि । **यत्** यस्मात् भगवत्येव पदमिदं निर्दिशति आगमः ; न रुद्रे, अत एव स एव पुनरुपरि श्रूयते । 'महान् प्रभुर्वै पुरुषः सत्त्वस्यैष प्रवर्तकः' इति हि समनन्तरमन्त्रः । महान् पुरुषः इति पुरुषं महान्तमित्येतत्प्रत्यभिज्ञापकम् । सत्त्वप्रवर्तकत्वं विष्णोरेव प्रसिद्धं जायमान-कटाक्षादिषु बहुषु । प्रभुत्वमपि सर्वभावकत्वफलप्रदत्वादिरूपं तस्यैव । मोक्षे सिद्धोपायः स मुख्य इति प्रकृते विवक्षितमिति व्यक्तमुत्तरार्धे तत्रैव मन्त्रे ॥ ७७ ॥

78 नन्वत्र बहुषु मन्त्रेषु प्रयुक्तानि शिवपदानि रुद्रपराण्येव ; समनन्तरचतुर्थखण्डे, 'यदा तमस्तन्न दिवा न रात्रिर्न सन्न चासत् शिव एव केवलः' इति प्रलये शिवान्यनिषेधेन कारणत्वतोक्त्या तस्य पदस्य एक-व्यक्तिरूढत्वावगमेन रुद्रस्यैव सर्वकारणत्वोक्तेस्तदभ्यासरूपत्वादिति शंकां परिहरति **यदिति** । नारायणानु-वाकादौ हरौ प्रयुक्तं यत् शिवपदं श्वेताश्वतरश्रुतिः **वक्ति** प्रयुंक्ते, तत् विश्वकारणपरत्वात् **अग्रे** प्रलयकालेऽपि **जाग्रति** प्रकाशमाने **तत्रैव** हरावेव हि युक्तम् । नानार्थकतया शिवपदस्य नारायणसाधारण्यात् । 'विष्णोः सकाशादुद्भूतं जगत् तत्रैव च स्थितम्' इत्यादिस्मृतिमूलभूताः औपनिषदाः वाक्यखण्डाः, सोऽध्वनः पारमाप्नोति तत् विष्णोः परमं पदम् , सर्वव्यापी स भगवान्, व्याप्य नारायणः स्थितः, एको हवै नारायणः, ह्रीश्च ते लक्ष्मीश्च पत्न्यौ इत्यादिशब्दैः कारणं निर्दिशन्ति । ते च शब्दतः तन्मात्रा-

---

மோக்ஷமளிப்பவனுகக் கூறப்பெற்று ஸர்வவ்யாபியாய் முகம் தலை முதலிய அவயவங்களைக்கொண்டு எதையும் எங்கும் செய்ய சக்தியுள்ளவனேயே சிவ பதத்தால் சொல்வதாம் அவனே ஸத்துவகுணத்தை ஜீவர்களுக்கு அளிப்பவனென்று மேலே மொழிவதாலும் சிவபதம் அவனேயே சொல்லும் (77)

78 ச்வேதாச்வதரத்திலேயே மேலே, வேறென்றுமின்றி தமஸ்ஸு மட்டுமுள்ள காலத்தில் சிவனே தனிப்பட்டிருந்ததாகச் சொன்னவிடத்திலே சிவபதம் ஒரு வ்யக்தியைச் சொல்வதால் ரூடிப்பொருளான சிவனே அதன் பொருளாகவேண்டும்; அது போல் மற்ற சிவபதங்களுமென்ன வேண்டா. சிவன் உள்பட எல்லாவற்றிற்கும் காரணமான ஹரியையும் சிவபதம் வேறிடத்

**साधारण्यविदूर–विष्णुभगवन्नारायणाद्याह्वयैः**
**आहुः कारणमेनमौपनिषदा भागास्तदाकांक्षिणः ॥ ७८ ॥**
**यदग्रे जागर्ति श्रुतशिवपदं ब्रह्म परमं जगद्धेतुः श्वेताश्वतरनिगमान्ते स भगवान् ।**

ह्वयभूतत्वादसाधारणाः । तावद्वाक्यविरोधात्, न ब्रह्मा नेशानः, नारायणाद्रुद्रो जायते इत्यादिवाक्य-विरोधाच्च शिवपदं रुद्रव्यक्तिग्रहणाक्षमं मंगलभूतनारायणपरमेव । न च व्यक्तिविशेषप्रतीतिभंगः, सर्वनाशे स परं कथं स्यादिति शंकायां तस्य निरुपाधिकमंगलत्वरूपकेवलशिवत्वादिति हेयप्रसक्तिराहित्यरूप-कैवल्यविशिष्टशिवत्वाश्रयतदेकव्यक्तिनिर्देशस्य तदनुकूलत्वात् । अत एव मंगलवाचिनं शब्दमाकांक्षन्ति ते उपनिषद्भागा इति शिवपदप्रयोगः । न च रुद्राकांक्षित्वं तेषामस्ति ; विष्णुरूपव्यक्तिसमन्वयेन शान्तकारण-व्यक्त्याकांक्षत्वात् । यद्वा औपनिषदा भागाः सामान्यरूपेण कारणं प्रतिपादयन्तः **तदाकांक्षिणः** किं तत् कारणमिति विशेषमाकांक्षन्तः विष्णुनारायणादिभिराह्वयैः=तद्घटितवाक्यैरेव विष्णुमेव कारणत्वेना-भिदधति । तेषामेवाह्वयानां साधारण्यविदूरत्वादित्यर्थः । शाश्वतं शिवमित्यत्र शाश्वतशब्दवत् केवलशब्द इह रुद्रव्यावर्तकः शिवशब्दस्यार्थान्तरपरत्वं दर्शयति । अत्रैव, 'या ते रुद्र शिवा तनूः' (3) इति मंगलार्थे शिवशब्दः । एवं ततो यदुत्तरतरमिति वाक्यपश्चाद्भाविशिवशब्दानामिव, तत्पूर्वोत्तरभाविनाम्, 'एको रुद्रो न द्वितीयाय तस्थे' 'विश्वाधिको रुद्रो महर्षिः,' 'रुद्र यत् ते दक्षिणं मुखम्' (4) इति रुद्रादिपदानां निर्वाहोऽपि ग्राह्यः । एको रुद्र इति श्रुतिः एकादशानामपि रुद्राणामेकात्मत्वमपि ब्रूयात् । रुद्रो महर्षिं, यो देवानां प्रभवश्चोद्भवश्चेति, हिरण्यगर्भं जनयामास पूर्वमिति च तत्र श्रवणात् संसाररुग्द्रावकत्वादिकं योगार्थमादाय नारायणपर एवेति । इदं सर्वं **साधारण्यविदूरे**ति विष्वादिशब्दस्थितं वैलक्षण्यं दर्शयता व्यञ्जितम् ॥ ७८॥

79 आदौ शिवपदाभावादपि अत्र भगवत्परत्वं सुगममिति वदन्, **साधारण्यविदूरे**ति, **स्पष्टप्रयोगान्तरं, प्रयुक्तं हरौ** इति च प्रागुक्तं विशदयति **यदि**ति । श्वेताश्वतरनिगमस्यान्ते उपनिषदि, किं कारणं ब्रह्म इत्यारभ्य जगद्धेतुत्वेनोक्तं **ब्रह्म परमं** 'उद्गीतमेतत् परमं तु ब्रह्म' इत्युक्तं यत् ब्रह्म **श्रुतशिवपदं** श्रुतं शिवपदं यस्मिन् तत्–शिवपदवाच्यतया **अग्रे** उपरितनभागे पूर्वोक्तवाक्ये

---

*தில் சொல்லியிருப்பதால் இங்கும் அவனிடமே அதுதகும். விஷ்ணு, பகவான், நாராயணனென்றுற்போன்ற சொற்கள் காரணவாக்யத்திலுள்ளவை ருத்ராதிகளுக்கும் பொதுவாகா. பொதுவான உபநிஷத்வாக்யங்கள், காரணமாவது எது' என்று விசேஷத்தை அபேக்ஷிக்கிறபடியால் விஷ்ணு நாராயணாதிபதங்களைக் கொண்டு அவனையே குறிக்கும். அவ்வாக்யங்களுக்கு விரோதமாக சிவபதம் சொல்லாது (78)*

*79 ச்வேதாச்வதரோபநிஷத்தில் முதலில் ஜகத்காரணமாகக் கூறப்பெற்ற பரப்ரஹ்மமே மேலே சிவபதத்தினால் ஓதப்பெற்றதாகிறது. அது பகவானே. முதலில் காலம் ஸ்வபாவம் ஜீவாத்மா முதலானவற்றைக்*

**प्रयुक्तो यत् तस्मिन् यजुषि शिवशब्दः श्रुतिशिरसतत्साधारण्यं न समगणि नारायणगिरः॥**

**जागर्ति** प्रकाशते, सः **भगवान्** विष्णुरेव। **स** इति विधेयप्राधान्यात् पुंल्लिङ्गता। शिवपदस्याग्र एव श्रवणात् आदौ सामान्यत एव ब्रह्मकीर्तनात् तत्र **'पुरुष इति चिन्त्यम्'** इति जीवात्मनां जगत्कारणत्वाभावस्य ज्ञापनात् 'आत्माऽप्यनीशः सुखदुःखहेतोः' इति च दुःखजन्मभाक्तया जीवानां स्रष्टृत्वाभावस्य विशदीकरणात् रुद्रस्यापि जीवत्वेनावगतस्य तथात्वायोगात्, 'ते ध्यानयोगानुगता अपश्यन् देवात्मशक्तिं स्वगुणैर्निरूढाम्' इति जगन्मूलस्य प्रकृतेः सांख्यसंमतकापिलर्षिलक्षण्येन जीवात्मव्यावृत्त-देवात्मशक्तित्वेन योगिसंघदृष्टत्वस्योक्तत्वात् योगस्य च शास्त्रार्थनिर्णयोपजीवित्वेन श्रुत्यन्तराधीननिर्धारण-सापेक्षत्वप्रतीतेः तत्र च **'एको ह वै नारायण'** इत्यादितो भगवत एव कारणत्वप्रतिपत्तेरिहादावेव भगवतः कारणत्वमवसीयत इति भावः। नन्वेतदुपनिषदुत्तरवाक्यविरोधे श्रुत्यन्तरमूलकं निर्धारण-मयुक्तमित्यत्राविरोधं दर्शयति **प्रयुक्त** इति। **यजुषि श्रुतिशिरसि** तैत्तिरीयोपनिषदि **तस्मिन्** भगवति **यत्** यस्मात् **प्रयुक्तः** 'शाश्वतं शिवमच्युतम्' इति। अतः शिवशब्दः शिवशब्दवाच्यरुद्रभिन्न-साधारणः। नामसहस्रे च, 'सर्वश्शर्वः शिवः स्थाणुः' इति। अतो नामत्वेन पाठात् रुद्र इव विष्णावप्यसाधारण्यं हर्यादिशब्दस्येव नानार्थकत्वात् सुवचम्। अतो विरोधान्न मंगलान्तरसाधारण्यम्। यदि निरुपाधिकमंगलत्वं भगवदसाधारणमिति तद्गुणनिमित्तकं नामेत्युच्यते, तदाऽप्यसाधारण्यं तस्य। रुद्रेऽप्यतिशयविशेषविशिष्टमंगलार्थमादायोपपत्तौ न रूढिरिति विमर्शः संभवति। सर्वथा शिवशब्दस्य अत-त्साधारण्यं रुद्रभिन्नसाधारण्यमस्ति। **नारायणगिरः** विष्णुनारायणादिशब्दानां तु **अतत्साधारण्यम्**=न सः **असः** विष्णुभिन्नो रुद्रादिः तत्साधारण्यं न समगणि। संज्ञायामेव णत्वविधानात् अन्यत्र तत्प्रयोगाभावस्य सर्वसंमतत्वात्। अतः श्रुत्यन्तरश्रुतनारायणादिशब्दस्यानन्यथासिद्धतया तद्ग्रहणात् तदविरोधेनैव श्वेताश्व-तरोपनिषदि अग्रे जाग्रत् शिवपदं विष्णुप्रत्यायकं भवतीति न रुद्रग्रहणप्रसक्तिरिति॥ ७९॥

---

*கழித்திருக்கிறதே. ருத்ரன் ஜீவனென்றும், ப்ரஹ்மம் விஷ்ணுவென்றும் ப்ரமாணாந்தரத்தைக்கொண்டு முன்னமே முடிவு செய்யப்படுமே. அதன்பிறகு சிவபதம் ஓதியிருப்பதைக் கண்டாலும் முன் க்ரஹித்ததற்கு விரோதமில்லை, இச்சிவபதமே யஜுர்வேதத்திலே* **शाश्वतं शिवमच्युतम्** *என்று அச்யுதனிடத்திலும் ப்ரயோகிக்கப்பட்டிருக்கிறது, அச்யுதன் சாச்வத சிவனென்றதாலே ருத்ரனுக்கு சிவத்வமும் சாச்வதமன்று, ருத்ரனும் சாச்வதனல்லனென்றும் தெளிவாவதால் நிருபாதிக சிவத்வம் உள்ள விஷ்ணுவே சிவன், மங்களமான வனென்னத் தகும். ஆக நாராயணசப்தம் நாராயணனுக்கே, வேறொருவ ருக்கு ஸாதாரணமாகாது, சிவசப்தம் ருத்ரன்தவிர இதரருக்கும் ஸாதாரண மென்க. (79)*

## यद् देवैरनुयुक्त उत्तरमुशन् रुद्रो विवृत्याऽऽत्मनि

80 **कस्त्व**मिति श्लोके **तैत्तिरीयकमुखत्रयन्ते**त्युक्तं समनन्तरैः त्रिभिः श्लोकैरुपपाद्य, **अन्यास्तर्हि गिरः कथ**मिति प्रश्नतत्प्रत्युत्तरविवरणं **यत् संज्ञे**त्यारभ्य पञ्चश्लोक्या। तत्र, 'तस्मिन् यदन्तस्तदन्वेष्टव्यम्' **इति छान्दोग्य**वाक्यम्, 'ततो यदुत्तरतरम्', 'तस्मात् सर्वगतः शिवः', 'न सन्नचासच्छिव एव केवलः' इति **श्वेताश्वतर**वाक्यानि च विचारितानि। अथ, **अत्राह रुद्रः कथम्** इति प्रश्नोत्तरविवरणमारभ्यते **यद्देवै**रिति। अथर्वशिरोर्थशिक्षणं भवत्येकादशभिः श्लोकैः। अथर्वशिरोऽधिकृत्य वक्तव्यमस्मदीयेऽ**थर्वशिर**स्सारे द्रष्टव्यम्। अत्रोपयुक्तमात्रमुच्यते। अत्रैवं शंकते–विष्णुनारायणादिशब्दानां तदितरसाधारण्याभावात् श्रीपतिरेव कारणमिति यदुक्तम्, तत् अथर्वशिरोविरुद्धम्। तत्र ब्रह्म. विष्णुप्रभृतिसर्वचेतनविलक्षणस्य रुद्रस्यैव परत्वप्रतीतेः। तत्र प्रथमखण्डः, "देवा ह वै स्वर्गं लोकमायन्। ते देवा रुद्रमपृच्छन् को भवानिति। सोऽब्रवीत्—अहमेकः प्रथममासम्, वर्तामि च, भविष्यामि च। नान्यः कश्चिन्मत्तो व्यतिरिक्त इति, सोऽन्तरादन्तरं प्राविशत् दिशश्चान्तरं प्राविशत्। सोऽहं नित्योऽनित्योऽहं व्यक्तोऽव्यक्तो ब्रह्माब्रह्माहम्, प्राञ्चःप्रत्यञ्चोऽस्म्........यो मां वेद, स सर्वान् देवान् वेद सर्वांश्च वेदान्" इत्यादिः। अत्र रुद्रः स्वस्य कालत्रयवर्तित्वं स्वपृथक्सिद्धस्य कस्यचिदभावञ्च प्रथममाह। 'अन्तर्बहिश्च तत् सर्वं व्याप्य नारायणः स्थितः' इति नारायणे सर्वान्तर्यामिणि श्रूयमाणे कथं सर्वस्य रुद्रापृथक्सिद्धत्वमिति शंकायाम्, श्रुतिराह **सोऽन्तरा**दिति। अचेतनादन्तरो यश्चेतनवर्गः तस्मादप्यन्तरं नारायणमपि **स** रुद्रः प्राविशत्; अतो दिशश्च प्राविशत्; अयमेव सर्वव्यापीति। इत्थं सिद्धं व्यापित्वमेव पुनरपि रुद्रोक्त्या विव्रियते सोऽहं नित्योऽनित्य इत्यादिना। द्वितीये च खण्डे, यश्च ब्रह्मा, यश्च विष्णुः यश्च स्कन्दः यश्चेन्द्र इत्यादिना ब्रह्मविष्णुप्रभृतीनां रुद्रांशत्वं वक्ष्यत इति। तत्र षड्भिः श्लोकैः प्रथमखण्डार्थं शोधयति। 'मत्तो व्यतिरिक्त इति' इत्यत्र **इति**शब्दार्थस्तावत् विचार्यः। **इति**शब्दस्य समाप्तिः प्रकारः हेतुश्च प्रसिद्धोऽर्थः। तत्र समाप्तिपरत्वं प्रकारपरत्वं वा पूर्वपक्षीष्टम्, **इति**शब्देन रुद्रवाक्यसमाप्तिर्ज्ञाप्यते, सोऽन्तरादित्यादिकं स्वयं श्रुत्योच्यत इति च।

इदमयुक्तम्, उपरि सोऽहमिति रुद्रवाक्यानुवृत्तिदर्शनात् अत्र तत्समाप्त्ययोगात्। अतो हेतुवचनः। हेतुश्चोत्तरवाक्यार्थः पूर्ववाक्यार्थो वा। भवतु वा प्रकारवचनः। तदुपपादनम् उत्तरवाक्यतः। पूर्वपक्षिसंमते समाप्त्यर्थकत्वेऽपि नास्मदभिमतार्थासिद्धिः। सर्वथा रुद्रान्तर्यामिपारम्यमेवात्रोच्यते, न रुद्रपारम्यमिति श्लोकषट्कनिर्गलितार्थः। एतत्पद्यार्थस्तावत्–**आथर्वणे मूर्धनि**=अथर्वशिरोनाम्नि उपनिषदि रुद्रः **देवैः अनुयुक्तः**=को भवानिति पृष्टस्सन् **उत्तरम्** प्रत्युत्तरम् **उशन्** कामयमानः। वश कान्तौ। विवक्षन्निति यावत्। **विवृत्य** विवरणपूर्वकम् महतीम् **अधीश्वरधुराम्** ईश्वरकृत्यम् अतिशयितमैश्वर्यम् **आत्मनि**=

---

80 இனி அதர்வசிர உபநிஷத்விசாரம்—அதர்வசிரஸ்ஸில் ருத்ரன்.

व्याजह्रे महतीमधीश्वरधुरामाथर्वणे मूर्धनि ।
स प्रादुर्भवदन्तरात्मभगवद्भूमाऽफणत्, 'सोऽन्तरात्
अन्तः प्राविश'दित्यधीतविधया तद्वामदेवादिवत् ॥ ८० ॥

नान्यः कश्चिन्मत्त इत्युग्रवाक्यादूर्ध्वं(र्ध्वो) नेतिस्तत्समाप्तिं ब्रवीति ।

---

यस्मिन् व्याजह्रे व्याहरत् अवोचदिति यत्, तत् सः रुद्रः वामदेवादिवत् प्रादुर्भवदन्तरात्मभगवद्भूमा सन् अफणत् व्याजहार । कथं तत् ज्ञायते, सोन्तरादन्तरं प्राविशदित्यधीतविधया । एवमधीतत्वादित्यर्थः । अधीतप्रकारेण प्रादुर्भवदित्यन्वयः । सोन्तरादिति वाक्यदर्शितरीत्या स्वान्तरात्मभूतस्य भगवतः विष्णोर्भूमा महिमा सर्वान्तरात्मत्वं प्रादुर्भवन् साक्षात्कृतत्वात् प्रकाशमानो यस्य तादृशस्सन् अफणत् । यथा वामदेवो नाम ऋषिः, 'अहं ब्रह्मास्मि' 'अहं मनुरभवं सूर्यश्च' इति पश्यन् प्रतिपेदे तद्वदित्यर्थः । 'शास्त्रदृष्ट्या तु' इति सूत्रे इदं द्रष्टव्यम् । अयमपि कश्चित् वामदेवः तद्वदाह स्मेति ; आदिपदेन प्रह्लादग्रहणम् । 'सर्वगत्वादनन्तस्य स एवाहमवस्थितः । मत्तस्सर्वमहं सर्वं मयि सर्वं सनातने' इति हि सोऽफणत् । अतो भगवति स्वान्तरात्मत्वं दृष्ट्वा तत एव तस्याहंशब्दवाच्यत्वमप्यवधार्य मदन्तर्यामी प्रथममास, वर्तते, भविष्यति चेत्यर्थाभिप्रायेण अहमेक इत्याद्यवोचत् । तथाच नात्र रुद्रपारम्यसिद्धिरिति ॥ ८० ॥

81 ननु सोऽन्तरादिति वाक्ये स इति रुद्रः परामृश्यते । तच्छब्दस्य पूर्वोक्तपरामर्शित्वात् । रुद्रस्य प्रकृतत्वात् विष्ण्वादिप्रस्तावस्य प्राक् अभावाच्च । पूर्वं सोऽब्रवीदिति तच्छब्दगृहीतस्यैव ग्रहणौचित्याच्च । न च रुद्रवाक्यमध्ये रुद्रेण स्वस्य अहमिति निर्देष्टव्यस्य कथं स इति निर्देश इति शंक्यम् । इतिशब्देन रुद्रवाक्यस्य समाप्तत्वावगमात् । अस्य सोऽब्रवीदितिवत् श्रुतिकर्तृकवाक्यत्वात् । तत्र इतिशब्दस्य समाप्तिरेवार्थश्चेत्, रुद्रवचनसमाप्तिरित्यर्थः । तेन अहमेवेत्यादिकं सोब्रवीदित्युक्तवचनप्रकार इति अर्थाद् ज्ञायते । इतिशब्दस्य प्रकारार्थकत्वे प्रकारः आनुपूर्वी । अहमेव प्रथममित्याद्यानुपूर्वीप्रकारकवचनवान् स इति कथनात् अर्थात् वाक्यसमाप्तिर्ज्ञायते । अतो रुद्रस्यैवान्तर्यामित्वं प्राविशदित्यन्तेनोक्तमिति शंकायामाह नान्य इति । 'नान्यः कश्चिन्मत्तो व्यतिरिक्तः' इत्यस्मात्

---

நீர் யார் என்று தேவர்களால் கேட்கப்பட்டு, தன்னை விவரித்துக்கொண்டு தன்னிடம் பெரிய ஈச்வரத்தன்மையைச்சொன்னது உண்மையில் தானே ஸர்வேச்வரனென்ற கருத்தினாலல்ல. தனக்கு அந்தர்யாமியான பகவானின் மாட்சிமையை யனுபவித்துச் சொன்னதாம். இது, 'ஸோந்தராதந்தரம் ப்ராவிசத்' என்ற சொல்லால் விளங்கும். தனக்கில்லாமல் தன் அந்தர்யாமிக்கு இருப்பதை யிப்படி வ்யவஹரிப்பதுண்டு. உபநிஷத்தில் வாமதேவ ரிஷியிடமும் புராணத்தில் ப்ரஹ்லாதனிடமும் இதனைக் காண்க. இந்த்ரனி

**प्राग्वत् पश्चादुग्रवाक्यानुवृत्तेः सोऽहं नित्योऽनित्य इत्यादिभंग्या ॥ ८१ ॥**
**सोऽतो हेतुं वक्ति नेतिः प्रकारं प्रह्लादोक्तो हेतुरन्तःप्रवेशः ।**
**प्रह्लादोक्तिः सर्वगत्वादनन्तस्येति व्यक्ता वैष्णवाख्ये पुराणे ॥ ८२ ॥**

---

**उग्रस्य** रुद्रस्य वाक्यादूर्ध्वः=उपरि स्थितः इतिः **इतिशब्दः तत्समाप्तिं** तत्र रुद्रवाक्यसमाप्ततां न ब्रवीति । **प्राग्वत्** पूर्वम् अहमेक इतिवत्, पश्चात् 'सोहं नित्योऽनित्यः' इत्याद्यानुपूर्व्या अहंशब्दघटिततया उग्रस्य वाक्यमनुवर्तत इति ज्ञायते हि । अतः तद्वाक्यसमाप्तिपर **इति**शब्दो मध्ये न युक्तः । अतो रुद्रवाक्य-मध्यनिविष्टतया **सोऽन्तरा**दिति वाक्ये **स इति** रुद्रग्रहणायोगात् **प्राविश**दिति प्रथमपुरुषनिर्देशाच्च अन्यस्यैव ग्रहणम् । अन्यस्याप्रसक्त्या प्रसिद्धपरामर्शित्वस्वीकारेण भगवत्परत्वमिष्यते । **सः** विश्वमूर्ति-र्भगवान् **अन्तरादन्तरं** हृदयपुण्डरीकादन्तरं जीवं अष्टमूर्तिततया अन्तरादप्यन्तरं माञ्च प्राविशत् । अन्यदपि सर्वं **दिशश्चे**त्युक्तं प्राविशदिति परमात्मन एव सर्वत्र प्रवेश इह रुद्रेणोक्तो भवतीति ॥ ८१ ॥

82 पूर्वोक्तयुक्त्यैव प्रकारपरत्वमपि नेति वदन् हेतुपरत्वम्, तदा कः कुत्र हेतुरिति चाह **स इति** । **अतः इति**शब्दस्य समाप्त्याद्यर्थकत्वायोगात् । **सः इतिः** हेतुं वक्ति; नापि प्रकारम् । **हेतुश्च** सर्वान्तःप्रवेशः प्रह्लादेन, मत्तः सर्वमहं सर्वमित्यर्थस्यापकृतयोक्त इति अत्रापि प्राविशदित्युक्तः प्रवेशो हेतुः; अहमेक आसमित्युक्तार्थसाधकत्वात् । का सा प्रह्लादोक्तिरिति चेत्—**वैष्णवे पुराणे** विष्णुपुराणे सर्वगत्वादनन्तस्येत्याकारिका स्पष्टा किल । एवं तर्हि प्राविशदित्येतदनन्तरेण भाव्य**मितिना**; न तु पूर्वमिति चेत्—अनन्तरमेव योज्यते । समाप्त्यर्थकत्वे, सोऽहमिति वाक्यारम्भात् प्राक् पुनः, सो ब्रवीदिति पदद्वयाध्याहारप्रसंगात् तदपेक्षया स्थितस्योत्तरत्र योजनाया उचितत्वात् ॥ ८२ ॥

---

டத்தில் இது இந்த்ரப்ராணாதிகரணத்தில் வேதவ்யாஸரால் குறிக்கப் பெற்றது. (80)

81 'ஸோந்தராதந்தரம்' என்பது ச்ருதிவாக்யமே; ருத்ரவாக்யமன்று; ஆகையால் ருத்ரனுக்கே அந்த:ப்ரவேசம் சொல்லப்படும், ருத்ரவாக்யம் முன்னமே முடிவுற்றது. அதனாலேயே முன்னம் **इति**சப்தம் அதன் ஸமாப்தியைச் காட்டவுளதென்பர். இது தகாது. இதற்குமேலும், 'ஸோஹம் நித்யோ நித்ய:' என்று ருத்ரன் சொல்வதிருப்பதால் முன்னம் அவன்பேச்சு முடிவுறவில்லை ஆக இடையிலுள்ள 'ஸோந்தராத்' என்ற வாக்யமும் ருத்ரனுடையதே யாகும். (81)

82 ஆகையால் **इति**சப்தத்திற்கு ஸமாப்தி, ப்ரகாரம், ஹேது என்ற பல பொருள் இருந்தாலும் இங்கு ஹேதுவே பொருளாம், அஹம் (நான்) என்ற சொல்லாலே பகவானைச் சொல்வதற்கு ஹேது என்ன என்று பார்த்தபோது **सर्वगत्वादनन्तस्य...मत्तः सर्वम्** என்ற ப்ரஹ்லாதவாக்யத்தினின்று தன்னிடத்தில்

**अथवेतिपदेन हेतुरत्र व्यतिरेकोऽकथि नान्य इत्यधीतः ।**
**अहमेक इतीरितान्वयस्य ; प्रतिपत्तु सुकरः प्रकारपक्षः ॥ ८३ ॥**

83 प्रह्लादवाक्ये तथात्वेऽप्यत्र स्वस्थान एवेतिशब्दस्यान्वयकथनं ज्याय इत्यभिप्रेत्य **हेत्वर्थ**-कत्वमेवान्यथोपपादयति **अथवेति** । **इति**शब्देनात्र 'नान्यः कश्चिन्मत्तो व्यतिरिक्तः' इति वाक्योक्तो यो **व्यतिरेकः** मद्व्यतिरिक्तवस्त्वन्तराभावः स एव, अहमेकः प्रथममासमित्याद्युक्तस्य स्वसार्वकालिकत्वरूपस्यान्वयस्य **भाव**पदार्थस्य ; तं प्रतीति यावत्, **हेतुरकथि** हेतुत्वेनोक्तः । न च स्वसार्वकालिकसत्तां प्रति स्वातिरिक्तवस्त्वभावः कथं हेतुः ; **एक** इति शब्दोक्तैकत्वविवरणमात्रं किलेदमिति वाच्यम्—अहमेक आसमित्यनुक्त्वा **प्रथम**मिति पदस्यापि प्रयोगात्, अहं कारणतया स्थित इत्यर्थलाभात् एकशब्देन नामरूपविभागराहित्येनात्रस्थानं लभ्यते । प्रकृतिपुरुषयोरपि तदा सत्त्वात् स्वस्यैव कथं कारणत्वमिति शंकापनुत्तये नान्य इति वाक्यम् । अन्यपदस्यापि सत्त्वात् व्यतिरिक्तपदं पृथक्सिद्धार्थकम्, प्रकृतिपुरुषयोरपि मदपृथक्सिद्धतया मत्पृथक्सिद्धवस्त्वन्तराभावात् तयोः कारणत्वमपि मदधीनमिति ममैव कारणत्वमुपपन्नमित्युच्यते । अत एव सर्वस्य मदपृथक्सिद्ध्या मम भवद्भविष्यत्कालसत्त्वमपीत्युपपन्नमिति भावः । एवं हेत्वर्थकत्वपक्षः पद्यद्वयेनोपपादितः । अत्रैव तुरीयपादेन प्रकारार्थकत्वपक्षोपि स्वीकर्तुं शक्य इत्याह । प्रकारपक्षोऽपि **प्रतिपत्तु सुकरः** उचितान्वयोपपादनेन सुस्वीकर इत्यर्थः । अयमाशयः—अहंपदेन रुद्रग्रहणेन तस्य सर्वकारणत्व, सार्वकालिकत्व, स्वापृथक्सिद्धसर्वकत्वानां कथनं श्रुत्वा देवाः 'कथमिदं घटते । अस्याप्यस्मत्तुल्यजीवविशेषत्वादित्यचिन्तयन् । अत उपपादयत्येवम् । तत् इतीत्यस्य इत्थमित्यर्थः, तथोक्तं टीकायां **व्यासार्यैः** । तमेव प्रकारं स एवाह **सोन्तरा**दिति । भगवत एव मयि अन्यत्र च सर्वत्र प्रविष्टत्वात् अहमिति मदन्तर्यामिग्रहणात् नानुपपत्तिरिति । अथवा अहं सर्वदा अस्मि, मद्व्यतिरिक्तवस्त्वभावरूपप्रकारवांश्चास्मीति मन्ये इत्यर्थः । तदुपपादनमुपरि ॥ ८३ ॥

---

பகவானின் அந்த: ப்ரவேசமே என்று விஷ்ணுபுராணத்தில் தெரிவதால் இங்கே 'ஸோந்தராத்' என்று அது சொல்லப்படுவதால் அதுவே ஹேது. ஆகையால் **इति** என்ற சொல்லை அந்த வாக்யத்தின் முடிவிற் சேர்க்க. (82)

83 உள்ளவிடத்தில் கொள்வதை விட்டு வேறிடம் கொண்டு போவது தகாதென்னில்–**इति**சப்தம் இங்கேயே இருக்கட்டும். 'அஹமேக: ப்ரதமம் ஆஸம்' என்ற வாக்யத்தில் நான் ஒருவனே முன்னமிருந்தேன் என்று சொல்லப்பெற்றது. அதற்குஹேதுவானது 'நாந்ய:கச்சித் மத்தோ வ்யதிரிக்த:' என்று சொல்லப் பெற்றது, என்னை விட்டுப் பிரிந்தொன்று மில்லை யென்பது இதன்பொருள், இந்த இல்லாமை முன்மொழிந்ததற்கு ஹேது வாகலாம். இனி **इति** என்பதற்கு **ப்ரகாரம்** என்ற பொருளும் பொருந்தும். **इति** என்பதற்கு 'என்றபடி' என்று பொருள். அந்த ப்ரகாரமும், கீழ்க்கூறிய **விதமாக** என்றோ, மேலே சொல்லப்போகிறபடியென்றோ கருத்தாகையால் கூடும். (83)

रुद्रस्योक्तिः सोऽन्तरादित्यतोऽसौ तस्मादन्यः कोऽपि तस्यान्तरात्मा ।
अन्येषाञ्चेत्युच्यते सोऽन्तरादित्युक्तथा रौद्र्या ; सोपि विष्णुः प्रसिद्धः ॥ ८४ ॥
इत्युक्तिर्वा समाप्तिं वदतु हरगिरः सोऽन्तरादित्यतोऽसौ
मा भूत् रुद्रोक्तिः ; इत्थंसति न विघटना किञ्चिदस्मन्मतस्य ।
रुद्रः स्वात्मात्मभूतं हरिममलधिया संप्रविष्टश्चिकीर्षु-

---

84 एवं समाप्त्यर्थकत्वमुपेक्ष्य इतिशब्दस्यार्थान्तरपरत्वमुपपाद्य ततः सिद्धं स इत्यस्य रुद्रार्थकत्वाभावं निगमयति रुद्रस्येति श्लोकेन । समाप्तिपक्षे हि सोन्तरादित्युक्तिः श्रुत्युक्तिः स्यात् । रुद्रस्तदा स इति गृह्येत, अतः इतिशब्दस्यान्यार्थकत्वात् रुद्रवाक्यस्यासमाप्तत्वात् असौ सोन्तरादित्युक्तिः रुद्रस्यैव । एवञ्च स इति स्वस्य ग्रहणायोगात् तस्मात् रुद्रात् अन्य एव कश्चित् सोन्तरादिति वाक्येन तदन्तरात्मतया तत्र कथ्यते । अत्रैव दिशश्चेत्यनेन तस्य रुद्रस्येव । अन्येषां सर्वेषामप्यात्मत्वेन रुद्रादन्य एव कथ्यते ॥ कोऽसावन्यः स्यादिति विमर्शे प्रमाणान्तरे विष्णोस्तथात्वं प्रसिद्धमिति स इति प्रसिद्धार्थकमिति समञ्जसम् ॥

85 पूर्वपक्षिसंमते समाप्त्यर्थकत्वपक्षेऽपि स्वाशयाविरोधमाहानन्तरश्लोकेन इतीति । इत्युक्तिः इतिकारः हरगिरः अहमेव प्रथममित्यारब्धस्य रुद्रवचसः समाप्तिं वदतु । वा इति पूर्वोक्तेन सह विकल्पपरम् । अतः समाप्तत्वात् सोऽन्तरादित्यसौ उक्तिः रुद्रकर्तृकोक्तिर्मा भूत् । श्रुत्युक्तिरेव । इत्थं सति= एतावता अस्मन्मतस्य विघटना अघटमानता किञ्चित् ईषदपि न । समाप्त्यर्थकस्यास्य रुद्रकर्तृकसर्ववाक्यान्ते योजनसंभवात् (ता.दी.) । अत्रैव वास्तु ; तदाऽपि न दोषः । तदुपपादयति रुद्र इति । इदानीं स इत्यस्य रुद्रवाचित्वात् रुद्रः अन्तरं प्राविशदित्युक्ते रुद्रस्यैवान्तर्यामित्वमुक्तं भवति ; अन्तरमिति विष्णोर्ग्रहणे विष्णुं प्रत्यपि तस्यान्तर्यामित्वं सिध्यतीति हि युष्माकं शंका । सा न । प्राविशदित्यस्य रुद्रस्वरूपप्रवेशपरत्वं विहाय अमलधिया निर्मलज्ञानेन संप्रविष्टः—अवगाहते स्म, बुद्ध्या जग्राहेत्यर्थ-

---

84 'ஸோந்தராத்' என்கிற வாக்யம் ருத்ரனுடைய வார்த்தை என்றதால் ஸ: என்பதற்கு ருத்ரன் பொருளாகான், வேறொருவன் அந்தராத்மா அவனுக்கும் மற்றவைக்குமென்றதாம். அவ்வாத்மா விஷ்ணு என்பது பல ச்ருதிப்ரஸித்தம். (84)

85 इति என்னும் சொல்லுக்கு ஸமாப்தி = முடிவு பொருளானாலும், ஸோந்தராத் என்பது ருத்ரனின் பேச்சன்று என்றாலும் எமது கொள்கை பொருந்தக் குறையில்லை. इति என்றவிடத்தில் ருத்ரன்பேச்சு முடிந்தது. ஸ: அந்த ருத்ரன் தன் உள்ளிருக்குமவனைப் புகுந்தா னென்றால், அந்தராத்மா வினிடம் தன் புத்தியை நன்கு செலுத்தினனென்றதாம். புத்திமானயிருப்பவன் எந்த மனிதன் எந்தநோக்கத்துடன் இருக்கிறனென்பதை யறிய அந்தந்த மனிதனிடம் புகவேணுமென்ற சாணக்ய வாக்யத்திற்போல்

मेधावीव स्ववश्यं नरमपरमिति व्यज्यते वेदवाचा ॥ ८५ ॥
श्रुत्वा रुद्रवचस्तदीयमहिमस्तोत्राय लब्धोद्यमाः
सर्वैश्वर्यमथर्वमूर्ध्नि यदपि व्याजह्रिरेऽस्मामराः ।
तेऽन्तर्यामिसमाधिहेतव इह व्यक्ता हि रुद्रोक्तयः

वर्णनात् समन्वयात् । तादृशार्थपरत्वे उदाहरति **चिकीर्षुरिति** । नरं स्ववश्यं चिकीर्षुर्मेधावीवेति दृष्टान्तः । यं नरं स्ववश्यं कर्तुमिच्छति मेधावी, तं नरं [स्वमेधया] स प्रविशतीति] **चाणक्येनोक्तम्**, "यस्ययस्य हि यो भावः, तेनतेन हि तं नरम् । अनुप्रविश्य मेधावी क्षिप्रमात्मवशं नयेत्" इति । यो नरो यद्भाववान् तद्भावविशिष्टं तमनुप्रविश्य=तद्भाववानयमिति स्वबुद्ध्या सम्यगवधार्येत्यर्थः । इदं चाणक्यवाक्यं **श्रुतप्रकाशिकाया**मेतद्विवरणार्थमुपात्तम् । तथाचापरं नरं वश्यं चिकीर्षुर्मेधावीव, रुद्रो हरिममलधिया संप्रविष्ट इति वेदकर्तृकया सोऽन्तरादिति वाचा ज्ञाप्यते । न हि मेधावी अपरं नरं संप्रविष्ट इत्युक्तौ तदन्तर्मेधाविस्वरूपप्रवेश इष्यते ; तद्वदिति । **प्राविशदित्यस्यैवमर्थवर्णनात्** प्रमाणान्तर-प्राप्तविष्णुपारम्याविरोधः । उपरि **सोऽह**मित्यादेः प्राक्, सोऽब्रवीदिति पुनर्वाक्यानुषंगः कार्य इति युष्मा-कमपि संमतमेवेति । **एवं** प्रथमखण्डार्थ उक्तोऽभूत् ॥ ८५ ॥

86 ननु सर्वोऽप्ययं महिमा न रुद्रस्य, किंतु तदन्तर्यामिण इति यदि, तर्हि देवैस्तत्त्व-ज्ञानानन्तरं किमिति रुद्र एव स्तूयते नम्यते च पौनःपुन्येन । अतस्तेषां प्रश्नोत्तरग्रहणानन्तरमपि रुद्र-ध्यातत्वस्याप्युक्तेः रुद्रपारम्यमेवोपनिषदर्थ इति शंकां परिहरन् द्वितीयखण्डाशयं दर्शयति **श्रुत्वेति** । **अथर्व-मूर्ध्नि**=अथर्वशिरसि रुद्रवाक्यश्रवणानन्तरं अमराः **तदीयस्य** रुद्रशब्दवाच्यसंबन्धिनो महिम्नः **स्तोत्राय** गुणकथनाय **लब्धोद्यमाः** बुद्धिपूर्वं प्रवृत्ताः । अनेन तदुक्तो महिमा तदीय एव, न तु भगवत इति पूर्वपक्ष्याशयद्योतनम् । **अस्य रुद्रशब्दवाच्यस्य सर्वैश्वर्यम्** । सार्वैश्वर्यमिति पाठाभावात् सर्वमैश्वर्यमिति विग्रहः । षष्ठीतत्पुरुषे सर्वनिरूपितमीश्वरत्वमित्यर्थः । यत् **व्याजह्रिरे** व्याहृतवन्तः, **इह** अस्मिन् सर्वैश्वर्यविषये **ते** अमराः **अन्तर्यामिसमाधिहेतवः** तदैश्वर्यसंबन्धितया रुद्रान्तर्यामिभगवद्भावनाया अस्मासूत्पाद्यायाः हेतवोऽभूवन् । यद्वा सर्वैश्वर्यं व्याजह्रिरे इति यत्—**इह** वचने इत्यर्थः । एतद्वचनद्वारा अमराः अस्माकं समाधिशिक्षका इति यावत् । यदि देवा न पृष्टवन्तः स्युः, रुद्रो न स्वाभिमतं प्रकाशितवान् स्यात् । प्रकाशितमाकर्ण्य यद्येवं देवा न स्तुतवन्तः स्युः, तर्हि देवानां रुद्रोक्तौ अविश्वास इत्यपि ग्रहणसंभवात् रुद्रान्तर्यामिनिष्ठतया सर्वैश्वर्यविषयकभक्तियोगः कार्य इति निश्चयो नास्माक-मुदियात् । तेषां व्याहाराश्च, 'यो वै रुद्रः स भगवान् यश्च ब्रह्मा' इत्याद्याकारकाः रुद्रे भगवदभेदं

இதற்குப் பொருளாகுக. (85)
86 ருத்ரன் பேச்சைக் கேட்டுப் பிறகு அவனுடைய மேன்மையைப் புகழ தேவர்கள் முயன்றுராய் அவனுக்கு ஸர்வேச்வரத்வத்தைச் சொன்னார் களென்பதிலிருந்து அமரர்கள் நமக்கு அவனது அந்தர்யாமிவிஷயத்

**तद्युक्तास्तदनूक्तयस्तु दिविषद्वाकास्तदेकाशयाः ॥ ८६ ॥**
**ओंकारपूर्वकतया प्रतिपादितानि नामान्तराणि ननु रुद्रपुरस्सराणि ।**
**आथर्वणे शिरसि ; तानि तु न प्रसिद्धरुद्रेशितृत्वमुपपादयितुं क्षमन्ते ॥ ८७ ॥**

---

ब्रह्मादिसर्वप्रपञ्चवस्त्वभेदञ्च दर्शयन्तः रुद्रान्तर्यामिणो भगवत्त्वात् तन्मुखेन ब्रह्माद्यन्तर्यामित्वस्यापि सद्भावात् वामदेववाक्य इवाभेद इति भगवद्घटनयैवेदमैश्वर्यमिति ज्ञापयन्तः रुद्रान्तर्याम्युपासनमपि सत्यापयन्तीति भावः । अत्र **ते** इत्यस्य स्त्रीलिंग**रुद्रोक्ति**विशेषणत्वायोगात् **दिविषद्वाका** इत्येतद्विशेषणत्वं **यद्**इति पूर्वार्धगतयच्छब्द-प्रतिसंबन्धित्वञ्च व्याख्यातृभिरादृतम् । **अन्तर्यामिसमाधिहेतव** इत्यस्य रुद्रोक्तिविशेषणत्वञ्चोक्तम् । **तद्युक्ता** इत्यत्र **तत् युक्ताः** इति पदद्वयं कृत्वा **तत्** तस्मादिति हिशब्दप्रतिसंबन्धीत्युक्तम् । तत्र पक्षे ते इत्यस्य वाक्यव्यवहितस्यातिदूरेऽन्वयः कर्तव्यो भवति । एतदपेक्षया **ते** इति पदं विहाय **अन्तर्यामिसमाधी**त्येव पाठः श्लाघ्यः स्यात् ; **तद्युक्ता** इत्यत्रैव **ते युक्ता** इति प्रयुक्तं स्यात् । ते इत्यस्य प्रधानपरामर्शितया अमरग्रहणं सुकरमेव । अर्थोपपादनञ्च कृतमेव । अतः **तेऽन्तर्यामि-समाधिहेतव इह**ेति पृथग्वाक्यम् । **ते** इत्यस्य व्याहारा इत्यर्थकत्वेऽपि इहेत्यन्तं पृथग्वाक्यमित्येव अन्वयक्लेशाभावाय युक्तम् । ननु यो वै रुद्रः स भगवान् यश्च विष्णुरित्यपि देवैर्व्याहृतत्वात् रुद्रान्तर्यामी भगवान् विष्ण्वन्तर्यामी चेति तदर्थावगमात् कथं विष्णुपारम्यमित्यत्राह **व्यक्ता** इति । प्रारम्भे रुद्रोक्तयः, सोन्तरादन्तरं प्राविशदिति विशधातुप्रयोगात् स्वान्तःप्रविष्ट(विष्णुरूप)परवस्तुयुक्ततया व्यक्ताः हि । तत्रान्त-र्यामिग्रहणं स्पष्टं किल । **दिविषद्वाकाश्च** देवकर्तृकोक्तयश्च **तदनूक्तयः** तदनुवादरूपत्वात् **तदेकाशयाः** अन्तर्याम्यभिप्रायप्रवृत्ता एव । **स भगवा**नित्यस्य तदन्तर्यामी भगवानित्येवार्थ इति भावः । **यश्च विष्णु**रिति तु रुद्राख्यजीवात्मान्तर्यामिणो विष्णुविग्रहान्तर्यामित्वमपीत्यर्थकम् । एतदर्थमेव चं विना तुः प्रयुक्तः ॥ ८६ ॥

87 अथर्वशिरसि कोशभेदेन खण्डविभागो विभिन्नतया लक्ष्यते ; पाठभेदाश्च । तदिदमस्माभि-रथर्वशिरस्सारेऽप्यदर्शि । साम्प्रदायिकग्रन्थेष्वपि एतत्खण्डविभागोक्तिर्नैकप्रकारा । तदत्र तृतीयखण्ड एव ओंकारनामानि पठितानीति तद्विषये वक्तव्यमाह **ओंकारे**ति । ओंकारस्य रुद्रेशानमहेश्वरादिशब्दैः कीर्तनात् स एव ओंकारस्याप्यर्थ इति श्रुत्यभिप्राय इति शंका । **नन्वि**ति प्रश्ने । प्रत्याह **तानि त्वि**ति । प्रसिद्धस्य पार्वतीपतेः सर्वेशितृत्वं स्थापयितुं न समर्थानीत्यर्थः । यद्वा ननु=खलु । ओंकारपूर्वकतया प्रतिपादितानि खल्विति हेतुः ॥ ८७ ॥

---

*தை யறிவிப்பதாகக் கொள்க அவ்வாறுதானே ருத்ரன் சொன்னான். தேவர் களின் பேச்சுக்கும் அதே கருத்தாம். (86)*

*87 மேலே **ருத்ரா**தி நாமங்களையிட்டுப் புகழ்ந்ததும் **ருத்ர**னுக்கு ஸர் வேச்வ**ர**த்வத்தைச் சொல்வதற்கல்ல. ஓங்கார**த்தைத்** தொடங்கிச் சொன்ன தால் ஓங்காரத்திற்கே ருத்ராதி நாமாக்களும் அவற்றின்பொருளுமென்றதாம்.*

**समाख्याः प्रक्रान्तप्रणवविषयिण्यः प्रतिपदं**
**निरुक्ता रुद्राद्या यदपि हि महादेवशिरसः ।**
**श्रुतेराथर्वण्याः शिरसि तदिदं तारविभवं**
**व्यनक्त्योंकारः स्यादुपरितनविद्यापरिकरः ॥ ८८ ॥**
**पन्था बन्धस्य शान्तेः पशुपतिभजनं नन्विहाथर्वमूर्ध्नि**

---

88 ननु कथं न समर्थानि । उत्तरखण्डे हि रुद्रेशानादिनामान्येव निरुच्यन्ते, 'ऋषिभिर्द्रुतमस्य रूपमुपलभ्यते इति रुद्रः, यः सर्वान् देवान् ईशते इतीशानः' इत्यादिना इत्याशंकायाम्, ओंकारस्यैव प्रणवादिशब्दवत् रुद्रादिशब्दा अपि समाख्या इत्युक्त्वा तत्र तदर्थसमन्वयविधानाय निरुच्यन्त इति नात्र देवतान्तरग्रहणप्रसक्तिरित्याह **समाख्या** इति । प्रक्रान्तो य ओंकारः स्वशब्देन प्रणवशब्देन च, तद्विषया एव समाख्या इति तदभेदनिर्देशात् ज्ञायते । कास्ताः इत्यत्र विवादविषयसमाख्यामात्रं निर्दिशति **रुद्रे**ति । रुद्रेति प्रथमं निर्दिश्य ईशानादिपदमपि प्रयुज्यते ; महादेवशब्दोऽपि प्रयुक्तः तदाह **महादेवशिरस** इति । इदञ्च महीशूरमुद्रितान्ध्रकोशपाठानुसारेण । अन्यत्र महादेवशब्दाभावात् । आथर्वण्याः श्रुतेः शिरसि प्रतिपदमिमाः समाख्याः निर्वचनविषयीकृता इति यत्—तदिदमपि न रुद्रदेवतायां तासां समाख्यानां समन्वयाय । तत्र तत्तद्रूढेः प्रसिद्धतया विवादाभावात् । किंतु **तत्** निर्वचनं **तारस्य** ओंकारस्य तत्तत्समाख्याप्रतिपाद्यं **विभवं** महिमानं **व्यनक्ति** ज्ञापयति । रुद्रादिशब्दानां रूढ्यर्थं विहाय व्युत्पत्त्या परमात्मपरत्वं स्वीकृत्य तादृशमहिमब्रह्मप्रतिपादकतया तत्तच्छब्देन प्रणव इहाभेदेन प्रशस्यते ; साक्षादपि इति व्युत्पादनमिदं रुद्रनिवारकमेवेति भावः । ननु किमिति तारस्य नामान्तरनिर्देशेनार्थविवरणम् ; तत्राह **ओंकार** इति । एतदथर्वशिरोविधास्यमानायां मुक्त्यर्थविद्यायामोंकारः करणभूतो मन्त्रः । तत्र रुद्रान्तर्यामितया भगवदुपासनात् रुद्रादिसमाख्यार्थानामोंकारे समन्वयाय निर्वचनं स्थाने इति भावः ॥ ८८ ॥

89 नन्वत्रोपरि, 'एको रुद्रो न द्वितीयाय तस्थे', 'बुद्ध्या संचितं स्थापयित्वा तु रुद्रे', 'शान्ति संसृजति पशुपाशविमोक्षणम्' इति पशुपाशविमोक्षणार्थमस्मत्कर्तव्यं रुद्रोपासनमुपदिश्यते । पशुपाशविमोक्षणकर्तृत्वेन च रुद्र एव प्रसिद्धः । तस्योपास्याकारसमर्पणमेवाऽऽदितः क्रियते । अत एव तदुपरि, 'अग्निरिति भस्म' इत्यारभ्य भस्मधारणमपि शिष्यते । विष्णूपासकत्वे भस्मधारणस्य प्रसक्त्यभावात् । अतोऽन्तर्यामितया विष्णुघटनमयुक्तमित्यत्राऽऽह **पन्था** इति । पूर्वश्लोकवत् अयमपि

---

*88 ருத்ராதியாய் மஹாதேவபதம் வரையிலான பெயர்களுக்குப் பொருள் கூறியதெல்லாம் தொடங்கிய ப்ரணவத்திற்கு அவற்றை ஸமந்வயப்படுத்துவதற்காக; அதனால் ப்ரணவவைபவம் அறிவித்தபடி ப்ரணவப்ரசம்ஸையும் இங்கே வித்யைக்கு அது. மந்த்ரமானபடியால். (88)*

प्रोक्तः ; प्राच्या तदुक्त्या स्फुरति हरिरिहोपासनीयस्तदात्मा ।
यद्वन्मध्वादिविद्यास्वितरसुरतनुः ; स्रष्टृसृज्यादिभावः
श्रौतस्तत्रापि तुल्यः ; श्रुतमिह भसितं प्रस्तुतोपास्तिशेषम् ॥ ८९ ॥

---

शंकापरिहारोभयात्मकः । कस्त्वमिति श्लोकप्रभृति हि जिज्ञासुतदितरसंभाषणात्मकत्वं यथायथम् । प्रोक्त इत्येतदवधिः शंकाग्रन्थः । **नन्विहेत्यत्र** 'निर्विहा' इति 'निर्वह' इति च पाठोऽप्रसिद्धः क्वचित् लेखकस्खलनकृतः । अतो विहन्तीति **विहा**—विघ्नः ; **निर्विहा** निर्विघ्नः इत्यादिकल्पनमनपेक्षितम् । 'पन्थानं बन्धशान्तेः पशुपतिभजनं निर्वह' इति पाठे **प्रोक्त** इति पदस्योत्तरत्रान्वयस्य वक्तव्यतया क्लेश एव । अर्थस्तु—अथर्वशिरसि इहोपरितनभागे **बन्धस्य** पशुपाशस्य **शान्तेः** विमोक्षणस्य **पन्थाः** उपायः पशुपतिभजनरूप एव प्रोक्त इति कथमन्तर्यामिग्रहणमिति । परिहरति **प्राच्येति** । अयमर्थः—एको ह देवः इत्यस्मात् प्रघट्टकात्प्राक् **तदेतद्रुद्रचरितम्** इत्युपसंहारः कृतोऽस्ति । तदर्थश्च तदिदमुपासनं रुद्रानुष्ठितमिति । प्रारम्भे सोन्तरादन्तरमिति भगवदनुप्रवेशस्य कथनात् ओंकारपूर्वकोपासनस्य रुद्रानुष्ठितत्वोक्त्या च रुद्रकर्तृकोपासनं निगमय्य, तद्रीत्याऽस्माभिरपि तदितरदेवैरिवोपासनं कर्तुं शक्यमिति तदुपासनप्रपञ्चनमुपरि भवति । अतः **प्राच्या तदुक्त्या**=पूर्ववाक्यानुसारात् रुद्रस्यान्तरात्मतया हरिरेवोपास्यतया स्फुरति । मोक्षार्थोपासने रुद्रस्य विषयत्वं वैष्णवैः कथमिष्यते इति चेत्, तदुपपाद्यते **यद्वदिति** । **मध्वादी**त्यादिना प्रतर्दनविद्यादिपरिग्रहः । मधुविद्यायां मोक्षान्तफलायां वसुरुद्रादित्यमरुत्साध्यरूपदेवगणोपभोज्यामृतमयादित्योपासनरूपायां वस्वादिसुरशरीरको हरिरुपास्यः । इन्द्रोपदिष्टप्रतर्दनविद्यायाश्च मोक्षार्थायां प्राणरूपाचेतनशरीरकत्ववत् इन्द्रशरीरकतया स उपास्यः । ब्रह्मकायनिषेवणपूर्वकमोक्षार्थविद्यायाश्च चतुर्मुखशरीरो हरिरुपास्यः । मोक्षार्थविद्यायामपि चिदचिदन्वये अनन्यथासिद्धं लिंगं यत्रयत्र, तत्रतत्र चिदचिद्विशिष्टतयैव हरेरुपास्यत्वमिष्यते । तद्वदिह रुद्रशरीरकः स उपास्यो भवितुमर्हति । अतः प्रथमावगतविशिष्टोपासनमेव पश्चादपि तदधिकारिविषये तत्रोच्यत इति । भस्मविषये वक्तव्यमाह **श्रुतमिति** । **भसितं** भस्म । **तत्** विधिबलात् प्रस्तुतस्य रुद्रशरीरकोपासनस्यैव शेषभूतं ग्राह्यम् । घञन्तः शेषशब्दो भावार्थकः पुंल्लिंगः । शिष्टत्वं शेषः । तत अर्शआद्यचि शेषमिति नपुंसकम् ॥ ८९ ॥

---

*89 அதர்வசிரஸ்ஸில் பசுபதியின் பஜனத்தை ஸம்ஸாரபந்தம் நீங்க வழியாகச் சொன்னது அந்த பஜனத்தில் முதற்கண்டத்திற் கூறியவாறு பசுபதிக்கு அந்தர்யாமியாக பகவானை உபாஸிப்பதாலாம். மோக்ஷத்திற்கான வித்யைகளில் பகவானுக்கு விசேஷணமாக தேவதாந்தரமும் சேருமென்பதை மதுவித்யை முதலானவற்றிற் காண்க. வஸு முதலானவர்களுக்குப் போல் ருத்ரனுக்கும் பகவானால் ஸ்ருஷ்டிக்கப்படுகை வேதத்திலேயே வ்யக்தம், ஆகையால் இது அந்தர்யாமியின் உபாஸனமே. பஸ்மத்தை இங்கே சொல்லியிருப்பதால் ருத்ரனுக்கு ப்ராதான்யம் ஸித்தியாது.*

**प्रस्तुत्य रुद्रवपुषः पुरुषोत्तमस्य विद्यामथर्वशिरसीरितमङ्गमस्याः ।**
**भस्मप्रसक्तिरितरत्र न चास्ति यद्वत् सौत्रामणीप्रकरणोक्तसुराग्रहस्य ॥ ९० ॥**
**आथर्वण्यां शिखायामगणि भगवतो या जनिः कारणैक-**

90 एवं भस्मनः परमात्मोपासनशेषत्वे सर्वपरविद्यासाधारण्यं स्यात्, तत् अनुष्ठानविरुद्धम् । अतो रुद्रमात्रोपासन एव तत् युक्तमित्यत्राह **प्रस्तुत्ये**ति । अथर्वशिरसि रुद्रशरीरकस्य पुरुषोत्तमस्य विद्यामेव प्रस्तुत्य **ईरितं** कथितं भसितं **अस्याः** विद्याया एवांगं भवितुमर्हति । पुरुषोत्तमस्योपास्यत्वेऽपि रुद्रशरीरकत्वेनोपासनात् तदंगत्वं युज्यते । **इतरत्र**=परविद्यान्तरे **एतत्प्रसक्तिर्न** भवति । प्रकरणोपस्थितविद्याविशेषेणैवाकांक्षाबलादन्वयात् ; अन्यत्रान्वये मानाभावात् । तत्र दृष्टान्तमाह **यद्वदि**ति । सौत्रामणी इति ईकारान्तः शब्दः । स पशुयागविशेषः । (3-5-3-अ.) (10-1-9अ.) सुत्रामदेवताकत्वात् सौत्रामणी । तथाऽत्र आश्विनः सारस्वतश्च पशुः । तत्र 'आश्विनं गृह्णाति' इत्यादिना सुराग्रहणानि पयोग्रहणानि च विहितानि । तत्राग्नीषोमीयपशुयागाङ्गभूतप्राकृतपशुपुरोडाशयागे द्रव्यान्तरविधिरिति प्राचां पक्षः । द्रव्यान्तरविशिष्टक्रियान्तरं पश्वङ्गभूतमिति वार्तिककारः । तदेवमत्र पशुयागे सुराग्रहाः विहिताः न हि पशुयागान्तरे प्रसज्यन्ते । तद्वदेव भस्मधारणं भक्तियोगान्तरे न प्रसज्यत इति । सुराया इव भस्मनोऽपि निषिद्धत्वात् तदादरणमन्यत्रायुक्तमित्याशयेन चैतद्दृष्टान्तकथनम् ॥ ९० ॥

91 एवमथर्वशिरोवृत्तं वृत्तम् । अत्र **कथमुद्भवत्यवतरति** इति प्रश्नप्रतिवचने अथर्वशिखावाक्यार्थव्युत्पादनेन विवृणोति **आथर्वण्या**मिति । अत्रेयमाशंका—अथर्वशिरसि, सोऽन्तरादन्तरं प्राविशदिति रुद्रेण स्वान्तर्यामिणः प्रस्तावात् अन्तर्यामिविष्णूपासनमेव तदिति यदुक्तम्, तदथर्वशिखाविरोधादयुक्तम् । अत्र हि 'ब्रह्मविष्णुरुद्रेन्द्राः संप्रसूयन्ते' इति चतुर्मुखाविशेषं विष्णोरप्युत्पत्तिः कथ्यते । नन्विदं रुद्रस्यापीति चेत्—अस्तु कश्चिदुत्पद्यमानोऽपि रुद्रः ; रुद्राणामेकादशत्वात् अधिकत्वाद्वा । 'कारणं तु ध्येयः सर्वैश्वर्यसंपन्नः सर्वेश्वरः शम्भुराकाशमध्ये' इत्यतश्च विष्णुप्रभृतीनामपि कारणमन्येश्वरविलक्षणं

பஸ்மம் அணிந்தே அவனது த்யானத்தைச் செய்யவேண்டுமிங்கு (89)

90 ருத்ரனுக்கு அந்தர்யாமியான புருஷோத்தமனின் உபாஸனத்திற்கு இங்கு பஸ்மம் அங்கமாகக் கூறப்பெற்றதால் எல்லா வித்யைகளிலும் பஸ்மம் தரிக்கவேண்டுமென்ன வாகாது. அந்தந்த வித்யைக்கு அருகிற் சொன்னது அததற்கே சேரும். ஸௌத்ராமணி என்ற பசுயாகத்தில் கள்ளை ஹோமத்திற்காக க்ரஹிக்க வேண்டுமென்றதே. அதனால் எந்தவிடத்திலும் கள்ளை ஹோமத்திற்கு க்ரஹிக்கமுடியுமா. (90)

91 அதர்வசிகை என்ற வேறோர் உபநிஷத்தில் காரணமான வஸ்துவையே த்யானம் செய்யவேண்டுமென்று கூறி விஷ்ணுவுக்கும் இந்திராதிகளுக்குப்போல் பிறவியைப் பணித்திருப்பதால் நாராயணன் காரணமா

**ध्येयत्वेदम्परायां, जगदुपकृतये सोऽयमिच्छावतारः ।**
**यद् विष्णोः कारणैकप्रवणफणितिभिः कारणत्वोपदेशः**
**स्पष्टो दृष्टप्रयोगः सुखजनकतया शम्भुशब्दोऽपि तस्मिन् ॥ ९१ ॥**

---

सर्वेश्वरभूतं शम्भुप्रभृतिपदरूढ्यर्थभूतं तत्त्वमेव परमिति निश्चीयत इति ॥ अत्रोच्यते—**अथर्वर्षिदृष्टायां शिखायाम्**—अथर्वशिखोपनिषदि सर्वकारणमेव ध्यातव्यमुक्तम्, न रुद्रादिरिति भवतामपीष्टम् । सर्वकारणश्च 'एको ह वै नारायणः' इति ईशानादिनिषेधेन नारायणशब्देन निर्दिष्टः । तादृशाः शब्दाः असाधारणा न व्यक्त्यन्तरपरा इति प्रागेवोक्तम् । अत्र विष्णोरुत्पत्तिकथनात् विष्णुव्यतिरिक्त एव स इति चेत्—अत्रेदं वक्तव्यम्—'सीता लक्ष्मीर्भवान् विष्णुः', 'ततस्त्वमपि दुर्धर्षस्तस्मात् भावात् सनातनात् (परवासुदेवात्) । रक्षार्थं सर्वभूतानां विष्णुत्वमुपजग्मिवान्' इति वचनेन परमकारणतत्त्वमेव जगद्रक्षणाय विष्णुरूपं जग्राहेति स्पष्टमवगमात् कारणस्य तद्भिन्नत्वं न भवतीति विष्णुजन्मनः कर्माधीनत्वायोगात् स्वेच्छावताररूपता । रुद्रेण च जातेन, 'अनपहतपाप्मा वा अहमस्मि नामानि मे धेहि' इति स्वस्य कर्मवश्यत्वाविष्करणात्, 'आब्रह्मस्तम्बपर्यन्ताः जगदन्तर्व्यवस्थिताः । प्राणिनः कर्मजनितसंसारवशवर्तिनः' इति तज्जन्मनः कर्माधीनत्वस्मरणाच्च न रुद्रपरतत्त्वयोरैक्यम् । विष्णु-रुद्रातिरिक्तः परमशिवस्तु शशशृङ्गमेव । **जगदुपकृतये** इत्यनेन, 'जगतामुपकाराय न सा कर्मनिमित्तजा', 'जगदुपकृतिमर्त्यः' इति वचनस्मारणम् । **इच्छावतारः** । 'इच्छागृहीताममितोरुदेहः' इति विष्णुपुराणम् । विष्णुशब्दोऽसाधारण इति प्रागेवोक्तम् । 'कृष्ण एव हि लोकानामुत्पत्तिरपि चाप्ययः' इतिवत्, 'विष्णोः सकाशादुद्भूतं जगत् तत्रैव च स्थितम्' इत्यादिभिः फणितिभिः विष्णुशब्देन सर्वकारणत्वोपदेशः स्पष्टः इति परस्य तदैक्यसिद्ध्या तत्र शम्भुशब्दरूढ्यर्थानन्वयात् 'शम्भुराकाशमध्ये' इति वाक्ये शं सुखं भवत्यस्मादिति शम्भुरिति योगार्थमादाय शम्भुशब्दस्तस्मिन् परस्मिन् ग्राह्यः । स तथा दृष्टप्रयोगश्च, "विश्वशम्भुवम्" इति पदे विश्वपदघटनात् रूढ्यर्थे तदनन्वयात् विश्वसमवेतसुखजनकमित्ये-

---

கான் என்னல் தகாது. விஷ்ணுவுக்கு அங்கே ஜீவர்களுக்குப் போல் கர்மாதீனமான பிறவியைக் கூறவில்லை. உலகுக்கு உபகாரமாகத் தானே இஷ்டப்பட்டு செய்யும் அவதாரமாம் அது. ஏனெனில், விஷ்ணுவும் நாராயணனும் ஒன்றென்றும் விஷ்ணு உலகுக்கெல்லாம் காரணமென்றும் வேதம் புராணம் இதிஹாஸம் எல்லா விடத்திலும் ஸ்பஷ்டமாயுளதே. ஆனாலும் அதர்வசிகையில் **शम्भु**வைக் காரணமாயும் உபாஸிக்கப்படவேண்டியனாகவும் ஓதிற்றேயெனில், காரணமாக வேறு வாக்யங்களில் தெரிந்த வஸ்துவுக்கு த்யானம் இங்கே விதிக்கப்படுகிறது. காரணவஸ்து விஷ்ணுவே; **शम्भु** என்ற சொல் விஷ்ணுவுக்கும் பொது. **विश्वशम्भुवम्** என்றவாறு ப்ரயோகம் உளதே. ஸுகத்திற்குக் காரணமென்று அதன் பொருளாம் (91)

**उदितमुपासनद्वयमथर्वशिरश्शिखयोः स्फुटमपुनर्भवाय पुरवैरिकलेबरिणः ।**

---

वार्थास्य वक्तव्यत्वात् । तथाचाथर्वशिखायां शम्भ्वादिपदं 'साक्षादप्यविरोधं जैमिनिः' इति न्यायेन यौगिकम् । नात्रापर्यवसानवृत्तिरपि ॥ ९१ ॥

92 ननु शम्भुशब्दरूढ्यर्थस्य रुद्रस्योपासनमथर्वशिरसि यद् विहितम्, तदेवात्रानूद्य, 'आकाशमध्ये ध्येयः' इति स्थलं विधीयते । अथवाऽत्र 'कश्च ध्येय.' इति पूर्वं प्रश्नात् ध्येयोद्देशेन शम्भुत्वं विधेयम् । एवं प्राप्तं रुद्रोपासनमनूद्य भस्मधारणं तत्र विधीयत इत्येकोपासनपरत्वे संभवति किमित्युपासनद्वयस्वीकारः ? अतो नाथर्वशिखा शुद्धविष्णूपासनपरेत्यत्राह **उदितमिति** । **अथर्वणः शिरसि शिखायाञ्च**=अथर्वशिरउपनिषदि अथर्वशिखोपनिषदि च **अपुनर्भवाय** मोक्षाय **उदितं** उक्तम् **उपासनद्वयं** विभिन्नमुपासनम्, स्फुटम्=स्वरससिद्धमेतत् । भेदो विषयवैलक्षण्यादित्याह **पुरेति** । **कलेबरिणः** शरीरिणः, केन शरीरीत्यत्र **पुरवैरी**त्युक्तम् । त्रिपुरारिः शिवः तेन देहिन इत्युक्तौ शिवरूपदेहयुक्तस्य शिवान्तर्यामित्वविशिष्टस्येत्युक्तं भवति । एवं विग्रहसंभवात् पुरवैरिकलेबरमिति कर्मधारयं कृत्वा 'न कर्मधारयान्मत्वर्थीयः' इति तत इनिप्रत्ययविचारो व्यर्थः । **कमलदृशः** पुण्डरीकाक्षस्य । **क्वचिदिति** पदमथर्वशिरोर्थकं पुरवैरिकलेबरिण इत्यत्रान्वेति । **क्वचनेति** पदं अथर्वशिखार्थकं यथासंख्यं **कमलदृश** इत्यत्र । **कारणतत्त्वे**त्यादिपदं हार्देत्यादिकमपि तद्वत् यथाक्रममन्वेतीति युक्तम् । **विदुषः** उपासकस्य । इदं **हार्दसुषा**वन्वेति । सुषिः विवरम्, हार्दसुषिः=हृदयाकाशः तं जुषते सेवते यः तस्य । अयमर्थः—अथर्वशिरसि अहमेव प्रथममासम्, सोन्तरादन्तरमिति प्रतिपादितस्तावत् रुद्रान्तर्याम्येव । स एव कारणतत्त्वपरश्रुत्यन्तरैरपि **विहितः**=बोधितः । यत्रानन्यथासिद्धं जीवलिंगमस्ति तत्र तदन्तर्यामित्वेनैव हरिर्बोधनीयः, न स्वरूपेण । अथर्वशिरसि चाऽऽदौ, 'रुद्रमपृच्छन्' इति रुद्रप्रस्तावः, यो वै रुद्रः स भगवान्' इति जीवपदेश्वरपदयोः सामानाधिकरण्यम्, उपरि भस्मवचनञ्चानन्यथासिद्धं लिंगम् ; अन्तरात्मत्वं कण्ठोक्तञ्चेति पुरवैरिकलेबरित्वेनैव हरिस्तत्र विषयः । अथर्वशिखायां तु तथाऽनन्यथासिद्धजीवलिंगाभावात् 'स कारणं कारणानां सर्वैश्वर्यसंपन्नः' इति परमात्मासाधारणधर्मश्रवणाच्च योगव्युत्पत्त्या साक्षात् परमात्मविषयकत्वमेव युक्तम् । विशिष्य चाऽऽकाशमध्ये इति विद्वत्पुरुषहृदयाकाशे स्थितत्वेन ध्येयत्वविधानात् भगवत एव तत्र हार्दरूपेण वर्तमानत्वात् पुरवैरिमूर्तेस्तन्निष्ठत्वासिद्ध्या, 'स यश्चायं पुरुषे यश्चासावादित्ये' इत्यादित्यमण्डलान्तर्वर्त्येवायमिति पुण्डरीकाक्षमूर्तिविशिष्टोपासनमिष्टम् ; न विरूपाक्षान्तर्यामित्वविशिष्टविषयकमिति । यद्वा **पुरवैरी**त्यारभ्य **क्वचि**दित्यन्तं शिरोविषयकम् । **कमलदृश** इति पदं विरूपाक्षमात्रं नोपास्यमिति ज्ञापनाय, कलेबरी क इति जिज्ञासाशमनाय—पुरवैरिहृदयस्थहार्दविषयकम् ।

---

*92 அதர்வசிரஸ்ஸிலும் அதர்வசிகையிலும் சொல்லப்பட்ட உபாஸனம் வெவ்வேறுவிதமாகும், ஓரிடத்தில் (சிரஸ்ஸில்) த்ரிபுராஸுரஸம்ஹாரி யான ருத்ரனுக்கு அந்தர்யாமியாகச் செந்தாமரைக்கண்ணனுக்கு உபாஸனம்,*

**कमलदृशः क्वचित्, क्वचन कारणतत्त्वपरश्रुतिविहितस्य हार्दसुषिमध्यजुषो विदुषः ॥९२**
**उक्तं केनचिदीश्वरः पुरुष इत्युक्ती शिवश्रीशयोः**
**वर्तेते बहुशो महत्परमवाग्युक्ते वियुक्ते अपि ।**

---

**क्वचनेत्यारभ्य** कृत्स्नं शिखाविषयकम्। **श्रुतिविहितस्ये**ति पदं, नात्र शम्भुर्विधीयते। कारणानां कारणमिति प्रागुक्त्या सर्वकारणं नारायण इति कारणतत्त्वपरश्रुतिभिरवगततया कार्यभूतशम्भुव्यावृत्तकारणभूतशम्भूद्देशेन ध्यानविधिरिहेति ज्ञापनाय। सर्वथा रूपस्थानादिभेदात् विद्याभेदः।

अत्र **व्याख्याद्वये**ऽपि उपनिषद्द्वयेऽपि रुद्रशरीरकपरमात्मोपासनं विधीयत इति तदर्थकतया श्लोको व्याख्यातः। **क्वचित् क्वचने**त्यत्रैषद्भेदेऽपि वीप्सेति कृत्वा तत्रतत्र नारायणानुवाकादिषु ध्येयतया विहितस्य कमलदृशः इत्यन्वयार्थ उक्तः। पूर्वश्लोके **शम्भु**शब्दस्य यौगिकतायाः श्लोकोक्तत्वेऽपि, "अपर्यवसानवृत्त्या भगवत्परत्वमपि संभवति" इति प्रथमव्याख्यायां स्वयमुक्तम्। **वेदार्थसंग्रहे श्रुतप्रकाशिकादौ** च शिखावाक्यस्थ. **शम्भुशंकरेशान**शब्दानां 'विश्वशम्भुवम्' इति श्रुत्यादिप्रमाणप्रदर्शनेन नारायणसाधारण्यं यौगिकत्वञ्चोक्तम्। शिरोवाक्यस्थरुद्रपद एवान्तर्यामिविवक्षोक्ता। यद्यथर्वशिखायां अन्तर्यामिपरत्वमभ्यमंस्यत, श्रुतप्रकाशिकायामवश्यमेव तथा व्याख्यास्यत। श्लोकश्च तदनुसार्यर्थपरत्व एव स्वरसः। अत एवमस्माभिर्व्याख्यातमिति ध्येयम्। अत एव **तात्पर्यचन्द्रिकायाम्**, (8.78) अथर्वशिखावचनोदाहरणे अनुक्त्वा अथर्वशिरउदाहरण एव, "अत्र प्रकरणादिवशात् अन्तरितं शासनमनुसंधेयमित्युक्तम्। **अन्तरितम्**=व्यवहितम्—जीवद्वारकम् ॥ ९२ ॥

93 भगवदादिशब्दवत् पुरुषशब्दो नारायणासाधारण इति वदतः प्रति कश्चित् शैव आह—तावता तस्य निकर्ष एव स्थापितो भवतीति। तदिदमनुवदति **उक्त**मिति। **केनचित्** शैवेनोक्तम्। किमिति ; तदाह **ईश्वर** इति। ईश्वर **इत्युक्तिः** शब्दः पुरुष इत्युक्तिश्च यथासंख्यं शिवे श्रीशे च वर्तेते। क्वचित् शिवेपि पुरुषपदं श्रीशेऽपीश्वरपदं प्रयुज्यत इति शंकापरिहाराय **बहुश** इत्युक्तम्। उक्तिविशेषणं **महदित्यादि**। महदिति परमेति च **वाचौ**=शब्दौ तद्युक्ते। तथा **वियुक्ते** महत्परमशब्दरहिते केवले इत्यर्थः। शिवे महेश्वरः परमेश्वर इति, केवलं ईश्वर इति च शब्दोऽस्ति। श्रीशे च महापुरुषः, परमपुरुष इति, केवलं पुरुष इति च। पुरुषशब्दो राजपुरुष इत्यादौ दासपरतया

---

*மற்றோரிடத்தில் (சிகையில்) உபாஸிக்கிறவனின் ஹ்ருதயாகாசத்திலேயி ருக்கும் ஜகத்காரணதத்துவமாய் ஸூசமளிக்கின்றவனை நேராகவே அவனுக்கு உபாஸனம். (92)*

*93 ஒருவருடைய யுக்திவாதம்–புருஷனென்று விஷ்ணுவைச் சொல்வர்; ஈச்வரனென்று ருத்ரனை. புருஷனென்றால் வேலைக்காரன் அடிமையான வனென்றதாம்; ஈச்வரனென்றால் ஆள்கின்றவனென்றதாம். அது போல்*

इत्युत्कर्षनिकर्षगोचरपदव्यख्यातयोरेतयोः
उत्कर्षो गिरिशस्य वक्तुमुचितः पुंसः प्रधानादिव ॥ ९३ ॥
नैतत् साधु समाख्यया हि बलवद्वाक्यादिभग्नार्थया

---

प्रसिद्धः । तेन निकर्षः श्रीशे सिद्धः । महापुरुष,परमपुरुषशब्दौ दासत्वकाष्ठापरौ निकर्षकाष्ठामेव दर्शयतः । ईश्वरशब्द उत्कृष्टवाची । महेश्वरपरमेश्वरशब्दौ च उत्कर्षातिशयदर्शित्वादस्मत्पक्षस्यातीव साधकौ । अत उत्कर्षबोधकपदत्रयेण निकर्षबोधकपदत्रयेण च **व्याख्यातयोः** विवृततत्त्वयोः **एतयोः** शिवश्रीशयोर्मध्ये । ननु एनयोरिति अन्वादेशेन भाव्यम् ॥ तर्हि एतयोरिति कदा प्रयोगः । प्रथममिति चेत्, नन्वयं प्रथम एव । पुनः प्रयोगेऽपि तदविवक्षा स्यादीषद्भेदबुद्ध्या । तयोरिति प्रासरक्षणं तेन । **गिरिशस्य** शिवस्योत्कर्षः यथा **पुंसः** जीवस्य **प्रधानात्** अचेतनादुत्कर्षः । यद्वा गिरिशस्याचेतनादिव **पुंसः** श्रीशादप्युत्कर्ष इत्यर्थः । द्वितीयव्याख्यायां **पुंस** इत्यपि पञ्चम्यन्तम् ॥ ९३ ॥

94 इदं निरस्यति **ने**ति । एतत्=त्वदुक्तं न सम्यक् । हेतुमाह श्लोकद्वयेन । तत्र पुरुषादि-शब्दः किः समाख्येति मन्यते, श्रुतिरिति वेति विकल्पमभिप्रेत्य आद्यं निरस्यति **समाख्यया** इति । **अत्रेदमाकूतम्**—प्रायो रूढिमान् शब्दः श्रुतिरित्युच्यते, यौगिकोऽपि स्फुटप्रतिपन्नविशिष्टार्थः शब्दविशेषः श्रुतिः । कोशादिवशात् आख्यात्वेन प्रसिद्धो यौगिकः शब्दः **समाख्या** । पुरुषशब्दः पूर्वमेवाहमिहाऽऽ-समिति पुरुषत्वम्, सर्वान् पाप्मन औषत्=अदहदिति पुरुषः, पूस्संज्ञेति पुरे तस्मिन् शयनात् पुरुषो हरिः, पुरु बहु सनोति—ददातीति पुरुषः इति बहुधा व्याख्यायते । तत्र न निकर्षप्रतीतिः । राजपुरुष इत्यादौ पुरुषशब्दस्यावयवव्युत्पत्तिरप्रसिद्धा । पुरुषशब्दो यदा चेतने प्रयुज्यते, तदा अचेतना-पेक्षयोत्कर्ष एव प्रतीयेत । एवं मनुष्याद्याकृतिविशेषविशिष्टवाची चेति मृगाद्यपेक्षयोत्कर्षप्रतीतिरेव । अथ पुरः स्थितः पुरुष इति कथञ्चित् व्युत्पाद्यते, तदापि समभिव्याहृतपदानुसारेण क्वचिदुत्कर्षो निकर्षो वा लभ्य इत्यव्यवस्थैव । राजशब्दसमभिव्याहारात् षष्ठ्यर्थसंबन्धविशेषनिर्णयानन्तरमेव निकर्षप्रतीतिः । अतः, पुरः स्थितिरस्य सेवकतया वाऽनुग्राहकतया वेत्यादि विमर्शनीयम् । तथाच निकर्षो न शब्दार्थः,

---

மஹாபுருஷன் பரமபுருஷன் என்றால் அடிமைத்தனம் அதிகமாயிருப்பதே தெரியவரும். மஹேச்வரன் பரமேச்வரனென்றதால் ருத்ரனுக்கு ஈச்வரத் தன்மை அதிகம் தெரிகிறது. ஆகையால் விஷ்ணு ஸ்வாமியாக மாட்டா னென்றவாறு, அசேதநத்தைவிட சேதனன் உயர்ந்தவனென்பது போல் புருஷனை விஷ்ணுவைவிட ஈச்வரனை ருத்ரன் மேம்பட்டவனென்க. இது ஆக்ஷேபம். மேல்ச்லோகத்தில் ஸமாதானம். (93)

94 இது சரியன்று. புருஷன் ஈச்வரன் என்பதெல்லாம் ரூடியான பெயராக அங்கே வழங்கப்படுகிறது. இல்லையேல் புருஷபதம் விஷ்ணுவுக்கே, ஈச்வரபதம் ருத்ரனுக்கே என்று தேறாது, புருஷபதத்திற்கு வ்யுபத்

नोत्कर्षो गिरिशस्य वक्तुमुचितः केनापि देवेन्द्रवत् ।
इन्द्रः स्यात् परमेश्वरस्त्वितरथा तत्तत्समाख्यावशात्
आख्या हि प्रबलप्रमाणविहता तस्मिन् महावृक्षवत् ॥ ९४ ॥
किं जीवः पुरुषोक्तिगोचर इति श्रीशोऽपि तद्गोचरो
जीवः स्यात् ; गिरिशो भवो भवति किं तौ स्थाणुसंज्ञाविति ।

---

अपितु कल्प्यः ; आध्वर्यवमिति समाख्यावशात् अध्वर्योः कर्मविशेषांगत्ववत् । यावत् कल्पयितुमारभ्यते, ततः प्रागेव समाख्यापेक्षया बलवता श्रुतिलिंगादिप्रमाणान्तर्गतेन वाक्येन लिंगेन श्रुत्या वा विष्णोरुत्कर्षे वेदप्रमाणावगते सति क्व निकर्षकल्पनावसरः ? तथा ईश्वरशब्देनापि गिरिशे नोत्कर्षकल्पना । निरुपाधिकेशनस्य बाधात्, तस्मिन् विष्णुनिरूपितेश्वरत्वस्याप्रामाणिकत्वात् । **भग्नार्थत्वं** बाधितवादिविवक्षितार्थकत्वम् । महेश्वरशब्दस्तु रूढ्यर्थे ईश्वरे किञ्चिद्रूपं महत्त्वमपि बोधयेत् । महादेवशब्दो हि त्रिपुरासुरसंहारार्थं स्वस्य सर्वदेवगतबलापेक्षायां रुद्रेण कृतायां देवैः स्वस्वबलस्यार्धं तस्मिन्नर्पितमिति तत्प्रयुक्तमहत्त्वाश्रयत्वादिति विशदं **भारते कर्णपर्वणि** । यथा च महेन्द्रस्य इन्द्रत्वे सति महत्त्वमपि वृत्रासुरवधायत्तम् । अतो न निरुपाधिकेशनसिद्धिः । **देवेन्द्रवदि**त्युक्तं विवृणोति **इन्द्र** इति । **इतरथा**= दुर्बलया समाख्ययाऽप्यर्थस्थापने इन्द्रस्य गिरिशान्नीचस्यैव परमेश्वरत्वापत्तिः इन्द्रमहेन्द्रदेवेन्द्रसमाख्यानां निरुपपदसोपपदानां तत्रार्थयोगात् । इदि—परमैश्वर्ये इति ईशधात्वपेक्षया इदिधातोः ईशनपारम्यार्थकतया ततो विशेषात् । उभाभ्यां तत्र वक्तव्यं परिहारमाह **आख्या ही**ति । यथा महावृक्षसमाख्या अत्यल्पे उद्भिदि प्रयुज्यमाना वटाश्वत्थादिष्विव महत्त्वाभावात् प्रत्यक्षप्रमाणबाधात् रूढिमात्रेणावतिष्ठते, तद्वत् इन्द्रादिसमाख्येति वक्तव्यम् । यद्वा आपेक्षिकं परिमाणं महत्त्वं ग्राह्यम् । केवलजीवेऽपि, "उपद्रष्टाऽनुमन्ता च कर्ता भोक्ता महेश्वरः । परमात्मेति चाप्युक्तो देहेऽस्मिन् पुरुषः परः" इति महेश्वरादिपदस्य देहस्थितवस्त्वन्तरापेक्षयाऽतिशयमादाय व्यवहारादिति—तर्हि महेश्वरपरमेश्वरादिशब्देष्वपि तुल्यमिति अत्यल्पमेतत् ॥ ९४ ॥

95 पुरुषादिशब्दःश्रुतिरेव । ततो जीवान्तरवत् राजपुरुषादिवत् पुरुषशब्दवाच्यत्वमात्रेण विष्णौ निकर्षानुमानमित्यत्र तदाभासतामाह **किमि**ति । जीवसामान्यं पुरुष **इत्युक्तेः** शब्दस्य **गोचरः**

---

தியை நோக்கினால் பகவானுடைய பெருமைகளே அதனின்று விளங்கும். பெயர் ஸமாக்யை என்பர் மீமாம்ஸகர். ஸமாக்யையைவிட வாக்யம் ச்ருதி என்ற ப்ரமாணங்கள் ப்ரபலங்களென்றார்கள் அம் மீமாம்ஸகர்கள் அப்படி பல வாக்யங்களும் பல ச்ருதிகளும் ஸ்பஷ்டமாக விஷ்ணுவுக்குப் பெருமையையும் ருத்ரனுக்குத் தாழ்ச்சியையும் கூறியிருப்பதால் பொருள் தெளிவாகாத வெறும் பெயரைக் கொண்டு விபரீதமாய் ஸ்தாபிக்க முடியாது. (94)

तक्षत्वाय घटेत किं मुखभुवामाचार्यसंशब्दनम्
मण्डूकत्वमुपैति किं हरिपदस्पर्शेन कण्ठीरवः ॥ ९५ ॥
प्राणाकाशमुखैः पदैरुपनिषद्भागेषु जोघुष्यते
किं न ब्रह्म परं ; परत्वगणना जागर्ति किं तावता ।

---

विषय इत्येतावता श्रीशे जीवत्वानुमानं किं तेऽभिमतम्, तर्हि **ईशो** रुद्रः **ध्रुवः स्यात्** शंकुः स्यात्= स्थावरविशेषः स्यात् । "स्थाणुः पुमान् महादेवे शंकावस्त्री स्थिरे त्रिषु" इति कोशात् उभयोरपि स्थाणुशब्दवाच्यत्वात् । यत् यद्वाचकशब्दवाच्यम् ; तत् तन्निष्ठासाधारणधर्मवदिति व्याप्तेस्त्वदिष्टत्वात् । तदिदमापादनमाह **गिरिश** इत्यादिना बहूदाहरणेन । **मुखभुवां** ब्राह्मणोऽस्य मुखमासीदिति भगवन्मुखोत्पन्नानां ब्राह्मणानां यत् आचार्यशब्दवाच्यत्वं तत् **तक्षत्वाय** तक्षाख्यदारुशिल्पिगतजातिप्राप्तये भवेत् । हरिपदवाच्यत्वाविशेषात् **कण्ठीरवः** सिंहः **मण्डूकत्वं** भेकत्वमुपेयात् । अतो न सामान्यमुखी व्याप्तिः । विशेषव्याप्तिरपि न भवति ; स्थाण्वादिशब्देऽपि भावात् । हेतोरप्रयोजकत्वाच्च ॥ ९५ ॥

**96** ननु न समाख्यामात्रेण शिवस्य परत्वं कल्प्यते, किंतु 'शिव एव केवलः' इत्यादिकारणवाक्यप्रतिपादितत्वात् वाक्यप्रमाणादेवेत्यत्राह प्राणेति । **पर**मित्यन्तं प्रथमं वाक्यम् ; **प्राणा**द्येष्वित्यन्तं द्वितीयम् ; उपरि सर्वं तृतीयम् । अयमर्थः—यतो वा इमानीति वाक्येन जगत्कारणत्वं परब्रह्मलक्षणमित्युक्तम् । शिवस्य च जगत्कारणत्वं वाक्यादवगम्यत इति स परं ब्रह्मेति चेत्—आकाशाधिकरण.प्राणाधिकरणादिदर्शितैर्वाक्यैरन्येषामपि कारणत्वं ज्ञाप्यते ; परं ब्रह्माऽऽकाशादिपदैर्जोघुष्यते । अतः शिवादन्यत्र प्राणे, प्राणादपि न्यूनोपकारके आकाशादौ च परत्वगणना स्यात् । ननु कारणवाक्यजन्यप्रतीतिविषयत्वमात्रं हेतुश्चेत्—आपातप्रतीतिमादायैवमापत्तिः स्यात् । कारणवाक्य-आगततात्पर्यनिश्चयाधीनप्रमितिविषयत्वं हेतुः ; प्राणाधिकरणादौ प्राणादिषु तादृशप्रमितिविषयत्वनिराकरणान्न तत्र व्यभिचार इति चेत्—तेनैव न्यायेन शिवेऽपि कर्मवश्ये तद्धेतुभंगात् तस्यापि परत्वासिद्धिः । तदि-

---

*95 ஒரு பதத்தாலே இருபொருள்கள் கூறப்படலாம். அதனால் அவவிரண்டும் ஒரு வகுப்பாகா. **புருஷ** பதத்திற்கு ஜீவனென்ற பொருள் உண்டு. அதனால் திருமால் ஜீவனாகுமோ. **स्थाणु** என்னும் பெயர் ருத்ரனுக்கும் முளைக்கொம்புக்குமாம், அதனால் ருத்ரன் முளைக்குச்சியாவானோ, ஆசார்ய என்ற சொல்லுக்கு அந்தணனும் தச்சனும் பொருள். அந்தணன் தச்சனாவானோ ? ஹரி என்ற சொல்லுக்குச் சிங்கமும் தவளையும் பொருளென்பதால் சிங்கம் தவளையாகுமோ. (95)*

*96 உபநிஷத்துக்களில் ப்ராண. ஆகாசாதிபதங்களாலே பரப்ரஹ்மம் காரணவாக்யங்களிலே கூறப்படும். அதனால் ப்ராணவாயு முதலானவற்றிற்கு ப்ரஹ்மத்வம் வந்துவிடுமா, சிவாதிசப்தங்களாலே பரப்ரஹ்மத்தைச் சொன்ன*

प्राणाद्येषु शिवादिशब्दकथितं तच्चेत् परत्वं कुतः
तत्तत्कारणवाक्यसिद्धभगवत्सृज्येषु रुद्रादिषु ॥ ९६ ॥
यदुपनिषद्भिरप्रथि परिब्रढिमा परमः
कमलदृशो विशुद्धनयलब्धपरिष्कृतिभिः ।

---

दमाह **शिवादी**ति । तत् परं ब्रह्म मंगलत्वार्थकशिवादिशब्दगदितं चेत्—शिवादिशब्दशक्त्यन्तरादि-विषये रुद्रादौ परत्वं कुतः ? रूढ्या रुद्राद्यर्थस्वीकारस्तु न भवति । प्राणादिपदरूढ्यर्थेषु सर्वकारणत्वान्वयस्येव रुद्रादिष्वपि तदन्वयस्य बाधितत्वात् । रुद्रादेर्भगवत्सृज्यत्वकर्मवश्यत्वादेर्महोपनिषदादिप्रसिद्धत्वादित्यर्थः ॥ ९६॥

97 आदौ शारीरकशास्त्रारम्भं समर्थ्य तच्छास्त्रे प्रथमाध्याये स्थापितं सर्वान्तर्यामिणो नारायणस्य जगत्कारणत्वमुपपाद्य निर्गुणब्रह्मण उपनिषदर्थत्वायोगमपि निरूप्य, "एतेन सर्वे व्याख्याताः व्याख्याताः" इत्यन्तिमसूत्राभिप्रेतो ब्रह्मरुद्रादेः सविशेषात्मनोऽपि पारम्याभावः समर्थितः । अथ श्रूयमाणश्रुतिगतानां वाक्यानामेवं निर्वाहेऽपि अश्रूयमाणानामनधीतानां श्रुतीनामानन्त्यात् सर्वशाखोपसंहारेणैवार्थस्य निर्णेय-त्वात्, तत्रास्माकमशक्त्या महर्षिप्रणीतस्मृतीनामेवानुसर्तव्यतया तत्र मन्वादिस्मृतीनां धर्मैदम्परतया तत्त्वनिर्णयानुपयोगितया कपिलस्मृतेरेवाऽऽदर्तव्यतया तद्विरोधेन ईदृशेश्वरकारणकत्वनिर्णयो न युक्त इति शंकायां द्वितीयाध्यायार्थं तन्निरसनाय दर्शयति **यदि**ति । **अप्रथी**ति प्रथयतेर्णिजन्तात् कर्मणि यकि लुङ् । **विशुद्धाः** प्रतितर्कपराहतत्व-वेदविरुद्धत्वादिदोषरहिताः पञ्चाङ्गसंपन्नाः **नयाः** उत्तरमीमांसादर्शितास्तर्काः तैर्लब्धा **परिष्कृतिः** तर्कस्य प्रमाणेतिकर्तव्यताभूतत्वात् तर्काधीनोपकृतिरेव **परिष्कृति**रलंकारः ; अर्थ-विशेषे प्रामाण्यरूपमौज्ज्वल्यम् ; तद्वतीभिरुपनिषद्भिः प्रथमाध्यायविषयवाक्यभूताभिः अन्तराधिकरणस्पष्टोक्तस्य गतिसामान्यसिद्धस्य च **कमलदृशः** भगवतः **परः परिब्रढिमा**=प्रभौ परिबृढ इति निपातनात् प्रभु-त्वातिशयः परिबृढत्वं निरतिशयोत्कर्षः **अप्रथि** प्रकाशितः इति यत् **इदमेव**=विष्णुपारम्यप्रकाशनमेव **इतरगिरः** अनधीतानन्तशाखान्तर्गताःवाचः**अनुरोद्धुं घटन्ते**=अनुसरन्तिइत्येव मनुमुख्याः मुनयः स्फुट

---

*லும் பகவானுல் ப்ராணுதிகளைப் போல் படைக்கப்பட்டுக் கர்மவச்யனை சிவன் பரப்ரஹ்மமாகான். (96)*

*97 வேதவாக்யங்களால் இப்போது ஓதப்படுகின்றன யாவை, அவற் றைப் பராமரித்து விஷ்ணுவே பரதத்துவ மென்று ப்ரஹ்மஸூத்ரத்தில் முதலத்த்யாயத்தில் தீர்த்தபடி யிசைந்தாலும் அனந்தவேதங்கள் ஓதப்படா மல் மறைந்துள்ளனவே—அவற்றையெல்லாம் பார்த்துதானே முடிவுசெய்ய வேண்டும். அது நம்மாலாகாது. அதற்காக மஹர்ஷிகளின் உள்ளம் அறிய வேண்டும். அவர்களில் தத்துவ நிருபணம் செய்தவர் கபிலரே. அவர் சொல்லா மலிருக்க எங்ஙனே விஷ்ணுவுக்குப் பரத்வமென்னில், ஸாங்க்யசாஸ்த்ரம் சரியல்ல. மனுமுதலான மஹர்ஷிகள் பலர் செய்த முடிவும் இப்போது*

**इतरगिरोऽनुरोद्धुमिदमेव घटन्त इति**
**स्फुटमुपबृंहयन्ति मुनयोऽपि मनुप्रमुखाः ॥ ९७ ॥**
**ऐदम्पर्यमपौरुषेयवचसामर्थेषु नैसर्गिकम् ;**
**साक्षादक्षरसिद्धिपर्यवसितः स्वाध्यायविध्याशयः ।**

---

**मुपबृंहयन्ति** विशदीकुर्वन्ति । धर्मशास्त्रप्रणेता मनुर्हि स्वोपदेश्यधर्माराध्यदेवताप्रतिपादनाभावे धर्मविधानं व्यर्थमिति आराध्यप्रतिपादनेदम्परो नारायणं भगवन्तमेवाऽऽदिकारणमभाणीत् । तत्त्वेदम्पराः पराशरादयश्च तथा । इम एव यथावत्कर्माचरणसुनिष्पन्नयोगजन्ययथावस्थितार्थसाक्षात्कारशालिनः ; न कपिलादयः । अतो बहुस्मृत्युपबृंहितसर्वशाखासिद्धं विष्णुपारम्यमिति ॥ ९७ ॥

98 ननु मन्वादिभिर्धर्माराध्यतया भगवान् प्रतिपादित इति भवतैवोक्तत्वात् विष्णुपारम्यसिद्धावपि तज्ज्ञानस्य कर्मशेषत्वमेवेति न ब्रह्मणो वेदान्तप्रधानार्थत्वम् ; न वा भक्तिरूपोपायान्तरे उपनिषदां तात्पर्यमिति साधनाध्यायनिरूपितोऽर्थो न सिध्यति । नतरां सिद्धान्ते ; 'स्वाध्यायोऽध्येतव्यः' इति वाक्यं नार्थज्ञानोद्देशेनाध्ययनं विदधाति, किंतु स्वाध्यायोद्देशेन । अतोऽध्ययनं निर्विचिकित्सानुपूर्वीधारणात्मकाक्षरराशिग्रहणार्थमेवेति स्वीकारात् । अतो वेदादर्थज्ञानं संपाद्यमिति मीमांसकमतस्य स्वाध्यायविध्यर्थस्य सिद्धान्त्यनिष्टत्वात् विस्पष्टवेदार्थग्रहणस्यैवानावश्यकत्वे स्थिते, मिथोविरुद्धार्थकानेककारणवाक्य.वेदनस्मरणध्यानोपासनदर्शनाद्यनेकविरुद्धोपायपरवाक्य. ऐक्य—भेदादि विचित्रमोक्षप्रदर्शिवाक्यजालजटिलानामुपनिषदां कृतमर्थविचारेणेति शंकायामाह **ऐदम्पर्य**मिति । स्वाध्यायोऽध्येतव्य इति विधौ **स्वाध्यायस्य** वेदस्य तव्यप्रत्ययेन कर्मत्वावगमात् अध्ययनं प्रति तस्योद्देश्यत्वात् तत्प्राप्तिरूपफल एव विधिपर्यवसानं युक्तमिति ब्रूमः । अत एव निरर्थकहुम्फडाद्यध्ययनसाधारण्यमपि । एतावता लोकसिद्धं यत् शब्दप्रयोगस्यार्थज्ञानार्थत्वम्, न तद् वारयितुं शक्यम् । न हि स्वर्गयागयोरिवार्थज्ञानतदुपाययोः शास्त्रैकगम्यत्वम् । अत एवाध्ययनस्य पक्षप्राप्तत्वात् नियमविधिरिति मीमांसकैरप्युच्यते । स नियमविधिः स्वाध्यायग्रहणं प्रत्येवास्तु । नियमविधिफलं तु उपायान्तरलभ्यस्याकार्यकरत्वमेव । तदयं पद्यार्थः— **ऐदम्पर्य**मिति **व्याहन्ती**त्यस्य कर्म । स्वाध्यायोऽध्येतव्य इति स्वाध्यायपदघटितं यत् अध्ययनविधिवाक्यम्, तस्य तात्पर्यं नार्थज्ञानपर्यन्ते, किंतु ततः पूर्वं साक्षाज्जायमानायामक्षरसिद्धौ=आनुपूर्वीधारण-

---

*நமது முடிவும் ஒரே விதமாயிருப்பதால் இதே தகும், இவ் விஷயத்தை இரண்டாவது அத்யாயத்திற்காண்க (97)*

*98 வேதாந்த ஸித்தாந்திகள் கர்மகாண்டத்திலுள்ள* **स्वाध्यायोऽध्येतव्य** *என்கிற வாக்யத்திற்கு வேதத்தின் அர்த்தத்தை நன்கு தெளிவதற்காக என்று கொள்ளாமல் வேதத்தை ஸ்வராக்ஷரங்கள் தவறாமல் தரிப்பதற்காக வேதாத்யயனம் செய்ய வேண்டுமென்று பொருள் கூறுகின்றனரே, இந்தப் பக்ஷத்தில் வேதத்திற்குப்பொருளில் நோக்கில்லையென்று தெரிகிறதே, இப்படி*

**व्याहन्तीति वदन्ति ये जपविधिन्यायेन संतुष्यताम्**
**आयुष्मद्भिरनन्यलभ्यविषये शब्दः समुज्जृम्भते ॥ ९८ ॥**

---

सिद्धावेव पर्यवस्यतीत्यस्माभिरुक्तम् । इदं तात्पर्यं स्वाध्यायनिष्ठस्य शब्दस्वभावसिद्धार्थबोधकत्वस्य तदधीन-कार्यस्य च न व्याघातकं भवति । गृहीतेन स्वाध्यायेन किं कार्यमित्यपेक्षायां संभावितसर्वफल-स्वीकारात् । **न्यायरत्नमालायां** तथोक्तत्वाच्च । एवं सति व्याघातकत्वं ये आपादयन्ति, तद्दर्शित-जपविधिन्यायेन तैः संतुष्टैर्भाव्यम् । **आयुष्मद्भिः संतुष्यता**मिति भावे प्रयोगः । तेषां पक्षस्याऽऽयुर-भावेऽपि ते पूर्णायुषो भवन्तु ; मीमांसारूपविचारस्य तदुक्तरीत्या विधिप्राप्तत्वाभावेऽपि रागप्रवृत्ततया सोत्साहमर्थं निर्णयन्तु । 'वेदमेव जपेन्नित्यम्,' 'याजयित्वा प्रतिगृह्य वा त्रिः स्वाध्यायमधीयीत' इति केवलशब्दोच्चारणविधानात् तदेव अर्थज्ञानार्थत्वव्याघातकं स्यादिति न हि भवद्भिरिष्यते । अर्थ-ज्ञानोद्देशेनाध्ययनविधानवारकं तत्तद्वाक्यमिति कुतो नेष्यते । अर्थतात्पर्याभावे च कृतमङ्गोपाङ्गेतिहास-पुराणादिप्रपञ्चनेन । नन्वज्ञातार्थज्ञापकत्वेनैव प्रामाण्यं वक्तव्यम् । लौकिकः शब्दो यं प्रति प्रयुज्यते, तं प्रति अज्ञातज्ञापकत्व एव तस्य प्रामाण्यम् । वेदस्य नाज्ञातज्ञापकत्वम् , वेदवक्त्रा येन मानेन ज्ञातम् , तेनैवान्येनापि सुज्ञानतया तस्यानावश्यकत्वात् । केनाप्यज्ञातत्वे वक्तुरेवाभावप्रसंगात् ॥ ईश्वरो वक्तेति चेन्न—तदसिद्धेः ॥ अनुमानेन तत्सिद्धिरिति चेत्—तर्हि परब्रह्मबोधकत्वेन प्रामाण्यं वेदस्यासिद्धम् । अतः सर्ववेदाप्रामाण्यम् ; कर्मकाण्डमात्रस्याज्ञातार्थज्ञापकत्वेऽपि उपनिषदां पृथगर्थाभाव एवेत्यत्राह **अनन्ये**ति । अप्राप्ते शास्त्रमर्थवत् । कर्मणां प्रकारान्तरेणाप्राप्तत्वं सुस्पष्टम् । अपौरुषेयत्वाच्च वेदस्य न वक्त्रपेक्षा । पुरुषं विना कथं शब्द इति चेत्—प्रत्यक्षतः श्रूयमाणे का विप्रतिपत्तिः । अनुपलब्ध-कर्तृकल्पने च न किञ्चिद् बाधकम् । न चेश्वरोऽनुमानसिद्धः ; शास्त्रयोनित्वाधिकरणे तन्निरासात् । न चोपनिषदां जीवमात्रपरत्वं वा, ईश्वरतत्परवाक्यसत्त्वेऽपि उपासनादिविधायकत्वाभावो वा शंकितुं शक्यते, "अधिकोपदेशात्तु बादरायणस्यैवं तद्दर्शनात्" इति सर्वस्थापनात् । अतोऽनन्यलभ्येश्वरतदु-पासनतत्प्राप्यफलतद्भोक्तृजीवस्वरूपादिविषये उपनिषदां प्रवृत्तिरिति । अतस्तद्विचारार्थं रागतः प्रवृ-त्तिरध्ययनविधेरर्थज्ञानार्थत्वाभावेऽपि घटत एव । वस्तुतः उपनिषदोऽर्थवादमात्रमिति भवन्निर्धारणमपि विचारं विना न सिध्यति । अतो विचारे प्रवृत्तौ तस्याऽऽभासत्वं वयं स्थापयेमेति संग्रहः ॥ ९८ ॥

---

*யிருக்க, விஷ்ணுவா ருத்ரனு பொருளென்ற சர்ச்சைக்கு இடமேது என்பர் இது தவறு; அத்யயனம் செய்வது சப்தராசி தவருமல் க்ரஹிக்க என்றதாலே சப்தத் திற்குப் பொருள் இயற்கையிலுள்ளதை மறுக்கமுடியுமா. அதுவுமுண்டு நீங்களும் ஜபபாராயணங்களுக்கு வேதம் என்கிற விதியை இசைந்திருக்கிறீர்கள். அதனுல் பொருள் கிடையாதென்று சொன்னதாகாதே. (98)*

*99 வேதாத்யயநத்தை விதிக்கும் வேதவாக்யம் சப்தராசியை நன்கு க்ரஹிக்கவேண்டுமென்பதற்காகவே வந்ததென்று கருத்து*

यः स्वार्थेष्वनिदम्पराः श्रुतिगिरः स्वाध्यायविध्याशयात्
आचष्टे ; स विकल्पमर्हति विधिः सार्थः किमास्थीयते ।
यद्वाऽनर्थक इत्यनेन वचसा तुल्यत्वमासां गिरा-
माद्ये स्यादितरत्र तत्प्रतिभटः किं स्यादकस्मात् विधिः ॥ ९९ ॥
यच्छ्रोतुर्गृहमेधिनो गुरुगृहे काष्ठोदकाद्याहृति-
व्यासक्तस्य न संभवत्यवसरस्तत्तत्स्वकर्मक्रमे ।

---

99 अर्थज्ञानोद्देशेनाध्ययनविध्यभावे अक्षरराशिग्रहणमात्रार्थत्वे वेदवाक्यं सर्वमर्थपरं न भवेदिति यदुक्तम्, तत् द्वेधा विकल्प्य निराकरोति **य** इति । **श्रुतिगिर** इति द्वितीयान्तम् । श्रौतशब्दराशीन् यः स्वार्थतात्पर्यरहितान् आचष्टे—रहितत्वेन कथयतीत्यर्थः । केन हेतुना ; तमाह **स्वाध्याये**ति । स्वाध्यायविधेराशयमस्मदुक्तमुपजीव्य । अक्षरराशिग्रहणमात्रार्थत्वपक्षे इति यावत् । **सः** पूर्वपक्षी **विकल्पमर्हति**। तं प्रति कश्चिद्विकल्पः क्रियत इत्यर्थः । तमाह **विधिरि**त्यादिना इतीत्यन्तेन । **विधिः** स्वाध्यायविधिः सार्थक इति मन्यते, निरर्थक इति वेति । **अनेने**त्यादिना **स्यादि**त्यन्तेन प्रथमकल्पदूषणम् । **आद्ये**=सार्थकत्वकल्पे तुल्यनयात् सर्वा गिरोऽर्थैदम्परा एव स्युः । **इतरत्र**=अनर्थकत्वकल्पे अध्ययनविधिना कस्याप्यर्थस्याबोधनात् अक्षरराशिग्रहणमात्रार्थत्वस्याज्ञापिततया कथमयं विधिः सार्थकत्वप्रतिभटः स्यात् । उभयथाऽप्यर्थपरत्वमक्षतमिति ॥ ९९ ॥

100 पुनरत्रार्वाचीनमीमांसकाः अस्मदुक्ते विकल्पं कल्पयन्तः शंकन्ते । तदाह **यदि**ति । अध्ययनविधेरर्थज्ञानार्थत्वाभावे शब्दग्रहणमात्रार्थत्वे अधीत्य स्नायादित्यस्य अध्ययनविध्यर्थानुष्ठानान्तरमेव समावर्तनविधायकत्वात् समनन्तरमेव गृहस्थो भवेत् । तदा कथं कर्मानुष्ठानम् अर्थज्ञानाभावात् ।

---

*உரைப்பதானால் வேதத்திற்குப் பொருளில் நோக்கில்லையா மென்று வேதாந்திகளை தூஷிக்கிறவர்களைக் கேட்போம் — அத்யயன விதிக்குப் பொருளில் நோக்கு உண்டா, இல்லையா? உண்டென்றால், இவ் வாக்யம் போலே மற்ற வாக்யமுமாம். அதனால் எல்லாம் பொருள் கொண்டவையே, இவ் வாக்யத்திற்கும் பொருள் இல்லையென்றால் அப்போது இந்த வாக்யம் அக்ஷரங்களை க்ரஹிப்பதற்காக அத்யயனத்தை விதித்ததென்ன வொண்ணாது. அப்போது வேறு வாக்யங்களுக்குப் பொருளில்லையென்று நாங்கள் சொன்னதாகக் கூறமுடியாது. ஆக மீமாம்ஸகரின் தூஷணம் நிற்காது. (99)*

*100 மீண்டும் மீமாம்ஸகர் கேள்வி — அத்யயனத்தை அர்த்தஞானத்திற்காக விதிக்கவில்லையாகில், அர்த்தம் அறிவதற்கு முன்னமே அத்யயனம் முடிந்துவிட்டதென்று க்ருஹஸ்தனாயிடுவான், பிறகு க்ருஹஸ்த்தகர்மங்*

स्याच्चेत् गुर्वनुवर्तनाद्यनुगुणः कुत्रावकाशो भवेत्
इत्युक्तं कतिभिश्चिदत्र कुशलैरित्थं समाधीयते ॥ १०० ॥

यद् वेदाक्षरराशिसिद्ध्युपरतः स्वाध्यायविध्याशयः
तत् तन्मूलकशिष्यकृत्यविरतेर्लब्धावकाशाः क्रियाः ।
श्रोतुः ; श्रावयितुर्यथेत्यवसरः श्रोतुश्च सिध्येत् तथा

---

अथोपनीतस्य सांध्यकर्मानुष्ठानमिव कञ्चित् कालं हितोपदेशिशिक्षामूलं तत् भवतु । पश्चात् विशदमर्थं भोत्स्यत इति चेत्—कथं बोधः । गुरुमुखादिति चेत्—तर्हि गुरुगृहे तत्परिचर्यारूपकाष्ठाहरणोदकाहरणादिव्यग्रस्य क्रमिकः शृंखलाबद्धः गृहस्थकर्मसंतानः कथमवसरं लभेत । अथैतद्भोगो मा भूदिति कर्मक्रमावसरः स्वीकृत इति स स्यादेवेति चेत्—तर्हि गुर्वनुवर्तनापेक्षितो यावानवकाशस्तावान् कथं भवेदिति । अत्रेति । अत्राक्षेपे वक्ष्यमाणश्लोकरीत्या समाधिः ॥ मेधृ संगमे । गृहिणी गृहमुच्यते । **गृहमेधी** गृहस्थः ॥ १०० ॥

101 समाधिमेवाऽऽह **यदिति** । **यदिति** यस्मादित्यर्थकम् । द्वितीयादे **तदिति** प्रथमं तस्मादित्यर्थकम् । अत्र विकल्पः—किं गृहस्थकर्मानुष्ठानावकाशो नास्ति, काष्ठाहरणादिगुरुकार्यव्यग्रत्वादित्युच्यते, किं वा गुरुकार्याभावेऽपि कर्मसंतानव्यग्रस्य श्रवणार्थमप्यवकाशो नास्तीति । आद्यांशनिरासः **श्रोतुरि**त्यन्तेन । अन्त्यनिरासः **श्रावयितु**रित्यादिना । अध्ययनविधेर्वेदानुपूर्वीधारणार्थत्वं यस्मात्, तस्मात् तच्छेषभूतत्वात् काष्ठाहरणादेः तत् कर्म गृहस्थस्य नाऽऽवश्यकम् । अतः श्रोतुरपि गृहस्थस्य ततो विरतत्वात् क्रियानुष्ठानावकाशः पूर्णः । अन्त्यस्तु न ; श्रावयितुर्गुरोरपि गृहस्थत्वातिशयात् तस्य तदधिकक्रियानुष्ठाने सत्यप्यवकाशोऽस्तीत्येषितव्यम् । अन्यथाऽध्ययनस्यैवानिष्पत्तेः । अतस्तद्वदेव पश्चादपि तस्य सत्यवकाशे श्रोतुः परं कथं स न भवेत् । नन्वध्यापनविधिबलाद् गुरुः प्रागध्यापयामास । तस्याक्षरग्रहणमात्रार्थत्वे गुरुर्विध्यभावात् शिष्यप्रार्थनायामप्युदासीः । सुतरां परिचरणमूलप्रीतेरप्यभावे इत्यत्राह

---

களான அக்னிஹோத்ராதிகளி விழிந்தவனுக்கு குருசுச்ருஷையாக விறகு தீர்த்தம் முதலான வஸ்துக்களைக் கொண்டு ஸமர்ப்பிக்க அவகாசமில்லையாகையால் அர்த்தவிசாரம் செய்யமுடியாதபடியாம். குருசுச்ருஷையிவிழித்தால் க்ருஹஸ்ததர்மங்கள் செய்ய ஸமயமில்லையாமென்று. இதற்கு ஸமர்த்தர்களான வேதாந்திகளின் ஸமாதானம் மேலே சொல்லுகிறபடியாம் (100)

101 அத்யயனவிதிக்கு சேஷமாக ஏற்பட்டவை குருசுச்ருஷையான பணிவிடைகள். விதிகார்யம் முடிந்தவுடன் அவையும் விலகும். ஆகையால் குருசுச்ருஷைக்கு நிர்பந்தமில்லை. க்ருஹஸ்ததர்மங்களைச் செய்யலாம், குரு கூறினும் இவனுக்குக் கேட்க அவகாசமில்லை யென்னவொண்ணாது; இவ

स्नेहेन स्पृहया च वित्तयशसोः शिष्यं गुरुः श्रावयेत् ॥ १०१ ॥
अर्चिरहस्सितपक्षा उदयनाब्दमरुदर्केन्दून् ।
अपि वैद्युतवरुणेन्द्रप्रजापतीन् आतिवाहिकान् आहुः ॥ १०२ ॥

---

स्नेहेनेति । कृपया निःस्पृहो वदेदिति पश्यन्तः परमकारुणिकाः परश्शतं सन्ति । पित्रादिरेव गुरुश्चेत्, सुतराम् । कस्यचित् गुरोः वित्तस्पृहाऽपि हेतुः स्यात् । अध्यापनविधिवादिभिः प्राभाकरैः आचार्यककामोऽध्यापयेदित्युक्तम् । अतो यशोविषयकस्पृहाऽपि क्वचिद्धेतुः । अत एवाध्यापनविधेरप्यनंगीकारात् स्नेहादिमूलमेवाक्षरराशिशिक्षणमिति तद्वदेवार्थशिक्षणमपीति ध्येयम् ॥ १०१ ॥

102 एवं पुरुषार्थाधिकरणगतस्य, 'अध्ययनमात्रवतः' इति सूत्रस्याप्यर्थशोधनात् अध्यायत्रयार्थसंग्रह आसीत् । एवं श्रुतोपनिषत्कानां फलाध्यायोक्ते देहावसानानन्तरभाविनि अर्थद्वयं मुमुक्षूणामसाधारणम् । अर्चिरादिगतिः भगवच्छेषैकरतितया तदनुभवरूपफलप्राप्तिश्चेति । तत्र प्रथमांशमर्चिरादिपादनिरूपितार्थनिष्कर्षेणाऽऽतिवाहिकेयत्ताप्रदर्शनेनाऽऽह **अर्चिरिति** । **अर्चिः**=अग्निः । अर्चिरादिशब्दाः न भोगभूमिपराः, न वा मार्गचिह्नपराः ; किन्त्वातिवाहिकदेवतापराः इति निर्णीतम्, "आतिवाहिकास्तल्लिंगात्" इति सूत्रे । **अगूतिवाहिकाः=अतिवाहे**—मुमुक्षोः तत्तत्स्थानातिक्रमार्थसबहुमानप्रापणे नियुक्ताः । इमे द्वादश क्रमात् अग्निः, अहर्देवता, शुक्लपक्षदेवता उत्तरायणदेवता संवत्सरदेवता वायुः आदित्यः चन्द्रमाः, वैद्युताख्यो मानसापरनामा चामानवः, वरुणः इन्द्रः ब्रह्मा चेति । तत्रामानतस्तु वरुणेन्द्रप्रजापतिदेशानन्तरमपि आब्रह्मप्राप्ति मुमुक्षुनेतेति विशेषः ॥ १०२ ॥

---

னுக்கு மேல் மஹாக்ருஹஸ்த்தராய் பெரிய குடும்பியான குருவுக்கே அவகாசம் கிடைக்கிறபோது இவனுக்கு ஏன் கிடைக்காது? ஆனாலும் சுச்ருஷை பெறுமல் குரு கூறுவரோ என்னில், ஸ்னேஹத்தினுல் கூறலாம். த்ரவ்யம் பெறுவது காரணமாகக் கூறலாம். ஆசார்யன் என்கிற புகழுக்கு விரும்பியும் கூறலாம். (101)

102 இப்படி குருவினிடம் கேட்டுத் தெளிந்து கர்மானுஷ்டானத்துடன் வேதத்தில் ஓதிய தத்துவ ஹித புருஷார்த்தங்களில் நிஷ்ட்டையுடையனுய் உபாயத்தை யனுஷ்டித்தானுகில், ப்ரஹ்மஸூத்ரத்தில் நான்காம் அத்யாயத்தில் முமுக்ஷுவுக்கென்று சொன்ன அர்ச்சிராதி கதியைப் பெறலாம்; பிறகு பலன். அர்ச்சிராதி கதியென்றுல் அக்னி முதலான தேவதைகள் மர்யாதையாய் அழைத்துச் செல்ல அவர்கள் காட்டும் வழியே பரமபதம் நடப்பதாம். அவர்கள் ஆதிவாஹிகர்கள்—நடத்துகின்றவர்கள். அவர்கள் தேவதைகள், அப் பன்னிருவரின் பேர்கள் பின்வருமாறு—அக்னி. பகல், சுக்லபக்ஷம், உத்தராயணம், ஸம்வத்ஸரம், காற்று, கதிரவன். சந்த்ரன்,

शेषत्वं ननु दुःखमीक्षितमतो मुक्तेषु युक्तं न तत्
मैवं माधवदास्यमौपनिषदं जागर्ति भूयः प्रियम् ।
धर्मिग्राहकमानधिक्कृतमतस्तद्दुःखतासाधनम्

103 ननु मोक्षे आनन्दमयब्रह्मणा परमसाम्यं श्रौतं भोगसाम्यं सौत्रञ्च सुस्वीकरम् । यत् तत्र अविभागेन दृष्टत्वादिति सूत्रविवक्षितत्वेनाभिमतं शेषत्वं कामरूप्यनुसंचरन् इति, तदिच्छानुसारिचेष्टितादि च, तन्नोपपद्यते ; तत्र दुःखस्यावर्जनीयत्वात् । शेषत्वं दुःखरूपं शेषतात्वात् राजशेषत्ववदित्यनुमानात् । न चात्र व्याप्तिभंगः, दुःखरूपत्वेनैवेक्षितत्वात् । नियमभंगादर्शनात् । दुःखेष्टौ च मुक्तत्वभंगादिति शंकामुद्भाव्य निरस्यति **शेषत्व**मिति । **दुःखत्वं** प्रतिकूलतया वेद्यमानत्वम् । परिहरति **मैव**मिति । अयमर्थः—किमवच्छेदकावच्छेदेन साध्यसिद्धिरिहोद्दिश्यते, उत सामानाधिकरण्येन । नाद्यः, दर्शादिप्रधानकर्मनिरूपितं यत् प्रयाजाद्यंगे शेषत्वम्, यच्च लोके गृहाद्यचेतनानां शेषत्वम्, तस्य शेषवस्तुनि दुःखहेतुत्वाभावात् । अथ शेषत्वमिति चेतनगतशेषत्वमेव विवक्षितमिति चेत्—न ; तदपि यत्र कैङ्कर्यरूपव्यापारे पर्यवसानं विना स्वरूपयोग्यतारूपेणैवास्ति, तत्र दुःखाभावात् । तर्हि दासकृत्यमेव पक्षः, सेवा दुःखरूपा सेवात्वादित्येवोक्तं भवतीति चेत्—यादृशसेवाव्यक्तिः दुःखलेशमप्यनुत्पाद्य सुखस्यैव हेतुरासीत्, तत्र व्यभिचारः । न च किञ्चित्पुरुषनिरूपितदीर्घकालानुवृत्तसेवासमुदायः दुःखरूपसेवाघटितः तादृशसमुदायत्वात् राजसेवासमुदायवदिति वाच्यम् ; एवमप्यवच्छेदकावच्छेदेन तत्साधने, मोक्षकालिके माधवदास्ये दासेन स्वेच्छया सोत्साहं क्रियमाणे, 'न रोगं नोत दुःखताम्' इति धर्मिग्राहकश्रुतिप्रमाणसिद्धं दुःखत्वराहित्यमिति तत्र साध्यबाधात् हेतुर्दुष्टः । एतेन माधवदास्यमेव विशिष्य पक्षीकृत्य दुःखत्वसाधनमपि निरस्तम् । **भूयः प्रिय**मिति । स्वानुभवभगवदनुभवोभयापेक्षया तत्कैङ्कर्यमधिकप्रियम्, तथा तत्र स्वामिनः प्रियत्वापेक्षया दासस्य प्रियत्वमधिकम् । अतः सुखत्वमेवेत्यर्थः । सामानाधिकरण्येन साधनमिति

---

*மின்னற் புருஷன், வருணன், இந்த்ரன், பிரமன் என்றவாறு, (இவர்களில் மின்னற்புருஷனென்ற அமானவன் வருணனுக்கு முன்னே வந்தவன், விடாமல் தொடர்ந்து பிரமன் விலகினபிறகும் கூடவே பரப்ரஹ்மத்தினிடம் சேரும் வரையில் இருப்பான். (102)*

*103 பரமபதத்தில் பெறும் பேறு என்ன? ஆனந்தானுபவமே யென்றால் தகும். எம்பெருமானுக்கு சேஷனகை அதாவது அடிமை யென்னில், அது தகாது. அடிமை யெல்லாம் துக்கத்தையே விளைக்குமே—என்னில், எந்த அடிமையும் துக்கமென்ன வொண்ணது. அன்பார்ந்த எஜமானன எம்பெருமானுக்கு அன்புடன் செய்யும் அடிமை பரமபதத்தில். அது எவ்வாறு துக்கமாகும்? அங்கு துக்கமாகவே ஒன்றுமிராதென்று வசனமிருக்க, அதற்கு முரணாக உங்கள் கல்பனை நிற்காது. வேறு அடிமைகள்*

यद्वा तद्व्यतिरिक्तदास्यमसुखं साध्येत सिद्धं हि तत् ॥ १०३ ॥
वरदाह्वयमण्डनो मनीषी यतिबृन्दारकभागिनेयपौत्रः ।
निगमान्तपयोधिकर्णधारो विदधे विश्वहिताय तत्त्वसारम् ॥ १०४ ॥
इति श्रीवात्स्यवरदगुरु (नडादूर्-अम्माळ्) विरचितः
तत्त्वसारः ॥श्रीरस्तु ॥

---

द्वितीयपक्षे दोषमाह **यद्वेति**। क्वचित् दुःखत्वसाधनं बाधितमित्युक्तत्वात् तद्व्यतिरिक्तं दास्यं माधव-व्यतिरिक्तसुरनरादिप्रतियोगिकं दास्यमेवात्रासुखत्वेन साध्येतेत्यर्थः। **मैवमिति** अत्राप्यनुषज्यते। तत्र हेतुमाह **सिद्धं हि तदिति**। राजसेवादेर्दुःखत्वस्य सर्वेष्टत्वात् सिद्धसाधनरूपो दोष इति भावः। श्लोके स्वरसोऽन्यः पाठः स्यादपि। तदेवं परतत्त्वपरमहितपरमपुरुषार्थाः समग्राहिषत ॥ १०३ ॥

104 अथ प्रबन्धृवैलक्षण्यं विशिष्य प्रदर्शयन् निगमयति **वरदेति**। **वरद** इत्याह्वयः=नाम भगवन्नाम स्वपितामहनामैकदेशश्च **मण्डनम्** अलंकारो यस्य सः। प्रणतार्तिहरवरदपरब्रह्मवत् अयमप्या-श्रितापेक्षितप्रदो विश्वप्रसिद्धश्च भविष्यतीति, तदेव नाम महद्भिः कृतम्। तदस्य महद् भूषणम्। वस्तुतो **वरदाह्वयस्य** भगवतो मण्डनः शोभातिशयप्रदः, स्वयं तत्सन्निधौ संनिधाय श्रीभाष्यप्रवचनेन। स हि तत्र यादवप्रकाशप्रवचनमधः कृत्वा श्रीयतिराजसूक्तिप्रवचनमूर्ध्वमनुमेने। **मनीषी** श्रीविष्णुचित्तपदपंकजसंगम-संपन्ननिरतिशयमननशक्तिः। इतरदुर्लभं श्रीभाष्यकारदिव्यमंगलविग्रहसंबन्धमप्याह **यतीति**। यतिः बृन्दारक इव यतिबृन्दारकः, बृन्दारको दैवतम्। "बृन्दारकनागकुञ्जरैः पूज्यमानम्" इति विशेष्यस्य पूर्व-निपातः। पूज्यमानत्वरूपः सामान्यधर्मः। यतिराजस्य **भागिनेयः** भगिन्याः पुत्रः। यदाहुः, 'भूमि-कमलाभिधाने पुण्ये रामानुजार्यसोदर्यौ' इति। उत्तरार्धं **रत्नसारिण्याम्**, 'याभ्यामुभावभूतां पुत्रौ

---

துக்கரூபமென்போமென்னில், அதை நாங்களும் இசைந்திருப்பதால் எங்களுக்கு நீங்கள் புதிதாகத் தெரிவிப்பது-சாதிப்பதொன்று மில்லையாம் (103

104 இனி க்ரந்தம் பூர்த்திசெய்யப் பெறும், ஸ்ரீபாஷ்யகாரரின் உடன்பிறந்தாளின் புதல்வரான நடாதூராச்சானென்ற ஸிம்ஹாஸநாதிபதி வரதவிஷ்ணுவாசார்யரின் பேரனும் ஸ்ரீதேவராஜாசார்யரின் குமாரனுமாய் வேதாந்தக் கடலில் கப்பல் ஓட்டி எங்கும் சென்று கரையும் காணச்செய்யுமவராய் வரதனென்ற பேரை பூஷணமாகக் கொண்ட ஒரு ஞானி, தம்மிடம் வேதாந்தாத்யயனம் செய்பவர் செய்யாதவர் பிற்காலத்தியவர் எல்லோருக்கும் ஹிதமாக இந்தத் தத்துவஸாரக்ரந்தம் இயற்றியதாகவறிக.

ஸ்ரீமதே வாத்ஸ்யவரதார்யகுரவே நம:
தத்துவஸாரமொழிபெயர்ப்பு முற்றும்
சுபமஸ்து.

—o—o—

दाशरथिवरदनामानौ' इति । **तत्त्वसारास्वादिन्यां** तु 'ये द्वे उभावसूतां पुत्रौ दाशरथिवरदविष्ण्वार्यौ' इति । वरदविष्णुरित्येव तन्नामधेयं सर्वसंमतम् । श्रीभाष्यकारमातृतत्स्वस्रोरपि भूश्रीनामवत्त्वं प्रसिद्धम् । (अत्र सोदर्यौः பூமா, கமலா इति नामनी स्याताम्) यथासंख्यं तयोर्दाशरथिः (முதலியாண்டான்) वरदविष्णुश्च (नडदूर् आळ्वान्) पुत्रौ स्याताम् । दाशरथिविषयेऽन्यत् पद्यमाहुः 'इतरसुलभा किमेषा भाषा वाधूलदाशरथिरेकः । न परित्यक्तस्त्यजता बन्धूनिति सदसि लक्ष्मणार्यकृता' इति । बन्धून् त्यजता संन्यस्यता भाष्यकृता बन्धवस्त्यक्ताः ; दाशरथिं न त्यजामीत्युक्तम् । एवं लक्ष्मणाचार्यकृता भाषा=तदीया वाक् दाशरथिविषये इति तत्र प्रेमातिशयो भाष्यकृतामिति । एतावता वरदविष्ण्वार्यो भागिनेयः उपेक्षित इति न मन्तव्यम् ; सिंहासनाधिपतित्वेन परिगणिते अन्तरङ्गशिष्यत्वकृतस्य प्रेम्णोऽनपलप्यत्वात् । दाशरथिप्रशंसाऽपि रक्तसंबन्धनिबन्धना तत्संबन्धरहितव्यक्त्यन्तरादतिशयमेवाऽऽविष्कुर्यात् । 'कमलाख्ययतिश्रेष्ठकनिष्ठकुलवर्धनः,' "प्रियस्वस्रीयताराज्यं प्राज्यमासीत् यतीशितुः," प्रियस्ते भगिनीसुतः श्रुत्यन्तद्वयपीठाधिपत्यतामेतु नेतरः" इति चाहुः । तस्य **पौत्रः**=पुत्रपुत्रः । पुत्रस्य नाम श्रीदेवराजाचार्य इति । पितृचरणसविध एवास्य सांगोपाङ्गसर्ववेदग्रहणम् ; यदुच्यते, 'आम्नायानध्यगीष्ट स्वपितृचरणतः साकमङ्गोत्तमाङ्गैः' इति । वेदान्तविषयेऽध्याचार्यकं वोढुमर्होऽपि, 'वैशद्यातिशयं पुत्रो लभताम्, न ह्यदृष्टार्थमेवाध्ययनम्' इति पुत्रं श्रीविष्णुचित्तार्यसंनिधौ अध्येतुमाज्ञापयामास ॥ वंशमूलकं गौरवमुदितम् । तस्य ग्रन्थनिर्माणप्रवचनाद्यनुपयोगित्वात् तत् मुख्यमाह **निगमान्ते**ति । निगमान्तः वेदान्त एव **पयोधिः** समुद्रः । तस्य **कर्णधारः** नाविकः । ननु संसारपयोधिसंतारकत्वे वक्तव्ये वेदान्तपयोधेस्तरणं कथमुच्यते ; अस्य लंघनीयत्वाभावात् । अत एव भाष्ये, एतं सेतुं तीर्त्वेत्यत्र तरणं प्राप्तिः वेदान्तं तरतीत्यत्रेवेत्युक्तम् ॥ उच्यते । शास्त्रपारदृश्वेति प्रयोगात् पारप्राप्तिरप्यपेक्षिता । सा नावैव साध्येति । एवं निगमान्तपयोधावतिविस्तृते अनन्तवेदशाखासंबद्धे यद्यत्प्रदेशप्राप्तिरपेक्षिता (यद्यद्वाक्यं विचार्य निर्णेयम्) तत्रतत्र गमनमेतदाचार्यकृताध्यापनरूपनौसमारोहैकसाध्यमिति पयोधिकर्णधारत्वम् । काश्चन नौका अन्तर्जलमवगाह्यापि गच्छेयुः, उपर्यपि ॥ एवं **निगमः** नगरम् श्रीवैकुण्ठनगरम्, तत् **अन्ते** अवधौ यस्य तस्य **पयोधेः** संसारसमुद्रस्य तारकत्वादपि कर्णधारता । कर्णधारपदप्रयोगात् श्रोतॄणां कर्णौ धारयति सावधानस्थितौ करोतीत्यप्यर्थ उक्तः । निगमान्तपाः=वय्यन्तनिष्णाताः तद्योधिनां विरोधिनामपि कर्णौ वशे स्थापयतीति वा ॥ **विश्वस्य**=साक्षादेव श्रोतॄणामन्येषां प्रदेशान्तरस्थानां भाविनाञ्च प्रतिपन्नानां तत्त्वसारास्वादिन्या तत्त्वज्ञानं भूयादिति मत्वा विश्वस्मै हितम्, अधिकपरिश्रमाक्षमसारबुभुत्सु सर्वलोकमुद्दिश्य तत्त्वसाराख्यमिमं ग्रन्थं **विदधे** विरचयामास । ननु भूतानद्यतनपरोक्षे लिट् । न चायं लडन्तः ; ग्रन्थावसाने वर्तमानप्रयोगायोगात् । तत्र भूतत्वेऽप्यनद्यतनत्वं परोक्षत्वञ्च कथम् । न हि स्वकीयं रचनं स्वस्य परोक्षं भवति । अतोऽयं श्लोकः कस्यचित् शिष्यस्य स्यात् ॥ नैवम् ; पूर्वश्लोकपर्यन्ते निष्पन्ने तद्दिने कार्यान्तरवक्तव्यान्तरचिन्तया तूष्णीम्भूय

दिनान्तरे एतत्पसद्यनिर्माणादनद्यतनत्वं सुगमम् । परोक्षत्वं तु एतद्ग्रन्थविधाने वरदाह्वयैक्येऽपि न मत्कृतम्, किंतु भगवता वरदेनैवेति सात्त्विकत्यागसंपन्नः एतत्कृतिर्भगवन्निष्ठेति स्वपरोक्षां मन्यत इति सूपपन्नम् । एतत्प्रतिपाद्यार्थानुभवपारवश्यात् अनायासकथनाच्च स्वकृतौ स्वस्यावधानाभावं वा लिटा सूचयति । तत्त्वहित-पुरुषार्थरूपशारीरकतत्त्वसारप्रतिपादकत्वात् ग्रन्थोऽपि तत्त्वसारः ॥

(1) श्रीभाष्यं सूत्रभाष्येष्वधिगतविभवं तस्य गम्भीरिमाणं
द्रष्टुं शिष्टा विशिष्टाः, कतिचिदधिकृताश्चात्र पीठाधिपत्ये ।
आलोड्यास्याक्षराणि स्वपरमतिपदस्वीकृतिन्यक्कृतिज्ञः
कोऽन्यः श्रीवत्सवंश्यात् वरदगुरुवरात् श्राविताशेषभागात् ॥

(2) तद्ग्रन्थरीतिगतितत्परसाधुवृन्दं नातिश्रमक्षममतिं नतपादपद्मम् ।
सारार्थधारणचणं समनुग्रहीतुं श्रीतत्त्वसारमखिलेड्यमयं व्यतानीत् ॥

(3) श्रीरङ्गलक्ष्मणमुनीन्द्रकृपात्तबोधः श्रीवीरराघवकृती स्वशताभिषेकम् ।
कूटस्थवात्स्यगुरुराड्वरिवस्ययेत्थं धन्यं विधित्सति हयास्यपदाब्जभक्तः ॥

इत्यभिनवदेशिकस्य वात्स्यसच्चक्रवर्तिनो
वीरराघवाचार्यस्य कृतिषु
श्रीतत्त्वसारव्याख्या वात्स्यवरिवस्या ॥

॥ श्रीरस्तु ॥

## विषयसूची

श्लोकसंख्या

अत्र विप्रकीर्णानेकाधिकरणार्थैकदेशान्यान्यकथनान्न विशिष्ट एकोऽर्थ इति न शंक्यम् । श्रीशारीरकप्रमेयं ब्रह्म नारायण एवेति निष्कष्टुमेवायं प्रबन्धः । तत्रोपोद्घातद्वयानन्तरं ब्रह्मणोऽचेतनवैलक्षण्यस्थापनार्थे आदेशशब्दार्थविचारः । आनन्दमयत्वस्थापनाय पुच्छब्रह्मनिरासः । तस्य पुण्डरीकाक्षनारायणत्वप्रतिष्ठापके अनन्तराधिकरणे कप्यासशब्दार्थशोधनम् । आदित्यान्तर्वर्ति तत् परंज्योतिरेवेति ज्ञापनाय यदतःपरो दिवो ज्योतिरिति वाक्योपस्थितौ गायत्रीसादृश्यप्रकारविचारः । तस्य 'स यश्चायं पुरुषे' इत्युक्तरीत्या सर्वान्तर्यामित्वज्ञापनायान्तर्याम्यधिकरणग्रहणात् तत्र तमश्शब्दार्थविमर्शः । प्राणशब्दवाच्यजीवतत्त्ववेदिनो वास्तवातिवादित्वाभावस्थापनात् जीवातिरिक्तत्वदृढीकरणाय भूमाधिकरणग्रहणे तत्र प्रसक्तशोधनम्, अन्तर्यामित्वमिदं देवताः प्रत्यपीति सर्वदेवतागतनिकर्षनिवेदनाय देवताधिकरणविचारः । वेदस्यानित्यार्थसंयोगरूपदोषपरिहाराय इन्द्रत्वादिधर्मस्वरूपशोधने आकृत्यतिरिक्तजातेः भेदादिरूपाभावपदार्थस्य च निराकरणम्, एवमाकृतिविचारात् आकृत्यधिकरणेऽप्येतद्विषयाज्ञापनेनाकृत्यधिकरणे मीमांसकमतवैलक्षण्यज्ञापनेन विशिष्टवाचित्वस्थापनम्, तथैवारुणाधिकरणशिक्षणेन समानाधिकरणवाक्यानां विशिष्टैकार्थपरत्वव्युत्पादनम् । एवं देवताधिकरणप्रसंगप्राप्तविषयसमाप्तौ सर्वान्तर्यामिनारायणसिद्धौ पुनराक्षेपः, अन्तर्यामित्वे जीवस्वातन्त्र्यहानिरिति । तदर्थं परायत्ताधिकरणार्थः । एवंभूतविशिष्टतत्त्वे शारीरकार्थे सति निर्विशेषब्रह्मवादिमायामतमयुक्तमिति प्रपञ्चनेन सगुणत्वस्थापनम्, सगुणत्वेऽपि नारायणातिरिक्ततेति शैवदुराक्षेपप्रतिक्षेपविस्तरश्च । ईदृशार्थे वेदतात्पर्यस्यान्यथाकरणायोगस्थापनं पश्चात् । अथार्चिरादिप्राप्त्युपयुक्तोपायोपदेश उपेयोपदेशश्चेति । एष तत्त्वसारसारः । अतिप्रौढया वाग्झर्या प्रौढानेकशास्त्रपारदृश्वपरश्शतशिष्यप्रतिबोधनप्रवृत्तानामेषामाचार्याणां शास्त्रज्ञानविधुर आस्तिकसाधुसमाजोपयुक्तग्रन्थकरणमावश्यकमिति दयाप्रेरितमानसानामीदृशाः सर्वोपयोगिनो ग्रन्था इति ॥

॥ शुभमस्तु ॥